श्रीमच्छंकराचार्यप्रणीता

# उपदेशसाहस्री

(गद्यपद्यप्रबन्धः)

श्रीरामतीर्थविरचितया

पदयोजनिकाख्यया टीकया संवलिता

---


## दिनकर विष्णु गोखले, बी. ए.

इत्यनेन संशोधिता परिष्कृता च



मुम्बय्यां

कोट सासुन बिल्डिंग न. ८ इत्यत्र

मणिलाल इच्छाराम देशाई इत्यनेन स्वीये

'गुजराती' मुद्रणालयेऽङ्कयित्वा

तत्रैव प्रकाशिता ।

---

सं. १९७४ खिस्ताब्दः १९१७

मूल्यं सार्धरूपकम् ।

the above (7), even its gross mistakes being repeated

(9) Mysore edition

(10) Shri Vani Vilas Press edition

These last two are very good editions except that the Vani Vilas Press edition does not give the gloss. In the Mysore edition some attempt at punctuation and identification of some of the quotations is made. There are, however many inaccuracies of one kind or another. The dominant consideration with me has been this, that for want of an easily available critical edition of Shri Shankaracharya's works so close in tissue and so profoundly charged with vital matter the difficulty of mastering these classical works has been seriously aggravated nay multiplied manifold. I do not therefore feel that any apology is necessary for the appearance of yet another edition of this important treatise of Shri Shankaracharya. But this task is undertaken with great scruple and reverence. Certain special features distinguish this edition too from others as they do my edition of *Taittiriyōpanishad*. The task of editing the present issue has not been exactly a light one for on critically examining the extant editions I found them very faulty, words left out altogether, wrong words substituted for right, mis division of words, absence of punctuation, mispunctuation, quotations not marked or mixed together, absurd or meaningless readings adopted &c. These defects I have tried to remove. I have generally given only those readings that yield some meaning; in a few cases I have given absurd readings adopted in some editions as specimens of editorial care and ability. Special attention has been paid to punctuation which is an indispensable aid to quick reading and intelligibility. An analytical summary of the whole work is given at the beginning. I have ventured to add a few notes in part explanatory and in part

illustrative. In the prose section I have given headings, and in the metrical section the title and number of the chapter, on the right-hand side of the page as useful guides to the reader and to the eye of the searcher. An exhaustive index is appended at the end, giving not only the first *pâda* or quarter of each stanza, but such *others as are frequently quoted, or have passed into maxims, or are* aphoristic in form, stating some broad philosophic truth of general bearing Not without labour I have prepared another exhaustive index of the numerous quotations introduced generally by a श्रुते or a स्मर्यते without any further clue as to their origin, in which the text and the gloss in all its parts are so rich, because an accurate determination and full understanding of the text and the gloss becomes thereby possible for the first time. This index includes also Nyayas (maxims, proverbs), aphorisms &c A few quotations which I was not able to trace when the pages containing them were printed, have been since traced and their sources given in this index. A few numerical inaccuracies which have crept into the figures attached to quotations in the body of the work will be found corrected in the index

My best thanks are due to my friend Mr Ambalal M Engineer, B A, LL B, for his valuable help, in the first 125 pages in correcting and punctuating the text and in collating the Mss I am indebted also *to my friend Mr Tansukhram S Tripathi B A* for lending me some valuable Sanskrit books and for suggesting to me the earliest sources of two important quotations. I am grateful also to my friend Mr Hiralal B Shroff, B A for lending me some books of reference

B

From the point of antiquarians special interest attaches to the verses 142–143 on page 380 as affording a datum for fixing the

date of Shri Shankeracharya But this is a large question which can not be discussed here.

If Shri Ramatirtha the author* of the gloss be the same as Shri Ramatirtha the *guru* of Shri Anantadeva who lived during the reign of King Baj Bahadur (1644–1664 A D), his date must be about the same

Besides Shri Ramatirtha's gloss on the metrical version there are two other glosses—one by Bodhanidhi and the other by Ânandajnâna *But I was unable to secure them* Letters of inquiry, even after reminders, remained unanswered by the Librarians, who are the custodians of these Mss This indifference and dog-in the manger policy deserves severe condemnation at the hands of Sanskrit scholars

It is believed the present volume will not only contribute to the intelligent study of it but to a fuller realization of the Divine Truth enshrined in its pages—

> बुद्ध्यारूढं सदा सर्वं दृश्यते यत्र तत्र वा ।
> मया तस्मात् परं ब्रह्म सर्वज्ञश्चास्मि सर्वग. ॥
>
> —उप सा ७. १.

Bombay
13th Jan 1917 } DINKER VISHNU GOKHALE

---

* He is also the author of (1) मैत्र्युपनिषद्दीपिका, (2) विद्वन्मनोरञ्जनी-वेदान्तसारटीका (3) अन्वयार्थप्रकाशिका-संक्षेपशारीरकटीका (4) पञ्चीकरणविवरणतत्त्वचन्द्रिका, (5) मानसोल्लासवृत्तान्त, (6) चिदानन्दलहरीटीका (as yet unpublished).




# विषयानुक्रमणिका

## गद्यप्रबन्धः

### शिष्यानुशासनप्रकरणम्–पृ. १–५०

## कूटस्थाद्वयात्मबोधप्रकरणम्–पृ. ५०–९६

३ परिसंख्यानप्रकरणम्-पृ. ९६-१०२

## पद्यप्रबन्धः

### १ उपोद्घातप्रकरणम्–पृ. १०३–१२२



### २ आत्मज्ञानोत्पत्तिप्रकरणम्–पृ. १२३–१२६



### ३ ईश्वरात्मप्रकरणम्–पृ. १२७–१२९



### ४ तत्त्वज्ञानस्वभावप्रकरणम्–पृ. १२९–१३२



### ५ बुद्ध्यपराधप्रकरणम्–पृ. १३३–१३६

१२ प्रकाशप्रकरणम्–पृ. १७१–१८३



१३ अचक्षुष्ट्वप्रकरणम्–पृ. १८४–१९४



१४ स्वप्नस्मृतिप्रकरणम्–पृ. १९४–२१७

### १५ नान्यदन्यत्प्रकरणम्–पृ. २१८–२४२



### १६ पार्थिवप्रकरणम्–पृ. २४३–२७९

१७ सम्यङ्मतिप्रकरणम्–पृ. २८०–३२२



१८ तत्त्वमसिप्रकरणम्–पृ. ३२२–४१९

१९. भेयजप्रयोगप्रकरणम्–पृ. ४२०–४४१

# उपदेशसाहस्री

## गद्यप्रबन्धः

### शिष्यानुशासनप्रकरणम्

ओम् ॥ अथ मोक्षसाधनोपदेशविधिं व्याख्यास्यामः

भगवते नमः ॥ ॥ ॐ नमः श्रीपरमात्मने ॥

प्रणम्य रामाभिधमात्मधीमदं जगत्प्रसूतिस्थितिसंयमायनम् ।
तदात्मकाच्छंकरपूर्वकान् गुरून् मयोपदेशार्थविभाग उच्यते ॥

इह भगवत्पादाभिधो भगवान् भाष्यकारः, सर्वोपनिषदर्थसारसंग्राहिकामुपदेशसाहस्रीं गद्यपद्यविभागप्रथरचनया प्रकटीकुर्वन् आदौ गद्यग्रन्थमारभमाणः प्रारीप्सितपरिसमाप्तिप्रचयगमनाविघ्नप्रयोजनं शिष्टाचारविशेषपरिप्राप्तं मङ्गलमाचरति—अथेति ॥

" ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ "

इति स्मृतावथशब्दस्य माङ्गलिकत्वावगमात् । अथवा—आनन्तर्यार्थ एवायमथशब्द उच्चारणमात्रेण मंगलप्रयोजनोऽपि भवति, अन्यार्थं क्रियमाणमृदङ्गादिध्वनिश्रवणवदित्यत् । किमानन्तर्यार्थतेति चेत्—विस्तरेणानेकशास्त्रार्थनिबन्धनिर्माणानन्तर्यार्थतेति वदामः, प्रश्नप्रतिवचनाक्षेपसमाधानप्रकारैरनेकप्रमाणयुक्तिविशेषैर्निपुणतरमवधारिते समस्तोपनिषच्छास्त्रार्थेऽनेकवाक्यानुसन्धानव्यवधानमन्तरेण साक्षादनुभवोदयाय समहनिरूपणप्रवृत्त्युपपत्तेरिति । अत्र चिकीर्षितं प्रतिजानानः प्रवृत्त्यङ्गतया शास्त्रीयानुबन्धजातं

---

( १ ) 'भगवता'—पाठ. ।( २ ) [२]( ३ ) 'जानत'—पाठ. ।

## मुमुक्षूणां श्रद्दधानानामर्थिनामर्थाय ॥ १ ॥
## तदिदं मोक्षसाधनं ज्ञानं साधनसाध्यादनित्यात्सर्वस्माद्विरक्ताय

सगृह्णाति—मोक्षसाधनेति । अथ—विस्तरेण शास्त्रार्थनिरूपणानन्तरम् । मोक्षो निष्प्रपञ्चब्रह्मात्मताविर्भावः, तस्य साधनमौपनिषदाद्वितीयात्मतत्त्वज्ञानम् । तस्योपदेश —उपदेशनमुपदेश —तदर्थवाक्यानामर्थविभागेन शिष्य प्रति प्रतिपादन, तस्य विधि प्रकारविशेष, त यि स्पष्ट आख्यास्याम कथयिष्याम । मोक्षशब्देन प्रत्यक्तत्व ब्रह्म विषयो निर्दिष्ट । साधनशब्देन—तत्त्वज्ञानस्योक्तत्वात्—तत्साध्याज्ञानादिबन्धनिवृत्ति प्रयोजन सूचितम् । उपदेशविधिश दन सबन्धो बोध्यबोधकलक्षण शास्त्रविषयो दर्शित ।

इदानीमधिकारिणमाह—मुमुक्षूणामिति । मुमुक्षूणा मोक्षमात्रमिच्छतामिति । अनेनैहिकामुष्मिकार्थतृष्णालेशवतामप्यत्रानधिकार इति सूचितम् । श्रद्दधानानामस्मिन्नुपदेशशास्त्रार्थे विश्वासवतामिति । अनेन मुमुक्षवोऽपि सन्त, ये कर्मस्वन्यशास्त्रेष्वपि वा श्रद्दधत, तेषामिहानधिकार सूच्यते । अर्थिना—एतच्छास्त्रार्थज्ञानार्थिनामिति । अनेन श्रद्दधाना अपि ये पाण्डित्यविस्तरप्रवणमतयस्तेषामिहानधिकारो ध्वनित । तथा चैवविधानामधिकारिणामर्थायोपकाराय व्याख्यास्याम इत्यन्वय ॥ १ ॥

सग्रहणोक्तमर्थ विवृणोति—तदिदमिति । तदिद मोक्षसाधन ज्ञान विधिवदुपसन्नाय शिष्याय ब्रूयादित्यन्वय । तत्—ग्रन्थान्तरेषु विस्तरेण प्रतिपादितम् । इदम्—इदानीमिह वक्ष्यमाणमित्यर्थ । किं तत् ?—मोक्षसाधन सहेतुबन्धनिवृत्त्या ब्रह्मात्माविर्भावस्य निमित्त यदुक्त, तदिद ज्ञान वक्ष्यमाणमित्यर्थ । मोक्षसाधनपद व्याख्यातम् । 'उपदेशविधिपदम्'

---

(१) अर्थवि—पाठ । (२) ब्रह्मता —पाठ । (३) अथवादवि —पाठ । (४) सूचित —पाठ ।

त्यक्तपुत्रवित्तलोकैषणाय प्रतिपन्नपरमहंसपारिव्राज्याय शमदम-

अग्रे शिष्याचार्यप्रभादिपरम्परया व्याख्यास्यन् मुमुक्षूणामित्याद्युक्तमधिकारिणं व्याचष्टे—साधनेत्यादिना । संग्रहेऽधिकारिबहुत्वनिर्देशः प्रदर्शनार्थः, न तु विवक्षितः । अत एव विवरण एकवचनम्—एकात्मवादे बहूनां निरपेक्षाणां मुमुक्षूणामसंभवादिति ।

"नाविरक्ताय संसारात्, नानिरस्तैषणाय च ।"

इत्यादिशास्त्रमुररीकृत्याह—साधनसाध्यादिति । साधनैर्दृष्टादृष्टार्थैः कृष्यादियागादिभिः साध्यादैहिकादामुष्मिकाच्च भोग्यजातात्, अत एवानित्यादशाश्वतात्सर्वस्माद्ब्रह्मलोकान्तादपि विरक्ताय वीतरागाय निवृत्ताभिलाषायेत्यर्थः ।

कथमवगम्यतेऽयं विरक्तः ? इत्यपेक्षायां विशेषणान्तरेण विरक्तचिह्नमाह—त्यक्तेति । अत्रैषणाशब्देन कामापरपर्यायेण तत्प्रयुक्ता प्रवृत्तिर्लक्ष्यते । तत्र पुत्रार्थं दारसंग्रहे प्रवृत्तिः पुत्रैषणा । कर्माद्यनुष्ठानार्थमपरविद्यागवादिरूपोभयविधवित्तपरिग्रहो वित्तैषणा । पुत्रकर्मापरविद्यासाध्यैतल्लोकपितृलोकदेवलोकफलैषणा लोकैषणा । एता एषणास्त्यक्ता येन तस्मै । साधनेषु प्रवृत्त्यौत्सुक्यत्यागादेव साध्याभिलाषशून्यता गम्यत इत्यर्थः । तथा च श्रुतिः—" न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः " इति । इदानीं " एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ", " तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत् " इत्यादिशास्त्रमनुरुध्याह—प्रतिपन्नेति । परमहंसविशेषणं कुटीचकादिस्मार्तसंन्यासिव्यावृत्त्यर्थम् । न

( १ ) नै. सि. ४. ७१. ( २ ) विमत'—पाठः । ( ३ ) महाना. उ. १०.५. ( ४ ) ईप्सन्तः—माध्यन्दिनपाठः । ( ५ ) बृ. उ. ४. ४. २२. ( ६ ) महाना. उ. २१. २.

दयादियुक्ताय शास्त्रप्रसिद्धशिष्यगुणसंपन्नाय शुचये ब्राह्मणाय
हि द्वैताद्वैतवादिनामद्वितीयात्मतत्त्वोपदशग्रहणाधिकार इति भाव । एता वता मुमुक्षुपद व्याख्यातम् ।

अत्राप्याश्रमधर्ममात्रनिष्ठस्याधिकारो नास्तीति विवक्षन् पुनर्विशिनष्टि— शमदमदयादियुक्तायेति । शमोऽन्त करणस्यानात्मविषयेभ्यो व्यावृत्ति[१] । दमो बाह्येन्द्रियाणाम् । दया भूतष्वद्रोह । आदिपदेनोपरतितितिक्षाश्रद्धा-समाधानानि सगृह्यन्त । एतेन अद्दधानानामित्येतव्द्यारयातम् ।

" अमान्यमत्सरो दक्षो निर्ममो दृढसौहृद ।
असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥ "

इत्यादिवचनमनुसृत्य पुनर्विशिनष्टि—शास्त्रप्रसिद्धेति । एतेनार्थिना-मिति व्याख्यातम् ।

" नाशुचिर्ब्रह्म कीर्तयत् ", " त्रिसध्यावी स्नानमाचरत् " इत्यादिशा-स्त्रमाश्रित्याह—शुचय इति । सवाह्याभ्यतरशौचसपन्नायेत्यर्थ । "ब्राह्मणो निर्वेदमायात्", " एतद्ध स्म वै तत्पूर्वे ( ब्राह्मणा अनूचाना ) विद्वास प्रजा न कामयन्ते ", " एत वै तमात्मान विदित्वा ब्राह्मणा " इत्यादि-शास्त्राण्यनुसृत्याह—ब्राह्मणायेति । विविदिषवोऽपि क्षत्रियादयो न पार-महस्ये सन्यासधर्मेऽधिक्रियन्त इति भाव । अत एवोत्पन्नज्ञाना अपि जनकादयो न गार्हस्थ्य परित्यक्तवन्त इति श्रूयते । इद च शास्त्र यथो-क्तसन्यासाधिकारिकमेव, नाश्रमान्तराधिकारिकम् । आश्रमान्तरस्य प्रवृ-त्तिधर्मपरत्वेन तदत्यागे तद्विरुद्धनिवृत्तिनिष्ठापरत्वायोगात्, त्यागे चाश्र-मातरत्वानुपपत्ते । वक्ष्यति च भगवान् भाष्यकार —

---

( १ ) समाधानश्रद्धा —पाठ । ( २ )² ( ३ ) अह उ २ ( ४ ) मु उ १ २ १२ ( ५ ) बृ उ ४ ४ २२ ( ६ ) बृ उ ३ ५ १

**विधिवदुपसन्नाय शिष्याय जातिकर्मवृत्तविद्याभिजनैः परीक्षिताय ब्रूयात् पुनःपुनर्यावद्ग्रहणं दृढीभवति ॥ २ ॥**

" अहं ब्रह्मास्मि कर्ता च भोक्ता चास्मीति ये विदुः ।
ते नष्टा ज्ञानकर्मभ्यां नास्तिकाः स्युर्न संशयः " ॥ इति,
" संन्यासिभ्यः प्रवक्तव्यः शान्तेभ्यः शिष्टबुद्धिना " ।

इति च । अतः ' पारिव्राज्यविशेषणं नित्याधिकारित्वख्यापनार्थं, नाश्रमान्तरव्यावृत्त्यर्थम् ' इति केषांचिद्व्याख्यानं चिन्त्यम् । " तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् " इत्यादिश्रुतिमाश्रित्याह—विधिवदुपसन्नायेति । विद्याग्रहणार्थं गुरुपादग्रहणपूर्वकम् " अधीहि भगवः " इत्यादिमन्त्रोच्चारणेनाभिवादनमुपसत्तिः, तां कृतवत इत्यर्थः । शिष्याय शासनार्हाय पूर्वश्रुतत्वादिनिमित्तौद्धत्यरहिताय, विनययुक्तायेत्यर्थः ।

" किंगोत्रो नु सोम्यासि ", " तान् ह स ऋषिरुवाच भूय एव तपसा श्रद्धया ब्रह्मचर्येण संवत्सरं संवत्स्यथ ", " नासंवत्सरवासिने प्रब्रूयात् " इत्यादिश्रौतलिङ्गमवष्टभ्याह—जातिकर्मेत्यादिना । जातिपरीक्षणं कुण्डगोलकक्षत्रियादिव्यावृत्त्यर्थम् । कर्मपरीक्षणं पतितत्वाभिशस्तत्वादिराहित्येन शिष्टताज्ञानाय । वृत्तमाचारः, शीलं वा । तत्परीक्षणं विद्याग्रहणोत्तरकालमपि तत्परिपालनयोग्यताज्ञानार्थम् । विद्या पूर्वाधीतवेदशास्त्रादिरूपा, उपास्यदेवतादिविशेषविषया वा । साऽपि परीक्षणीया, उक्तार्थग्रहणधारणादियोग्यत्वायोग्यत्वनिश्चयाय । तथाच श्रुतिः—"ना-

(१) उप. सा. पद्यप्रबन्धे ११. ८. (२) तत्रैव १३. २७. (३) मु. उ. १. २. १२. (४) छां. उ. ६. १. १. (५) 'भिवादन'—पाठः । (६) छां. उ. ४. ४. ४. (७) प्र. उ. १. २. (८) ?

श्रुतिश्च—"परीक्ष्य......तत्त्वतो ब्रह्मविद्याम्"[1] इति। दृढगृहीता हि विद्यात्मनः श्रेयसे संतत्यै च भवति। विद्यासन्ततिश्च प्राण्यनुग्रहाय भवति, नौरिव नदीं तितीर्षोः। शास्त्रं च—

प्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः"[2] इति। अभिजनः कुलं जन्मस्थानम्। तदपि परीक्षणीयम्, मातापितृभ्यां गुरुभिश्च शिक्षितत्वाशिक्षितत्वज्ञानार्थम्, यथा "मातृमान् पितृमानाचार्यवान् ब्रूयात्"[3] इति श्रौतलिङ्गात्। एवंविशिष्टाय शिष्याय ब्रूयादित्याचार्यं शिक्षयति। उपदेशस्य दृष्टार्थतामभिप्रेत्याह—पुनःपुनरिति। अवधिमाह—यावद्ग्रहणं दृढीभवतीति। शिष्यस्येति शेषः ॥ २ ॥

एवमुक्तविशेषणेन शिष्येण गुरूपसत्तिः कार्या। गुरुश्च तमुपदिशेद्विद्यामित्युक्तेऽर्थे श्रुतिमुदाहरति—श्रुतिश्चेति। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्" इत्युपक्रम्य "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इत्यन्तेन ग्रन्थेनोक्तोऽर्थो निरूपित इत्यर्थः। शिष्यस्य दृढग्रहणपर्यन्तं गुरुणा पुनःपुनर्विद्योपदेष्टव्येत्यत्र हेतुमाह—दृढगृहीता हीति। आत्मनः श्रेयोऽविद्यादिदोषसंसारनिवृत्तिः। सन्ततिः शिष्यप्रशिष्यादिसंचारेण विद्याया अविच्छेदः।

विद्यासन्ततेः कोपयोग इत्यत्राह—विद्येति।

यथा नदीतरणाय तत्र प्रविष्टस्यागाधे निमज्जतो नरस्य पारं प्रापयितुं नौरुपस्थाप्यते कृपालुना, तथा संसारसागरे निमज्जतः प्राणिन उद्धरणेन तत्पारं विष्णोः परमं पदं प्रापयितुं विद्यासन्तानसंरक्षणमित्यर्थः।

पूर्वोक्तशिष्यगुणसंपन्नाय परीक्षिताय विधिवदुपसन्नायैव विद्या देया, न

---

(१) मुं. उ १. २. १२–१३. 'द्या यावद्'—पाठः (२) श्वे. उ. ६. २२. (३) बृ. उ. ४. १. २.

"यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूयः" इति। अन्यथा च ज्ञानप्राप्त्यभावात् "आचार्यवान् पुरुषो वेद", "आचार्याद्धैव विद्या विदिता", "आचार्यः प्लावयिता तस्य सम्यग्ज्ञानं प्लव इहोच्यते" इत्यादिश्रुतिभ्यः, "उपदेक्ष्यन्ति ते ज्ञानम्" इत्यादिस्मृतिभ्यश्च ॥ ३ ॥

यथाकथंचिद्विश्वासाय, धनादिलोभाद्वा, इति गुरोर्नियमार्थं श्रुतिशासनमुदाहरति—शास्त्रं चेति। नियामकं शास्त्रं चात्रास्तीत्यर्थः। तदेवाह—यद्यपीति। इमां पृथिवीमद्भिः परिगृहीतां समुद्रपरिवेष्टितां धनस्य पूर्णां वित्तेनोपचितां दद्यात्कश्चिद्यद्यपि, तथापि नैतद्दर्शनं तस्मै दद्यात्, यत एतत्ततो वित्तपूर्णपृथिवीदानादपि भूयोऽधिकतरमिति योजना। न ह्याकाशादिसमस्तभूतभौतिकाधिष्ठानस्य ततोऽप्यधिकतरस्यापरिच्छिन्नस्य ब्रह्मणो दानस्येदमनुरूपमिति भावः। तथा च श्रुतिः—"पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि" इति। तदेवमाचार्येण परीक्षिताय शिष्याय कृपयैव विद्या वक्तव्येत्युक्तम्। तत्र किमाचार्योपगमनेन कार्यम्? स्वयमेव जिज्ञासोर्न्यायाद्यनुसरणतो विद्योदयसंभवादिति शङ्कायामाह—अन्यथेति। यद्वा—किमित्येवं सकष्टमनष्टम्याचार्येण विद्या देया? शिष्य स्वयमेव

---

(१) छा. उ. ३. ११. ६. (२) छां. उ. ६. १४. २. (३) तत्रैव ४. ९. ३. (४) इदं श्रुतिप्रमाणं न स्यात्। लेखकप्रमादेन श्रुतिप्रमाणेष्वन्तर्भूतमिति प्रतिभाति। स्मृतिप्रमाणमेव भवेत्—तुल्य मोक्षधर्मे ३२८-२३. 'श्रुतिस्मृतिभ्य'—इति, अथ 'स्मृतेश्च' इत्यपि पाठो लभ्यते। अत्र 'श्रुतिस्मृतिभ्य' एतावानेव पाठ युक्तः। उपदेक्ष्यन्तीत्यादिवचनं टीकातो मूले निवेशितमिति भाति। 'तस्य' रहितोऽपि पाठः। आचार्य—प्लवयिता प्लवितं वा स—इत्यपि पाठो। (५) तै. ना. ३. १२.

शिष्यस्य ज्ञानाग्रहणं च लिंगैर्बुद्ध्वा तदग्रहणहेतूनधर्मलौकिक-प्रमादनित्यानित्यैवस्तुविवेकविपर्यासज्ञातदृढपूर्वश्रुतत्वलोक-चिन्तावेक्षणजात्याद्यभिमानादींस्तत्प्रतिपक्षैः श्रुतिस्मृतिविहितै-रपनयेदक्रोधादिभिः अहिंसादिभिश्च यमैः, ज्ञानाविरुद्धैश्च नियमैः ॥ ४ ॥

तां किं न संपादयेदित्यत आह—अन्यथा चेति । अत्र श्रुतिस्मृती प्रमाण-यति—आचार्यवानित्यादिना । " आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत् " इति वाक्यशेषः । आदिपदात्—" तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" ॥ इत्यादिवचनं गृह्यते । तथा चातिसूक्ष्मपरमार्थनिर्णयस्य स्वबुद्धिसामर्थ्यमात्रेण संपादयितुमशक्यत्व-मेतैर्वाक्यैर्गम्यत इत्यर्थः ॥ ३ ॥

ननु जिज्ञासोरुक्तविशेषणस्य शिष्यस्य सकृदुपदेशग्रहणादेव विद्यादार्ढ्यो-पपत्तेः किमिति पुनःपुनरुपदेशः कार्य इत्युक्तमत आह—शिष्यस्येति ।

शिष्यस्य ज्ञानाग्रहणं, चकाराद्विपर्ययग्रहणं च मुखादिचेष्टावचनव्य-त्ययादिलिङ्गैर्बुद्ध्वा, अग्रहणादिहेतूंस्तत्प्रतिपक्षैस्तन्निवर्तकैः श्रुतिस्मृतिविहितै-रपनयेदिति संबन्धः । तानेवाह—अधर्मेत्यादिना । अधर्मः सञ्चितः । लौ-किक इदानींतनः । प्रमादः कामचारवादभक्षणादिः । तत्र सूर्यादिदेवतोपा-सनादिनियमोपदेशेनाधर्मक्षपणं कारणीयम् । वर्ज्यावर्ज्यादियतिधर्मशास्त्रेण प्रमादनिरासः । नित्यानित्यवस्तुनः विवेकस्य यो विषयः चेतनाचेतनरूपं-स्तस्मिन्नसञ्जातं तत्पर्यन्तं न प्रसृतं यद्दृढपूर्वश्रुतत्वं तद्युक्तिविशेषाद्युपन्या-सेनापनीय विवेकपर्यन्ततां नयेदित्यर्थ- । लोकचिन्तावेक्षणं लोकानां व्यव-

( १ ) 'ध्वा अग्रहणे हेतून्—पाठः ( २ ) नित्यानित्यविवेक'—पाठः ( ३ ) भ. गी. ४. ३४ ( ४ ) 'नित्यविवेकस्य—पाठः

## [5]अमानित्वादिगुणं च ज्ञानोपायं सम्यग्ग्राहयेत् ॥ ५ ॥

द्वारसाधुत्वाऽसाधुत्वविचारलक्षणं, लोकेभ्यः पूजासन्मानाद्यपेक्षया तत्सस-र्गोपरोधेन व्यवहरणं वा । एतच्च वक्ष्यमाणामानित्वमदम्भित्वमित्यादिशास्त्रो-क्तनिषेधोपदेशेनापनेतव्यम् । जात्यादीत्यादिपदात्कुलविद्यादि गृह्यते । स्व-पदार्थपरिशोधनोपदेशेन जात्याद्यभिमानं त्याजयेदित्यर्थः । अभिमानादीनि-त्यादिपदेन तत्प्रयुक्तो व्यवहारोऽन्यविक्रूरणादिर्गृह्यते । अक्रोधादिभिरित्य-त्रादिपदेनाप्रमादयो[2] गृह्यते । अहिंसादिभिश्चेत्यादिपदात्सत्यास्तेयब्रह्मचर्या-परिग्रहा गृह्यन्ते । अत्राक्रोधादीनामहिंसादीनामुपायोपेयभावेनोपदेशो बोद्ध-व्यः । "[3]शौचसंतोषतपस्स्वाध्यायेश्वरप्रणिधानानि[4] नियमा" उच्यन्ते, तेषां ज्ञानाविरुद्धैरिति विशेषणेन तीर्थयात्राचान्द्रायणोपवासादिकर्मकाण्डपरा-यणनाह्यसाधनन्त्याप्रधानेश्वरपूजानिष्ठादि च यज्ज्ञाननिष्ठाविक्षेपकरं तस्या नादरणीयता दर्शयति । यमनियमोपदेशस्तु सर्वदोषनिरासससाधारणोपाय इति द्रष्टव्यम् ॥ ४ ॥

एवं ज्ञानग्रहणप्रतिबन्धकनिवर्तकमुपदिश्य, ज्ञानोदयहेतुजातमुपदिशति—अमानित्वादिगुणमिति ।

अमानित्वादिगुणमिति ।

अमानित्वादिपदाददम्भित्वादि तत्त्वज्ञानार्थदर्शनान्तं गृह्यते । यद्वा—अमानित्वे-नादम्भित्वादिकं सहपठितत्वेनोपलक्ष्यादिपदेन "[5]अद्वेष्टा सर्वभूतानाम्" इत्यादिनोक्ता अद्वेष्टृत्वादयो धर्मा ग्राह्याः । अत्र सम्यक्पदमेतन्निष्ठस्य सर्व-दोषपरिहारेणायत्नलभ्यं ज्ञानदार्ढ्यमिति दर्शयितुम् । अयं भावः—नहि सकृद्ग्रहणमात्राद्विद्या दृढोत्पद्यते—"[6]आवृत्तिरसकृदुपदेशात्" इति न्या-यात्, श्रवणोत्तरकालं मननादिविधानसामर्थ्याच्च । दृढत्वं हि फलपर्यन्तत्वं विद्याया विवक्षितम् । अतः फलानुकूलतया यावन्निर्विचिकित्सं तत्सञ्जायते,

(१) भ. गी. १३ ७—११ (२) योऽपि—पाठ (३) यो. सू. २ ३०. (४) तत्रैव २ ३२ (५) भ. गी. १२ १३—२०. (६) ब्र. सू. ४ १ १.

**आचार्यस्तूहापोहग्रहणधारणशमदमदयानुग्रहादिसंपन्नो ल-
ब्धागमो दृष्टादृष्टभोगेष्वनासक्तस्त्यक्तसर्वकर्मसाधनो ब्रह्मवित्**

तावद्गुरुणा शिष्यं कृतार्थं कर्तुं प्रवृत्तेन, विद्योपयोगार्थं वा प्रवृत्तेन, उपदेशः कार्य एवेति ॥ ५ ॥

एवमाचार्यकृत्यमुक्त्वा, तस्य लक्षणमाह—आचार्येति ।

एतच्च तत्त्वजिज्ञासुनाऽधिकारिणा एवंविध आचार्य उपगन्तव्य, नान्यादृश इति दर्शयितुम्, न त्वाचार्येणैवंविधगुणेन भवितव्यमिति नियोगः क्रियते, तस्य कृतार्थत्वादिति द्रष्टव्यम् । शिष्येणानुक्तस्याप्यूहनमूहः, उपदेशसमये शिष्यप्रतिपत्त्यनुकूलापूर्वयुक्तिकल्पनं वा । शिष्यस्य मिथ्याग्रहणापाकरणसामर्थ्यमपोहः, सिद्धान्तप्रतिपक्षनिराकरणसामर्थ्यं वा । शिष्यकृतप्रश्नाक्षेपवाक्यार्थानां सद्योऽवधारणसामर्थ्यं ग्रहणम् । गृहीतानां तेषां सारासारावधारणपूर्वकं प्रत्युक्तिसमये स्मरणयोग्यतापादनं धारणम् । शमदमौ व्याख्यातौ । दया दुःखिनं प्रत्यनुजिघृक्षा । तदनन्तरं दुःखिनो दुःखापाकरणे प्रवृत्तिरनुग्रहः । आदिशब्दादुपसन्नस्य विनीतस्यानुगृहीतस्यापरित्यागो गृह्यते । यत्तु "हिंसानुग्रहयोरनारम्भी" इति गौतमेन सन्यासिधर्मो दर्शितः, यच्च "न व्याख्यानपरो यतिः" इत्यादिवचनं, तत् ख्यातिलाभपूजापाण्डित्यवृद्ध्यादिहेतुप्रवृत्तिविषयमित्यदोषः । संपन्न इति पूर्वोक्तगुणैराढ्यतोच्यते । लब्धागमः स्वगुरुभ्यः प्राप्तविद्योपदेशः । अनेन विशेषणेन गुरोः साम्प्रदायिकत्वमपि शिष्येणान्वेषणीयमिति सूचयति । दृष्टा भोगा ऐहिकाः, अदृष्टाः पारलौकिकाः, तेष्वनासक्तः— तत्साधनलोकाराधनतपोयज्ञादिप्रवृत्तिशून्य इत्यर्थः । यतस्त्यक्तानि सर्व-

(१) गौ. ध. ३. २४, २५ "समो भूतेषु हिंसानुग्रहयोः ॥ २४ ॥ अनारम्भी ॥ २५ ॥" (२) ?

ब्रह्मणि स्थितोऽभिन्नवृत्तो दंभ( दर्प )कुहकशाठ्यमायामात्स-
र्यानृताहंकारममत्वादिदोषविवर्जितः। केवलपरानुग्रहप्रयोजनो
विद्योपयोगार्थी पूर्वमुपदिशेत् " सदेव सोम्येदमग्र आसीदे-

कर्मणा साधनानि धनदारसग्रहशिखायज्ञोपवीतादीनि येन स तथा। अतो भोगानासक्त इति विदित इत्यर्थः। ब्रह्मविन्महावाक्यार्थप्रत्यगात्मतत्त्वज्ञानवानित्यर्थः।

तर्हि परोक्षतयैव? नेत्याह—ब्रह्मणि स्थित इति।

ब्रह्मणि स्थितिर्नाम नित्यापरोक्ष 'ब्रह्मैवाहमस्मि' इति स्फुटानुभवनावस्थानम्। एवंविधोऽपि न यथेष्टचेष्टावानित्याह—अभिन्नवृत्त इति। न भिन्नं नोल्लङ्घितं वृत्तमाचारो येन स तथा, शिष्टनिगर्हितो न भवतीत्यर्थः। दम्भो धर्मध्वजित्वम्, आत्मनो लोके धार्मिकत्वख्यापनमिति यावत्। कुहकं परप्रतारणम्। शाठ्यं नैष्ठुर्यम्। माया परव्यामोहनम्। मात्सर्यं गुणेषु दोषख्यापनम्। अनृतं मिथ्याभाषणम्। अहङ्कारो देहाभिमानः। ममत्वं पुत्रशिष्यादिषु स्वत्वाभिमानः। एतैर्दम्भादिदोषैर्वर्जित इत्यर्थः।

एवंविधस्य किमित्यन्योपदेशे प्रवृत्तिरित्यत आह—केवलेति।

परस्य संसारसागरान्निर्विण्णस्य यः परमपदप्रापणरूपोऽनुग्रहः, तदेव प्रयोजनं यस्य, स तथा। केवलविशेषणमानुषङ्गिकमपि प्रयोजनान्तरं प्रवृत्तिहेतुं वारयति। तर्हि किं निर्निमित्तमेव परानुग्रहेऽस्य प्रवृत्तिरुन्मत्तप्रवृत्तिवद्यादृच्छिकी? नेत्याह—विद्योपयोगार्थीति। उपयोगो विनियोगः, "चत्वारि कृष्णाजिनानि प्रास्यति" इत्यादिवत्। "त्यज धर्ममधर्मं च

(१) शिष्यदिदृक्षुपदेशक्रमं दर्शयति। प्रथमं किमुपदिशेत्? 'सदेव—पाठ
(२) 'पदमाप्य—पाठ (३) छां उ ६.२.१. (?) जै सू ४.२.१९
उपयुक्तस्याऽऽक्षीणकरस्यावशिष्यमाणद्रव्यादेर्विहितदेश संस्कारविशेषहेतुः प्रक्षेप प्रति

कर्मेवाद्वितीयम्", "यत्र नान्यत्पश्यति", "आत्मैवेदं सर्वम्", ("ब्रह्मैवेदं सर्वम्"), "आत्मा वा इदमेक एवाग्र आसीत्" "सर्वं खल्विदं ब्रह्म" इत्याद्या आत्मैक्यप्रतिपादनपराः श्रुतीः ॥ ६ ॥

उभे सत्यानृते त्यज । उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥" इत्यत्र येन ज्ञानेन धर्मादिषु प्रवृत्तिनिरोधेन तानि परित्यजसि, तज्ज्ञानं परित्यजेत्युक्ते ज्ञानस्यामूर्तत्वात् स्वरूपेण त्यागायोगाद्विशिष्टे शिष्ये प्रतिपादनं प्रतिपत्तिकर्म क्रियते । तच्च वस्तुमहिम्ना परानुग्रहता प्रतिपद्यत इति भावः ॥

एवंविध आचार्यः पूर्वमुपदिशेदित्युक्तम्, तत्रोपदेशक्रमं दर्शयति । प्रथमं किमुपदिशेदित्यपेक्षायामात्मैकत्वप्रतिपादकवाक्यान्युपदिशेदिति तानि वाक्यानि पठति—सदेवेत्यादिना ॥

इत्यात्मैकत्वप्रतिपादनपराः श्रुतीः पूर्वमुपदिशेदिति संबन्धः । "यत्र नान्यत्पश्यति"—इत्यत्र "नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति वाक्यशेषः । ("ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" इति शेषः । ?) अत्र सद्भूमात्मब्रह्मशब्दाः पर्यायाः । अनेकशाखादिगतवाक्योदाहरणं "गतिसामान्यात्" इति न्यायेनाविरोधतः स्वार्थपरत्वख्यापनार्थम् ॥ ६ ॥

---

पत्तिकर्म । ज्योतिष्टोमे यजमानेन दत्ता दक्षिणा ऋत्विग्भिर्यदा नीता तदा यजमानः स्वशिरः कण्डूयनाद्युपयुक्तं स्वहस्ते धृतं कृष्णमृगस्य शृङ्गं चात्वालनामके गर्ते परित्यजति । सोऽयं परित्यागः प्रतिपत्तिकर्म ।

(१) छा उ. ६ २ १ (२) तत्रैव ७ २४ १ (३) तत्रैव ७ २५ २ बृ उ. ४ ४ ६ (४) ऐ उ १ १ (५) छा उ ३ १४ १ (६) शा प ३२९ ४० ३३१ ४४ (७) त्युपदेशक्रम-पाठ (८) मु उ २ २ ११ (९) ब्र सू १ १ ११

उपदिश्य च ग्राहयेद्ब्रह्मणो लक्षणम्[1]—

"य आत्माऽपहतपाप्मा[2]", "यत्साक्षादपरोक्षाद्ब्रह्म[3]", "योऽशनायापिपासे[4]", "नेति नेति[5]", "अस्थूलमनणु[6]", "स एष नेति नेति[7]", "अदृष्टं द्रष्टृ[8]", "विज्ञानमानन्दम्[9]",

किं तद्ब्रह्मादिशब्दैर्वस्तूच्यते, कथं च तदद्वितीयमवगम्यते ?—इत्यपेक्षायामाह—उपदिश्य च ग्राहयेद्ब्रह्मणो लक्षणमिति । 'योऽशनायापिपासे' 'शोकं मोहं जरां मृत्युमत्येति' इति शेषः । "आनन्दम्" "अनन्तम्" इत्युभयत्र "ब्रह्म" इति वाक्यशेषः । एवं सर्वत्र वाक्येषु शेषाक्षराणि श्रुतिपरिचयेन पूरणीयानि, ग्रंथभूयस्त्वान्न सर्वत्र प्रदर्श्यन्ते ।

"य आत्माऽपहतपाप्मा" इत्यादि प्राजापत्यवाक्येन जाग्रदाद्यवस्थासु द्रष्टृत्वेनानुगतोऽवस्थाधर्मरहितोऽशरीरः प्रियाप्रियाभ्यामसंस्पृष्टः प्रत्यगात्मैव परं ज्योतिः, परं ब्रह्मोपास्यं ज्ञेयं चेति प्रकरणार्थोपन्यासेन प्रत्यग्ब्रह्मैक्यमुपलक्षयेदित्यर्थः । य आत्मा सर्वान्तरो दृष्टेर्बुद्धिवृत्तिलक्षणाया द्रष्टा प्राणनादिव्यापारोपलक्षितः स एवाशनायादिप्राणान्तःकरणशरीरधर्मातीतः साक्षादपरोक्षाद्ब्रह्मेति द्वितीयवाक्यार्थः । "नेति नेति" इत्यादिवाक्यानां सकलदृश्यप्रविलापनेनाद्वितीयात्मतत्त्वोपलक्षणपरत्वम् ।

"अदृष्टं द्रष्टृ" इत्यादिना "नान्यदतोऽस्ति द्रष्टृ" इत्यादिवाक्यैः सह सर्वसाक्षिप्रत्यागात्मैवाक्षरं, यस्मिन्नव्याकृताकाशादिपरिच्छिन्नं जगदोतं च प्रोतं

---

(१) 'ब्रह्मोपलक्षणम्'—अत्राग्रे च, मूले तथा टीकायामप्ययं पाठो बहुषु पुस्तकेषु दृश्यते । (२) छां. उ. ८. ७. १. (३) बृ. उ. ३. ४. १ इत्यादौ (४) बृ. उ. ३. ५. १. (५) तत्रैव २. ३. ६. (६) तत्रैव ३. ८. ८. (७) तत्रैव ३. ९. २६; ४. २. ४, ४. ४. २२; ४.५. १५. (८) बृ. उ. ३. ८. ११. (९) तत्रैव ३. ९. २८.

" सत्यं ज्ञानमनन्तम् ", " अदृश्येऽनात्म्येऽनिरुक्ते ", " स वा एष महानज आत्मा ", " अप्राणो ह्यमनाः ", " सबाह्याभ्यन्तरो ह्यजः ", " विज्ञानघन एव ", " अनन्तरमबाह्यम् ", " अन्यदेव तद्विदितादथो अविदितादधि ", " आकाशो वै नाम " इत्यादिश्रुतिभिः ॥ ७ ॥

चेत्युपलक्षितं तत्त्वमित्यर्थः । " विज्ञानमानन्दं ब्रह्म " इति–" कोन्वेनं जनयेत् पुनः ", " मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति " ?–इति पृष्टस्य जगन्मूलकारणत्वेनोपलक्षितस्य स्वरूपं " विज्ञानानन्दलक्षणम् " इति तत्पदार्थतत्त्वमुपलक्षितमित्यर्थः । एवं " ब्रह्मविदाप्नोति परम् " इति प्रकृतस्य ब्रह्मणः " सत्यं ज्ञानमनन्तं ब्रह्म " इति स्वरूपं निर्दिश्य, " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादिना जगत्कारणत्वेनोपलक्ष्य, तस्यैव सृष्टेषु कार्यकरणसंघातेषु प्रवेशं दर्शयित्वा, " अदृश्येऽनात्म्येऽनिरुक्ते " इत्यादिना प्रपञ्चापवादेन सर्वाधारं सर्वसाक्षिणमात्मानमानन्दरूपं " ब्रह्मपुच्छं प्रतिष्ठा " इति, " अथ सोऽभयं गतो भवति ", " स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः " इति च तत्त्वमुपलक्षयेदित्यर्थः ।

" स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी " इत्यादिना जाग्रदाद्यवस्थाधर्मरन-

---

(१) तै. उ. २. १. (२) तै. उ. २. ७. (३) बृ. उ. ४. ४. २२. (४) मुं. उ. २. १. २. (५) बृ. उ. २. ४. १२. (६) तत्रैव २. ५. १९. (७) के. उ. १. ३. (८) छां. उ. ८. १४ १. (९) "असद्भोदासीने परमात्मवस्तुनि तद्विवर्तभूताज्ञानादिमिथ्याप्रपञ्चस्य चिद्वस्तुमात्रावशेषतयावस्थानमपवादः" । " कार्यस्य कारणमात्रसत्तावरोपण, कारणस्वरूपव्यतिरेकेण कार्यस्यासत्तावधारणं वापवादः " ।
—वे. सा. टीक्योः २२.

(१०) बृ. उ. ४. ४. २२.

न्यागतस्यासंगस्य कामाकामाभ्यां संसारमोक्षावनुभवतो बुध्यादिसाक्षिणश्चिदात्मनोऽन्तर्हृदये आकाशशब्दवाच्याजरामरामयादिलक्षणब्रह्माभेद इति तत्त्वमुपलक्षितमित्यर्थः । " दिव्यो ह्यमूर्त्तः पुरुषः सबाह्याभ्यंतरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥" इति ।[1] अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यम् " इत्यादिना ग्राह्यग्राहकाद्यनेकोपाधिप्रतिषेधेनोपलक्षितस्य सर्वभूतयोनित्वेन च संभावितस्य सर्वज्ञस्य सर्वविदोऽग्निविस्फुलिङ्गादिवज्जीवरूपेण विभक्तत्वोक्त्या प्राप्तपरिच्छेदशङ्कानिराकरणेन प्रत्यक्तत्त्वमुपलक्षितम् " ब्रह्मैवेदं विश्वमिदं वरिष्ठम् " इत्यन्तेनेत्यर्थः । "इदं सर्वं यदयमात्मा" इति सर्वस्य दृश्यस्यात्मव्यतिरेकेण स्वरूपाभावमुक्तं दुन्दुभ्यादिदृष्टान्तैरुपपाद्य, किं तदात्मनः स्वरूपमित्यपेक्षाया " महद्भूतमनन्तमपारं विज्ञानघन एव[5] इति तत्त्वमुपदिष्टमित्यर्थः । " तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः " इति तत्त्वंपदार्थपरिशोधनपूर्वकं वाक्यार्थो दर्शितः । तत्रापूर्वमित्यादिना कार्यकारणत्वादिधर्मरहितत्वेन तत्पदार्थ उपलक्षितः, सर्वानुभूरिति सर्वसाक्षितया त्वंपदार्थः, अयमात्मा ब्रह्मेति वाक्यार्थः, इति विभागः । मनःप्राणादिषु प्रकाशकत्वेन प्रेरकत्वेन चोपलक्षितमात्मतत्त्वं ब्रह्म विदिताविदिताभ्यां कार्यकारणाभ्यामन्यदिति तत्स्वरूपं निवेद्यते " अन्यदेव तद्विदितादथो अविदितादधि " इत्यनेनेत्यर्थः ।

कश्चिदाकाशशब्देनापि ब्रह्म लक्ष्यत इत्याह—आकाशो वै नामेति ।

नामरूपयोर्जगद्बीजभूतयोरव्याकृतयोर्यो निर्वहिता—व्याकर्ता ते नामरूपे यदंतरा—यस्य मध्ये वर्तेते, न ततः पृथक् स्वतन्त्रे, " तद्ब्रह्म तदमृतं स

---

( १ ) मुं. उ. २. १. २. ( २ ) तत्रैव १. १. ६. ( ३ ) तत्रैव २. २.११
( ४ ) बृ. उ. २. ४. ६. ( ५ ) तत्रैव २. ४. १२. ( ६ ) तत्रैव २. ५. १९.

स्मृतिभिश्च—"न जायते म्रियते वा"[1], "नादत्ते कस्यचित्पापम्"[2], "यथाकाशस्थितो नित्यम्"[3], "क्षेत्रज्ञं चापि मां विद्धि"[4], "न सत्तन्नासदुच्यते"[5], "अनादित्वान्निर्गुणत्वात्"[6] "समं सर्वेषु भूतेषु"[7], "उत्तमः पुरुषस्त्वन्यः"[8] इत्यादिभिः श्रुत्युक्तलक्षणाविरुद्धाभिः परमात्मासंसारित्वप्रतिपादनपराभिस्तस्य सर्वेणानन्यत्वप्रतिपादनपराभिश्च ॥ ८ ॥

आत्मा" इति वाक्यशेषात्। "दहरोऽस्मिन्नन्तराकाशः"[9] इत्यत्राकाशशब्देनापि ब्रह्म लक्ष्यत इत्यर्थः। आदिपदात् "प्राणोऽस्मि प्रज्ञात्मा,"[10] "प्राण इति होवाच" इत्याद्याः श्रुतयो गृह्यन्ते ॥ ७ ॥

न केवलं श्रुतिभिरेव ब्रह्मणो लक्षणं ग्राहयेत्, अपि तु स्मृतिभिश्चेत्याह—स्मृतिभिश्चेति। श्रुत्युक्तलक्षणाविरुद्धाभिरिति स्मृतिविशेषणम्। श्रुत्युक्तेऽर्थे स्मृत्युदाहरणं प्रतिपत्तिदार्ढ्यार्थं, न श्रुतेः प्रामाण्यसिद्ध्यर्थम्। विशेषणं च सांख्यादिस्मृतावतिप्रसङ्गव्यावृत्त्यर्थमिति द्रष्टव्यम्। "परमात्मासंसारित्वप्रतिपादनपराभिः" इत्यादिविशेषणद्वयं श्रुतिस्मृत्योः साधारणम्।

परमश्चासावात्मा च परमात्मा, परमत्वं चास्याविद्यातत्कार्यसंघाततदवस्थासाक्षितयाऽव्यभिचार्यलुप्तप्रकाशस्वभावत्वम्। तस्यासंसारित्वप्रतिपादनं संघाताद्यवस्थात्रयोपाधेः सम्यग्विवेचनं, तत्पराभिरित्यर्थः। तस्य

(१) भ. गी. २. २०. (२) तत्रैव ५. १५. (३) तत्रैव ९. ६. (४) तत्रैव १३ २. (५) तत्रैव १३. १२. (६) तत्रैव १३. ३१. (७) तत्रैव १३. २७. (८) तत्रैव १५. १७. (९) छां. उ. ८. १. १. (१०) कौ. उ. ३. १. (११) छां. उ. १. ११. ५. "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" (बृ. उ. ४. ४. १६.) इत्यधिकः श्रुतिपाठः क्वचिल्लभ्यते। (१२) 'स्मृतिप्रसङ्ग'—पाठः।

एवं श्रुतिस्मृतिभिर्गृहीतपरमात्मलक्षणं शिष्यं संसारसागरा-
दुत्तितीर्षुं पृच्छेत्—कस्त्वमसि सोम्य? इति ॥ ९ ॥

स यदि ब्रूयात्—ब्राह्मणपुत्रोऽदोन्वयो ब्रह्मचार्यासम्,
गृहस्थो वा, इदानीमस्मि परमहंसपरिव्राट् संसारसागराज्जन्म-
मृत्युमहाग्राहादुत्तितीर्षुरिति ॥ १० ॥

आचार्यो ब्रूयात्—इहैव तव सोम्य मृतस्य शरीरं वयो-
भिरद्यते, मृद्भावं वाऽऽपद्यते। तत्र कथं ससारसागरादुत्तर्तुमि-

शोधितस्य त्वपदार्थस्य सरण—सर्वमस्मिन्निति सर्वं, सर्वाधिष्ठान ब्रह्म—तना-
नन्यत्व तत्कारणत्व च, तत्प्रतिपादनपराभिरित्यर्थ । न्यायानुगृहीताभिश्चेत्य-
स्मिन्नर्थे चकार ॥ ८ ॥

एव वाक्योपदर्शन तद्यथापलक्षणपरश्रुतिस्मृतिव्याख्यानेन च प्रतिबो-
धित शिष्यमज्ञानसशयविपर्ययापोहनोपदिष्टार्थे मतिनैश्चल्याय पुन पृच्छे-
दाचार्य इत्याचार्यकृत्यमाह—एव श्रुतिस्मृतिभिश्चेति ।

तथा च शिष्यप्रतिपत्तिपरीक्षणार्था श्रुतिर्भवति—"यदि मन्यसे सुवे-
देति दभ्रमेवापि नूनम्। त्व वेत्थ ब्रह्मणो रूपम्" इत्याद्या । हे सोम्य,
प्रियदर्शन, कस्त्व किमात्मक ?—इति ॥ ९ ॥

इति गुरुणा पृष्टो यदि स शिष्यो प्रतिपत्त्यादिदोषप्रतिबन्धवशाद्ब्रूया-
द्ब्राह्मणपुत्र इत्यादि, तदाचार्यो ब्रूयादिति सम्बन्ध । असावन्वयो वंशो
यस्य सोऽहमदोन्वय , अमुकदीक्षितवंश्योऽहमित्यर्थ । महाग्राहो नक्रस्ति
मिंगिलो वा ॥ १० ॥

अहोऽयमद्यापि देहाभिमानप्रतिबद्धज्ञानोदय इति त त्याजयत्या-

---

(१) °उद्धर्तु°—पाठ (२) विपर्यासापो —पाठ । (३) देहत्वे°—पाठ ।

च्छसीति । नहि नद्या अवरे कूले भस्मीभूतो नद्याः पारं तरिष्यसीति ॥ ११ ॥

स यदि ब्रूयात्—अन्योऽहं शरीरात् । शरीरं तु जायते, म्रियते, वयोभिरद्यते, मृद्भावमापद्यते, शस्त्राग्न्यादिभिश्च विनाश्यते, व्याध्यादिभिश्च प्रयुज्यते। तस्मिन्नहं स्वकृतधर्माधर्मवशात् पक्षी नीडमिव प्रविष्टः पुनः पुनः शरीरविनाशे धर्माधर्मवशाच्छरीरान्तरं यास्यामि, पूर्वनीडविनाशे पक्षीव नीडान्तरम् ।

चार्यः—इहैव तवेत्यादिना । वयोभिः पक्षिभिर्गृध्रादिभिरित्यर्थः ॥ ११ ॥

एवं स्थूलदेहाभिमाने त्याजिते, ततो विविक्तमात्मानं मन्यमानः सन् स यदि शिष्यो ब्रूयात्, अन्योऽहं शरीरादित्यादि, तदा आचार्यो ब्रूयादित्युत्तरेणान्वयः । कथं शरीरादन्यत्वमवगतमित्यत आह—शरीरं तु जायत इत्यादिना । शरीरावस्थाद्रष्टृत्वाद्भयादिविकारिणोऽहं द्रष्टाऽविकार्यन्य इत्यर्थः।

कथं तर्हि देहादन्यस्य तव देहाभिमानपूर्वको व्यवहारः ?—इति चेत्, अविद्याप्रयुक्तकामप्रवर्तितधर्माधर्मवशादित्याह—तस्मिन्नहमिति । स्वकृतविशेषणेन—अहंकारपूर्वकत्वद्योतनात्—अहंकारस्य चाविद्यां विना केवले आत्मन्यसंभवात्—अविद्याप्रयुक्ताभिमानमूलत्वं धर्माधर्मयोरिति भावः ।

यद्येवं जानासि, मा तर्हि कर्म कार्षीरिति चेत्, पूर्वपूर्वकृतकर्मवासनापरवशतयोत्तरोत्तरकर्मप्रवृत्तेर्न शक्नोम्यहं निरोद्धुमित्यभिप्रेत्याह—एवमेवाहमनादाविति ।

---

(१) °भूते—पाठः । (२) पूर्वकत्व इति—नि. सा. पाठः (३) °तकर्मप्रवृत्तिरो घ°—पाठः ।

एवमेवाहमनादौ संसारे देवमनुष्यतिर्यङ्निरयस्थानेषु स्वकर्मवशादुपात्तमुपात्तं शरीरं त्यजन्, नवं नवं चान्यदुपाददानः, जन्ममरणप्रबन्धचक्रे घटीयन्त्रवत् स्वकर्मणा भ्राम्यमाणः, क्रमेणेदं शरीरमासाद्य, संसारचक्रभ्रमणादस्मान्निर्विण्णः, भगवन्तमुपसन्नोऽस्मि संसारचक्रभ्रमणप्रशमाय । तस्मान्नित्य एवाहं शरीरादन्यः—शरीराण्यागच्छन्त्यपगच्छन्ति च, वासांसीव, पुरुषस्येति ॥ १२ ॥

आचार्यो ब्रूयात्—साध्ववादीः, सम्यक् पश्यसि, कथं मृषावादीः—ब्राह्मणपुत्रोऽहोऽन्वयो ब्रह्मचार्यासम्, गृहस्थो वा, इदानीमस्मि परमहंसपरिव्राडिति ॥ १३ ॥

स यदि ब्रूयात्—भगवन् कथमहं मृषाऽवादिषमिति ॥१४॥

तं प्रति ब्रूयादाचार्यः—यतस्त्वं भिन्नजात्यन्वयसंस्कारं

क्रियमाणं कल्पनया कश्चित्तगति कश्चनेत्यादिन्यायेनाह—क्रमेणेदं शरीरमासाद्येति । बहूना कर्मणा सञ्चितत्वेऽपि क्रमेणैव फलारम्भ, न युगपदित्येकभविकत्ववाद क्रमशब्देन निरस्यते । एतेन नित्यानित्यवस्तुविवेक आत्मनो जात इति फलितमाह—तस्मान्नित्य एवेति ॥ १२ ॥

आचार्यस्तु विवेकोक्तिं प्रशंसन्नभ्यनुजानाति—साध्ववादीरिति । एवं निवृत्ततत्तत्र वर्णाश्रमाद्यभिमानो भ्रान्तिमूल एवेत्याह—कथं मृषाऽवादीरिति ॥ १३ ॥ १४ ॥

कथं भ्रान्तिर्ममेति पृष्टवन्तमाचार्यो ब्रूयादित्याह—तमिति । किं ब्रूयादित्येतदाह—यतस्त्वमित्यादिना । जातिर्जन्म, अन्वय पित्रादि, संस्कारो जातकर्मादिरुपनयनादिश्च, भिन्ना अनात्मभूता जात्यन्वयसंस्कारा यस्य

(१) कल्पनया —पाठ । (२) कश्चिद्गे—पाठ ।

शरीरं जात्यन्वयसंस्कारवर्जितस्यात्मनः प्रत्यभिज्ञासीर्ब्राह्मणपुत्रोऽदोन्वय इत्यादिना वाक्येनेति ॥ १५ ॥

स यदि पृच्छेत्—कथं भिन्नजात्यन्वयसंस्कारं शरीरं, कथं वाहं जात्यन्वयसंस्कारवर्जितः ? इति ॥ १६ ॥

आचार्यो ब्रूयात्—शृणु, सोम्य, यथेदं शरीरं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारम्; त्वं च जात्यन्वयसंस्कारवर्जितः ।—इत्युक्त्वा तं स्मारयेत्—स्मर्तुमर्हसि, सोम्य, परमात्मानं सर्वात्मानं यथोक्तलक्षणं श्रावितोऽसि " सदेव सोम्येदम् " इत्यादिभिः श्रुतिभिः स्मृतिभिश्च, लक्षणं च तस्य श्रुतिभिः स्मृतिभिश्च ॥ १७ ॥

शरीरस्य, तत्तथा । जात्यन्वयसंस्कारवर्जितस्यात्मनः कूटस्थस्य स्वरूपमिव—अहमित्युल्लिखन्—शरीरं प्रत्यभिज्ञासीर्ज्ञातवान् ' ब्राह्मणपुत्रः ' इत्यादिना वाक्येन । अतो विपर्ययदर्शित्वान्मृषाऽवादीरित्यर्थः ॥ १५ ॥

उक्तमर्थं विशदीकर्तुं शिष्यप्रश्नमुत्थापयति—स यदीति ॥ १६ ॥

गुरोरुत्तरदानाय प्रवृत्तिमाह—आचार्य इति । वक्तव्यस्यार्थस्यातिसूक्ष्मदृष्टिगम्यत्वात्, सावधानो भवेत्याह—शृणु सोम्येति । यथेदमित्यादि वर्जित इत्यन्तं शिष्योक्त्यनुवादवाक्यमुक्त्वा, तं शिष्यं पूर्वोक्तं परमात्मलक्षणं स्मारयेदिति योजना । यस्मात् " सदेवे " इत्यादिश्रुतिभिः, तदर्थानुकूलाभिः स्मृतिभिश्च यथोक्तलक्षणं परमात्मानं सर्वात्मानं श्रावितोऽसि, तस्मात् स्मर्तुमर्हसि सोम्येति योजनीयो ग्रन्थः । " य आत्मापहतपाप्मा "

---

(१) 'यवर्जित'—पाठः । (२) तदेव यथेदं—पाठः । (३) प्रतिज्ञातवान्, ऽर्ं ज्ञातवान्—पाठौ (४) छां. उ. ६. २. ८. (५) तत्रैव ८. ७. १.

लब्धपरमात्मलक्षणस्मृतये ब्रूयात्—योऽसावाकाशनामा नामरूपाभ्यामर्थान्तरभूतोऽशरीरः, अस्थूलादिलक्षणः, अपहतपाप्मत्वादिलक्षणश्च, सर्वैः संसारधर्मैरनागन्धितः, यत्साक्षाद्-इत्यादिभिः श्रुतिभिः, "न जायते" इत्यादिस्मृतिभिश्च पूर्वोक्तं ब्रह्मणो लक्षणं च—तस्यात्मनः—स्मर्तुमर्हसीत्यन्वयः ॥ १७ ॥

एवमुक्तं स्वरूपं स्मारयित्वा, शरीरस्य भिन्नजात्यन्वयसंस्कारत्वज्ञापनाय तदुत्पत्तिप्रकारमुपदिदेक्षित्याह—लब्धपरमात्मेति ।

लब्धा परमात्मलक्षणविषया स्मृतिरनुसन्धानं येन, तस्मै शिष्याय ब्रूयादित्यर्थः । उपलक्षणत्वेनोक्तवाक्यार्थमेव प्रकटयन्नात्मनः सकाशात् संघातोत्पत्तिप्रकारमाह—योऽसावित्यादिना । यः शास्त्रान्तरे प्रकरणान्तरे चात्मादिशब्दैः प्रसिद्धः, असौ "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा" इत्यत्र छान्दोग्ये निर्दिष्ट आकाशनामा, स्वात्मविलक्षणयोर्नामरूपयोर्व्याकर्ता, स सर्वस्यात्मेत्यन्वयः । आकाशनामेत्युक्ते भूताकाशशङ्का स्यात्, तां "आकाशोऽर्थान्तरत्वादिव्यपदेशात्" इति न्यायेन परिहरति—नामरूपाभ्यामर्थान्तरभूत इति । भूताकाशस्य नामरूपान्तःपातित्वात्तयोराधारभूत आत्मा आधेयादाकाशादेरन्य इत्यर्थः । असंगत्वादिभिराकाशसाम्यात् परमात्माऽप्याकाशशब्देन श्रुतिषु क्वचिन्निर्दिश्यते गौण्या वृत्त्येति द्रष्टव्यम् । अत एवाशरीरो मूर्तिवर्जितः । अशरीरपदमनिन्द्रियत्वादेरप्युपलक्षणमित्यभिप्रेत्य विशिनष्टि—अस्थूलादिलक्षण इति ।

अथवा—अशरीरः शरीरादिसंघातरहित इत्यत्र प्रमाणं सूचयति—अस्थूलादिलक्षण इति । यतः शरीरेन्द्रियमनःप्राणादिरहितः, अत एवापहतपाप्मादिलक्षणः—अभिमन्यमानस्याभावेऽभिमानाभावादित्यर्थः । चशब्देन स्वतो

(१) 'पाप्मादि'—पाठः। (२) भ. गी. २. २०. (३) छां. उ. ८. १४. १. (४) ब्र. सू. १. ३. ४२. (५) 'मादि'—पाठः।

परोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः, अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता, नित्यविज्ञानस्वरूपः, अनन्तरः, अबाह्यः, विज्ञानघन एव, परिपूर्ण आकाशवत्, अनन्तशक्तिः, आत्मा सर्वस्य, अशनायादिवर्जितः, आविर्भावतिरोभाववर्जितश्च, स्वात्मविलक्षणयोर्नामरूपयोर्जगद्बीजभूतयोः स्वात्मस्थयोस्तत्त्वान्यत्वाभ्यामनिर्वचनीययोः स्वसंवेद्ययोः स-

विकाररहित्यं समुचीयते। सर्वविशेषणैः सिद्धमर्थमाह—सर्वेरिति। अनागन्धितोऽसंश्लिष्ट इत्यर्थः। नन्वेवं परमात्मनोऽशरीरादिलक्षणत्वेऽपि, जीवः शरीरादिलक्षण एव स्यात्—इत्याशंक्य तस्य तेनानन्यत्वश्रवणान्मैवमित्यभिप्रेत्याह—यत्साक्षादित्यादिना। विज्ञातेत्युक्ते, प्राप्तं विज्ञानकर्तृत्वं वारयति—नित्यविज्ञानस्वरूप इति। तत्र प्रमाणमाह—अनन्तर इत्यादिना। आकाशवत्परिपूर्ण इत्यन्वयः। पूर्ण इति निष्ठाप्रत्ययो न कर्मणि, किन्तु कर्तरि। परिच्छेदाभावद्योतीत्याकाशदृष्टान्तः। कथमेवंलक्षणस्य द्रष्टृत्वाविकमुक्तमित्यत आह—अनन्तशक्तिरिति। "इन्द्रो मायाभिः पुरुरूप ईयते"[2] इति श्रुतेः। अनन्ता अनवच्छिन्ना दुर्लक्ष्या मायावस्थारूपाः शक्तय उपाधयो यस्य, सोऽनन्तशक्तिर्मायाकार्यान्तःकरणेन्द्रियोपाधिभिर्द्रष्टृत्वादिव्यपदेशभाग्भवतीत्यर्थः। 'सर्वस्य' स्थावरजङ्गमरूपस्य प्रपञ्चस्यात्मा स्वरूपमित्यर्थः। तस्य नित्यमसंसारित्वं स्वाभाविकमाह—अशनायादीति। आविर्भावतिरोभावसाक्षित्वादेव तद्वर्जित इत्यर्थः। एवमात्मस्वभावमुक्त्वा, नामरूपात्मकानात्मस्वभावं प्रपञ्चयति—स्वात्मविलक्षणयोरित्यादिना। अचेतनयोरित्यर्थः। जगद्बीजभूतयोरित्युपादानत्वमुच्यते। कथं तर्ह्यात्मो-

---

(१) ब्रह्म एष त आत्मा, ब्रह्म अयमात्मा—पाठौ। (२) ऋ. सं.६.४७.१८., शत. ब्रा. १४.५.५.१९.; बृ. उ. २. ५. १९., जैमिनीय. उ. ब्रा. १. ४४. १.

द्भावमात्रेणाचिन्त्यशक्तित्वाद्याकर्ताऽव्याकृतयोः ॥ १८ ॥

ते नामरूपे अव्याकृते सती व्याक्रियमाणे तस्मादेतस्मादात्मन आकाशनामाकृती संवृत्ते। तच्चाकाशाख्यं भूतं, अनेन प्रकारेण, परमात्मनः संभूतं, प्रसन्नादिव सलिलान्मलमिव

पादानत्वश्रुतिरित्यत आह—स्वात्मस्थयोरिति । उपादानाधारतामात्रेणं कथमुपादानत्वसिद्धिरित्यत आह—सद्भावमात्रेणेति । सद्भावो नाम सत्त्वम् । आत्मसत्तामात्रेणैवात्मनि स्थितयो, न पृथक् सतो—आत्मनिष्ठयोरित्यर्थ । तथा च स्वात्मैकता गतयोर्नामरूपयोर्व्याकर्ता स्वात्मन एव व्याकर्तत्युपादानत्वसिद्धिरात्मन इत्यभिप्राय । कुत एव चिद्रूपस्यात्मनोऽचिद्रूपेण स्वात्मव्याकरणमित्यत आह—अचिन्त्यशक्तित्वादिति । अव्याकृतयोरनभिव्यक्तयोरित्यर्थ । अनभिव्यक्ततया स्थित हि व्यक्तीक्रियत, न प्रागसत्, अतिप्रसङ्गादिति भाव ॥ १८ ॥

उक्तलक्षणयोर्नामरूपयोर्यदाऽसौ निष्पादयिता, तदा किमात्मके त प्रथम निष्पाद्येत ? इति तत्राह—ते नामरूपे इत्यादिना ।

तस्मादपहतपाप्मत्वादिलक्षणादतस्मादचिन्त्यशक्ते सर्वज्ञादाकाश इति नाम—वाचक. शब्द, आकृति—वाच्याकार इत्येवमाकार संवृत्ते—एव व्यवहारयोग्ये अभूतामित्यर्थ । वाच्यवाचकाकारेण सदात्मक ब्रह्मैव मायावशादभिव्यक्तमाकाशादिशब्दार्थात्मकमिति तात्पर्यार्थ ।

ननु कथचिदात्मनोऽचिदात्मकाकाशात्मना निष्पत्तिरिति शङ्का दृष्टान्तेन प्रत्याचष्टे—तच्चाकाशाख्यमित्यादिना । दृष्टान्त विद्रूपवन्नात्मन परिणामित्वशङ्का वारयति—न सलिलमित्यादिना । सलिलव्यतिरेकेण स्वरूपत पृथगनुपलम्भादित्यर्थ । फेनस्य सलिलाद्भेदाभावे सलिलस्यापि

(१) तथाका°—पाठ ।(२) °ण उपादानत्वव्यपदेश इत्यभिप्राय । कथ—पाठ ।
(३) स्वात्मनैव—पाठ ।

फेनम्। न सलिलं, न च सलिलादत्यन्तं भिन्नं फेनं—सलिलव्यतिरेकेणादर्शनात्; सलिलं तु स्वच्छं, अन्यच्च फेनान्मलरूपात्। एवं परमात्मा नामरूपाभ्यामन्यः फेनस्थानीयाभ्यां, शुद्धः प्रसन्नस्तद्विलक्षणः। ते नामरूपे अव्याकृते सती व्याक्रियमाणे फेनस्थानीये आकाशनामाकृती संवृत्ते ॥ १९ ॥

ततोऽपि स्थूलभावमापद्यमाने नामरूपे व्याक्रियमाणे वायुभावमापद्येते, ततोऽप्यग्निभावम्, अग्नेरब्भावं, ततः पृथिवीभावम्—इत्येवंक्रमेण पूर्वपूर्वभवस्योत्तरोत्तरानुप्रवेशेन पञ्च महाभूतानि पृथिव्यन्तान्युत्पन्नानि। ततः पञ्चमहाभूत-

न ततो भेद इत्यत आह—सलिलं त्विति। अतो न सलिलमेव फेनं, नापि ततो भिन्नं, किन्त्वनिर्वचनीयमित्यर्थः। तथा च श्रुतिः—"वाचाऽऽरम्भणं विकारो नामधेयम्" इति। दार्ष्टान्तिकमाह—एवं परमात्मेति। निरूपितामाकाशोत्पत्तिं निगमयति—ते नामरूपे इति ॥ १९ ॥

इदानीं ततो वाय्वाद्युत्पत्तिं प्रतिपादयति—ततोऽपीत्यादिना।

आकाशात्मना स्थिते नामरूपे तदनुगतेनात्मना व्याक्रियमाणे ततोऽप्याकाशादपि स्थूलभावमापद्यमाने सती वायुभावमापद्येते इति योजना। स्थूलभावः स्पर्शगुणेनोपचयः। ये नामरूपे आकाशात्मतां प्राप्ते, ते एव व्याक्रियमाणे वायुभावमापद्येते इति वदन् विकारस्य विकारान्तरोपादानत्वं वारयति। एवमुत्तरत्रापि द्रष्टव्यम्। तदेवं भूतोत्पत्तिमुक्त्वा, तेभ्यः संघातस्य स्थूलस्योत्पत्तिप्रकारमाह—पृथिव्याद्येति। पञ्चात्मिका इति।

---

(१) 'मन्यत् फे'—पाठः। (२) 'नामरूपाकृती—पाठः। (३) पूर्वपूर्वानुप्रवेशेन, पूर्वपूर्वोत्तरोत्तरानु'—पाठौ। (४) पञ्चभूतगुण'—पाठः। (५) छां. उ.६.१.४.

गुणविशिष्टा पृथिवी । पृथिव्याश्च पञ्चात्मिका व्रीहियवाद्या ओषधयो जायन्ते । ताभ्यो भक्षिताभ्यो लोहितं, शुक्रं च स्त्रीपुंसशरीरसंबन्धि जायते । तदुभयमृतुकालेऽविद्याप्रयुक्तं कामखजनिर्मथनोद्भूतं मंत्रसंस्कृतं गर्भाशये निषिच्यते । तत् स्वयोनिरसानुप्रवेशेन विवर्धमानं गर्भीभूतं नवमे, दशमे वा मासि जायते ॥ २० ॥

तज्जातं लब्धनामाकृतिकं जातकर्मादिभिर्मन्त्रसंस्कृतं पुन·

पञ्चीकृतपञ्चभूतनिर्वर्तिता इत्यर्थः । तदुभयं—स्त्रियो लोहितं, पुंसः शुक्रं चेत्यर्थः । काम एव खजो विलोडको मंथाः, तेन निर्मथनोद्भूतमित्यर्थः । एवं "गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति" इत्यादिगर्भाधानमन्त्रैः संस्कृतमित्यर्थः ॥ २० ॥

एवं शरीरोत्पत्तिमुपोद्घाततयोपदिश्य तस्य भिन्नजात्यन्वयसंस्कार पृष्टं प्रतिपादयति—तज्जातमित्यादिना ।

---

( १ ) पञ्चात्मन्यः, पञ्चात्मकाः—पाठौ । ( २ ) सबन्धि सभूय तदुभय'—पाठः । ( ३ ) 'प्रयुक्त बीज काम'—पाठः । ( ४ ) 'म सभूत—पाठः । ( ५ ) गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि, चत्वारि वेदव्रतानि, स्नान, सहधर्मचारिणीसयोगः, पञ्चमहायज्ञाः, अष्टकाः पार्वणः श्राद्ध श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः—इत्येते चत्वारिंशत् संस्काराः । अथाष्टावात्मगुणाः—दया सर्वभूतेषु, क्षान्तिः, अनसूया, शौचं, अनायासः, माङ्गल्यं, अकार्पण्यं, अस्पृहा—इति यस्यैते चत्वारिंशत् संस्काराः, अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यं जयति ।

—गौ. ध. सू. ८. १४. २२, २५.

( ६ ) 'न्त्रैः सं'—पाठः । ( ७ ) तै. सं. १. १३.

रुपनयनसंस्कारयोगेन ब्रह्मचारिसंज्ञं भवति । तदेव शरीरं पत्नीसंयोगसंस्कारयोगेन गृहस्थसंज्ञं भवति । तदेव वनस्थसंस्कारेण तापससंज्ञं भवति । तदेव क्रियाविनिवृत्तिनिमित्तसंस्कारेण परिव्राट्संज्ञं भवति । इत्येवं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं शरीरम् ॥ २१ ॥

मनश्चेन्द्रियाणि च नामरूपात्मकान्येव, "अन्नमयं हि सोम्य मनः" इत्यादिश्रुतिभ्यः ॥ २२ ॥

कथं चाहं भिन्नजात्यन्वयसंस्कारवर्जित इत्येतच्छृणु—यो-

जातमित्यस्य व्याख्या—लब्धनामाकृतिकमिति । भूतोपादानकत्वेन पित्रादिनिमित्तकत्वेन च भिन्नजात्यन्वयौ शरीरस्योक्तौ । इदानीं संस्कारमाह—जातकर्मादिभिरिति ॥ २१ ॥

एवं स्थूलशरीराभिमानाच्छिष्यं व्युत्थाप्य, सूक्ष्मशरीराभिमानमपि तस्य त्याजयंस्तस्यापि भौतिकत्वमाह—*मनश्चेत्यादिना* ।

नामरूपात्मकान्येव भौतिकान्येवेत्यर्थः । तत्र प्रमाणमाह—*अन्नमय*मिति । अतो मन आदिसूक्ष्मसंघातोऽपि नात्मा, भौतिकत्वात्, स्थूलवदित्यर्थः ॥ २२ ॥

कथं भिन्नजात्यन्वयसंस्कारं शरीरमित्यस्य प्रश्नस्योत्तरमभिधाय, कथं चाहं जात्यन्वयसंस्कारवर्जित इति शिष्योक्तिमनूद्योत्तरमाह—*कथं चेत्या*दिना ।

यस्तु नामरूपविलक्षणः पूर्वोक्तविलक्षणो नामरूपात्मकस्य सर्वस्य

---

(१) पत्नीयोग°—पाठः । (२) क्रियानिवृत्तिनिमित्तेन स°—पाठः । (३) °रूपकाण्येव—पाठः । (४) छां. उ. ६. ५. ४. (५) °ष्यमुत्थाप्य—पाठः (६) १६ वाक्ये. (७) °विशेषणः—पाठः ।

ऽसौ नामरूपयोर्व्याकर्ता नामरूपधर्मविलक्षण, स एव नामरूपे व्याकुर्वन्–सृष्ट्वेदं शरीरं स्वयं संस्कारधर्मवर्जितो नामरूपे इह प्रविष्टः अन्यैरदृष्टः स्वयं पश्यन्, तथाऽश्रुतः शृण्वन्, अमतो मन्वानः, अविज्ञातो विजानन्, "सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन्यदास्ते ॥" इति। अस्मिन्नर्थे श्रुतयः सहस्रशः—"तत्सृष्ट्वा। तदेवानुप्राविशत्",

स्रष्टा, जात्यन्वयसंस्कारवर्जित, स एवाऽविकृतः सृष्टेषु कार्यकरणसंघातेषु प्रविष्टो जीवात्मेति श्रुतिस्मृतिप्रसिद्धत्वात्, न तस्य जात्यन्वयसंस्कारसंबन्ध इति प्रतिपादयन्नाह—योऽसावित्यादि। ननु परमात्मैव चेदिह प्रविष्टः पक्षीव नीडं, तर्हि कथं स सर्वैर्नोपलभ्यत इति? तत्राह—अन्यैरदृष्ट इति। "अदृष्टो द्रष्टा" इत्यादि श्रुतिरिहार्थतो दर्शिता। सर्वस्य यो विज्ञाता—सर्वावभासकत्वान्नान्यैरवभास्यते—सोऽत्रैवेह प्रविष्ट इति भावः। अत्र मन्त्रमुदाहरति—सर्वाणीति। रूपाणि शरीराणि विचित्य विरचय्य, धीरो धीमान् सर्वज्ञस्तत्र प्रविश्य नामानि कृत्वा, देवोऽहं मनुष्योऽहमित्यभिवदनादिव्यापारं कुर्वन् यदास्ते–यो वर्तते, तं "वेदाहमेतम्" इति पूर्वार्धेनान्वय.। अस्मिन्नर्थ इति। स्रष्टुरेव जीवरूपेण प्रवेश इत्यत्रेत्यर्थः।

ब्राह्मणवाक्यान्यप्यत्रोदाहरति—तत्सृष्ट्वेत्यादिना। "एष त आत्मान्तर्याम्यमृत" इति वाक्यशेष.। स ईक्षणपूर्वकं जगत्सृष्ट्वा, एतमेव प्रसिद्धं सीमानं शिरःकपालसन्धिं विदार्य भित्वा, एतया ब्रह्मरन्ध्रवाच्यया द्वारा

---

(१) तै. आ. ३ १२. ७. (२) तै. उ. २. ६. (३) बृ. उ. वार्तिके १. ४ ४९६—६१३. (४) बृ. उ. ३. ७ २३. (५) ता स सर्वा—पाठ। (६) विचिन्त्य विचार्य, विचित्य विरचय्य—पाठौ (७) बृ. उ. ३. ७. ३.

"अन्तः प्रविष्टः शास्ता जनानाम्[1]", "स एष इह प्रविष्टः[2]", "एष म आत्मा[3]", "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत[4]", "एष सर्वेषु भूतेषु गूढोऽऽत्मा[5]", "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः[6]" इत्याद्याः[7] श्रुतयः ॥ २३ ॥

स्मृतयोऽपि—"आत्मैव देवताः सर्वाः[8]", "नवद्वारे पुरे देही[9]", "क्षेत्रज्ञं चापि मां विद्धि[10]", "समं सर्वेषु भूतेषु[11]", "उपद्रष्टानुमन्ता च[12]", "उत्तमः पुरुषस्त्वन्यः[13]", "अश-

च्छिद्रेण प्रापद्यत देहमध्ये प्रविष्ट इत्यर्थः । "अन्तः प्रविष्टं कर्तारमेतम्[14]", "भर्ता सन् भ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्टः" ।

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥[15]"

इत्यादिमन्त्रब्राह्मणवादानप्यत्र सूचयति—इत्याद्याः श्रुतय इति ॥ २३ ॥

परमात्मैव क्षेत्रज्ञ इति श्रुत्युक्तेऽर्थे स्मृतीरप्युदाहरति—स्मृतयोऽपीति । शरीरे वर्तमानस्यापि शरीरधर्मासंस्पर्शित्वे श्रुतिं प्रमाणयति—

---

(१) तै. आ. ३. ११. (२) बृ. उ. १. ४. ७. (३) तत्रैव ३. ७. ३. (४) ऐ. उ. ३. १२. (५) कठ. उ. १. ३. १२. (६) छां. उ. ६. ३. २. (७) द्याः ।—पाठः । (८) मनुस्मृ. १२. ११९. (९) भ. गी. ५. १३. (१०) तत्रैव—१३. २. (११) तत्रैव—१३. २७. (१२) तत्रैव—१३. २२. (१३) तत्रैव—१५. १७. (१४) तै. आ. ३. १४. सन्निविष्टः—पाठः । योऽयं प्राणाभिमानी देवः सोऽयं भर्ता पोषकः सन् भ्रियमाणोऽन्तर्यामिणा परमेश्वरेण स्वयं धार्यमाणः सन् बिभर्ति देहं धारयति—प्राणोपलक्षितलिंगशरीरतादात्म्याध्यासादित्यर्थः । एवं च 'जीव प्राणधारणे' इति धातुरपि सङ्गच्छते । (१५) ऋ. सं. १. १६४. ४६.

रीरं शरीरेषु" इत्याद्याः। तस्माज्जात्यन्वयसंस्कारवर्जितस्त्व-मिति सिद्धम् ॥ २४ ॥

स यदि ब्रूयात्—अन्य एवाहमज्ञः सुखी दुःखी बद्धः संसारी, अन्योऽसौ मद्विलक्षणोऽसंसारी देवः, तमहं वल्युपहारनमस्कारादिभिर्वर्णाश्रमकर्मभिश्चाराध्य संसारसागरादुत्तितीर्षुरस्मिः—कथमहं स एव ?—इति ॥ २५ ॥

आचार्यो ब्रूयात्—नैवं, सोम्य, प्रतिपत्तुमर्हसि—प्रतिपिद्धत्वाद्भेदप्रतिपत्तेः। कथं प्रतिषिद्धा भेदप्रतिपत्तिरित्यत आह—

अशरीरं शरीरेष्विति। "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्" इत्यादिश्रुतय आदिशब्दार्थः। यस्मादेवं श्रुतिस्मृतिन्यायैरात्मा देहादेर्भिन्नोऽसङ्गस्तद्धर्मासस्पृष्टश्च, तस्मादिति प्रकृतमुपसंहरति—तस्मादिति ॥ २४ ॥

एवं परमात्माभेदोपदेशेन जीवस्य जात्यन्वयसंस्काररराहित्यमुक्तमवधार्य, तत्र स्वानुभवविरोधं शंकते—स यदीति।

अज्ञत्वादेः स्वात्मन्यनुभवसिद्धत्वात्, तद्विलक्षणेश्वरात्मत्वं श्रुत्यादिभिरुक्तमपि न संभावयामि, किन्तु भिन्नमेव तमहं मन्ये—उत्कृष्टमीश्वरं निकृष्टसंसार्यात्मना पश्यतः प्रत्यवायापत्तेः। अतस्तं देवं स्वकर्मणा भक्त्या चाराध्य, तत्प्रसादान्मुक्तसंसारो भविष्यामीति मे मतिरिति शिष्याभिप्राय इत्यर्थः ॥ २५ ॥

नैवं वादीः, भेददर्शन एव प्रत्यवायश्रवणादिति गुरुः परिहरति—नैवं सोम्येति। सम्रहवाक्यमाक्षेपसमाधानाभ्यां विवृणोति—कथमित्या

(१) (?) सूतसं. २.११.६७,कठ.उ.२.२२. (२) ई.उ.८. (३)विरुद्ध—पाठः।

"अन्योऽसावन्योऽहमस्मीति न स वेद[1]", "ब्रह्म तं परादाद्यो-ऽन्यत्रात्मनो ब्रह्म वेद[2]", "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति[3]" इत्येवमाद्याः ॥ २६ ॥

एता एव श्रुतयो भेदप्रतिपत्तेः संसारगमनं दर्शयन्ति ॥ २७ ॥

दिना । प्रत्यक्षसिद्धस्य भेदस्य कथं तद्विरुद्धप्रमाणान्तरेण प्रतिषेध इत्याक्षेपार्थः । असंसारीश्वरस्याप्रत्यक्षत्वात्, तद्भेदस्य स्वात्मनि प्रत्यक्षत्वाभावात्, सुखित्वाद्यनुभवस्य भ्रान्त्याप्युपपत्तेः, तद्बलाद्भेदाध्यवसायायोगात्, अनन्यथासिद्धार्थश्रुतिप्रतिषिद्धो भेदो न मानमर्हतीति समाधानाभिप्रायः ॥ २६ ॥

उदाहृताः श्रुतयो न भेददर्शनमात्रं प्रतिषेधन्ति[4], किन्तु भेददर्शिनः प्रत्यवायमप्यनर्थप्राप्तिरूपमावेदयन्तीत्याह—एता एवेति ।

तथाहि—अन्योऽसौ परमेश्वरो मद्विलक्षणः, अन्योऽहं तद्विलक्षणः संसार्येवेति योऽन्यां देवतामुपास्ते—तात्पर्येण पश्यति—न स वेद तत्त्वमिति भेददर्शनस्याविद्यामूलत्वमुक्त्वा "यथा पशुरेवं स देवानाम्[5]" इति देवपशुत्वप्राप्तिं तस्य दर्शयन्ति, नहि पराधीनात्मत्वतोऽन्यद्दैन्यं कष्टं वा वर्तेत इति । तथा—योऽन्यत्रान्यदेवेदमित्यात्मनः पृथगेव ब्रह्म ब्राह्मणजातिं वेद, तं तदेव ब्रह्म ब्राह्मणत्वजातिः परादात् पराकुर्यात्—तत्त्वविमुखं कुर्यात्—आत्मरूपं मामनात्मतया पश्यतीति द्वेष्येव, नतु हितमावहतीत्यर्थः । एवं "क्षत्रं तं परादात्" इत्यादि "सर्वं तं परादात्" इत्यन्तमुदाहरणं द्रष्टव्यम् । इहात्मनि यो नानेव पश्यति[6]—इवशब्दो नानात्वदर्शि-

---

(१) बृ. उ. १. ४. १०. (२) तत्रैव २. ४. ६; ४. ५. ७. (३) तत्रैव ४. ४. १९; कठ. उ. ४. १०. (४) निषेधन्ति—पाठः । (५) बृ. उ. १. ४. १०. (६) तत्रैव ४. ४. १९.

अभेदप्रतिपत्तेश्च मोक्षं दर्शयन्ति सहस्रशः । " स आत्मा तत्त्वमसि " इति परमात्मभावं विधाय " आचार्यवान् पुरुषो वेद" इत्युक्त्वा " तस्य तावदेव चिरम् " इति मोक्षं दर्शयन्ति अभेदविज्ञानादेव । सत्याभिसन्धस्यातस्करस्येव दाहाद्यभावदृष्टान्तेन संसाराभावं दर्शयन्ति । भेददर्शनादसत्याभिसन्धस्य संसारगमनं दर्शयन्ति तस्करस्येव दाहादिदृष्टान्तेन ॥ २८ ॥

"त इह व्याघ्रो वा" इत्यादिना चाऽभेददर्शनात् " स स्वराड्भवति " इत्युक्त्वा, तद्विपरीतेन भेददर्शनेन संसारगनस्याभासत्वद्योतनार्थः—स मृत्योः मृत्युं संसारात्संसारं अनर्थपरंपरामेवाप्रोतीत्यर्थः । इत्येवमाद्या इति । " नेह नानाऽस्ति किंचन ", " उदरमन्तरं कुरुते । अथ तस्य भयं भवति " इत्याद्याः श्रुतयो गृह्यन्ते ॥ २७ ॥

भेददृष्टिं निन्दित्वाऽभेददृष्टिं फलवत्तया प्रशंसंस्तस्या एवोपादेयतां दर्शयति—अभेदप्रतिपत्तेश्चेति ।

तत्र श्रुत्येकदेशमुदाहृत्य व्याचष्टे—स आत्मेत्यादिना । तत्रैवान्वयव्यतिरेकोपपत्तिपरश्रुत्यर्थमुदाहरन्नुक्तमर्थं द्रढयति—अभेदविज्ञानादेवेति । "पुरुषं सोम्योत हस्तगृहीतमानयन्ति" इति खंडे इममर्थं दर्शयन्तीत्यर्थः ॥ २८ ॥

सुषुप्तौ परमात्मन्यभेदसंपत्तावपि तथाज्ञानाभावापराधादेव पुनरपि व्याघ्रादिभावेनोत्थितानां संसाराविच्छेदं दर्शयन्ती श्रुतिः परमात्माभेदेनात्मज्ञानमेव मोक्षहेतुरिति सूचयतीत्यभिप्रेत्याह—त इह व्याघ्रो वेत्यादिना चेति ।

अत्रैवोदाहरणान्तरमाह । अभेददर्शनात्स स्वराडित्यादिना " यदा

(१) छां. उ. ६. ८. ७. (२) तत्रैव ६. १४. २. (३) तत्रैव ६. १६. २. (४) °भाववत् स······न्ति दृष्टान्तेन—पाठः । (५) छां. उ. ६. ९. ३. (६) बृ. उ. ४. ४. १९. (७) तै. उ. २. ७. (८) छां. उ. ६. १६. १.

मनं दर्शयन्ति—"अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति" इति प्रतिशाखम् । तस्मान्मृषैवैवमवादीः 'ब्राह्मणपुत्रोऽदोऽन्वयः संसारी परमात्मविलक्षणः' इति ॥ २९ ॥

तस्मात्–प्रतिषिद्धत्वाद्भेददर्शनस्य, भेदविषयत्वाच्च कर्मोपादानस्य, कर्मसाधनत्वाच्च यज्ञोपवीतादेः–कर्मसाधनोपादानस्य परमात्माभेदप्रतिपत्त्या प्रतिषेधः कृतो वेदितव्यः ।

कर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमात्माऽभेदप्रति-

ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति" इत्याद्याः श्रुतयोऽप्युदाहर्तव्या इत्याह—इति प्रतिशाखमिति । यस्मादेवं भेददर्शननिन्दयाऽभेददर्शनस्तुत्या च जीवस्य ब्रह्माभेदोऽवधारितः, अतो ब्राह्मणत्वाद्यभिमानस्यात्मनि मिथ्यादृष्टित्वं सिद्धमिति प्रकृतमुपसंहरति—तस्मादिति ॥ २९ ॥

यदुक्तं "तमहं बल्युपहारनमस्कारादिभिर्वर्णाश्रमकर्मभिश्चाराध्य" इति साऽपि दृष्टिः—भेददर्शनापवादादेव–न सम्यग्दृष्टिरित्याह—तस्मात्प्रतिषिद्धत्वादिति । भेदविषयत्वाच्च कर्मोपादानस्येति । क्रियाकारकफलभेदाश्रयमन्तरेण कर्मणः स्वरूपासिद्धेरित्यर्थः । "यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा" इति श्रुतेर्यज्ञोपवीतधारणादेः कर्मसाधनत्वावगमात्, साध्यकर्माभावे तत्साधनपरिग्रहो निरर्थक इत्यभिप्रेत्याह—कर्मसाधनत्वाच्च यज्ञोपवीतादेरिति । कर्मसाधनयोरुपादानं कर्मसाधनोपादानं, त-

(१) छां. उ. ७. २५. २. (२) तै. उ. २. ७. (३) २५ वाक्ये. (४) तै. आ. २. १.

पत्तिविरुद्धत्वात्, संसारिणो हि कर्माणि विधीयन्ते, तत्साधनानि च यज्ञोपवीतादीनि, न परमात्मनोऽभेददर्शिनः। भेददर्शनमात्रेण च ततोऽन्यत्वम् ॥ ३० ॥

यदि कर्माणि कर्तव्यानि, न विनिवर्तयिषितानि, कर्मसाधनासंबंधिनः कर्मनिमित्तजात्याश्रमाद्यसंबंधिनश्च, परमात्मनश्चात्मनैवाभेदप्रतिपत्तिं नावक्ष्यत्—"स आत्मा तत्त्वमसि" इत्येवमादिभिर्निश्चितरूपैर्वाक्यैः—भेदप्रतिपत्तिनिन्दां च ना-

स्येति विग्रहः। कथमभेदप्रतिपत्तिमात्रेण कर्मतत्साधनप्रतिषेधसिद्धिः, कर्मणोऽप्यभेदप्रतिपत्तिसंभवादित्याशंक्याह—कर्मणामिति। ब्रह्माहं, कर्ता चाहमिति विरुद्धप्रतिपत्त्योरेकस्मिन् पुरुषे समुच्चयायोगादित्यर्थः। तर्हि अधिकार्यभावान्निरालम्बनं कर्मकाण्डमप्रमाणं स्यादिति? नेत्याह—संसारिणो हीति। संसारिणो जात्याद्यभिमानवतः, (इत्यर्थः) न परमात्मनोऽभेददर्शिन इत्यर्थः। संसारिणोऽपि परमात्मानन्यत्वात् कथं तस्य कर्मविधिरित्यत आह—भेददर्शनमात्रेण च ततोऽन्यत्वमिति। न वस्तुवृत्त्या भेदापेक्षा कर्मविधेरिति भावः ॥ ३० ॥

यदुक्तं ब्रह्मात्मैक्यप्रतिपत्त्या कर्मणां तत्साधनानां च श्रुत्या प्रतिषेधः कृत इति, तद्व्यतिरेकमुखेन साधयति—यदि कर्माणीत्यादिना।

परमात्मनश्चेति चकारादात्मनो ब्रह्मणैवाऽभेदप्रतिपत्तिमिति योज्यम्। एवमादिभिरिति। अहं ब्रह्मास्मीत्यादिवाक्यं गृह्यते। निश्चितरूपैर्वाक्यैरिति। संवादिविसंवादिप्रमाणान्तरासिद्धविषयत्वे सत्यनन्यशेषतया च स्वार्थैकपरत्वेन निर्णीतस्वभावैरित्यर्थः। भेदप्रतिपत्तिनिन्दामिति। "मृत्योः

(१) छां.उ. ६. ८. ७.

भ्यधास्यत्—"एष नित्यो महिमा ब्राह्मणस्य[1]", "अनन्वागतं पुण्येनानन्वागतं पापेन[2]", "अत्र स्तेनोऽस्तेनः[3]"—इत्यादिना ॥ ३१ ॥

कर्मासंबन्धिस्वरूपत्वं कर्मनिमित्तवर्णाद्यसंबन्धरूपतां च नाभ्यधास्यत्, कर्माणि च कर्मसाधनानि च यज्ञोपवीतादीनि यद्यपरिजिहीर्षितानि; तस्मात्ससाधनं कर्म परित्यक्तव्यं मुमुक्षुणा—परमात्माभेददर्शनविरोधात्—आत्मा च पर एव प्रतिपत्तव्यो यथाश्रुत्युक्तलक्षणः ॥ ३२ ॥

स यदि ब्रूयात्—भगवन्, दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदना; अशनायादिनिमित्तं च प्रत्यक्षं दुःखं मम। परश्चायमात्मा, अयं "आत्मापहतपाप्मा विजरो विमृत्यु-

स मृत्युम्" इत्यादिभिर्वाक्यैरिति शेषः। ब्राह्मणस्य ब्रह्मविदः। स हि मुख्यो ब्राह्मणः "स ब्राह्मणः[4]" इति श्रुतेरित्यर्थः ॥ ३१ ॥

उदाहृतवाक्यानां क्रमेण तात्पर्यमाह—कर्मासंबन्धीत्यादिना।

यदि कर्मादीनि न परिजिहीर्षितानि, तर्ह्येवमुक्तं सर्वं नाभ्यधास्यदिति संबन्धः। अभिधत्ते तु श्रुतिस्तं तमर्थम्, अतो ब्रह्मात्मज्ञानमिच्छता कर्मादीनि परित्याज्यानीत्याह—तस्मादिति ॥ ३२ ॥

तदेवमागमावष्टंभेन निरूपितं ब्रह्मात्मैक्यं युक्त्याऽपि व्यवस्थापयितुमुत्तरो ग्रन्थः। तत्राक्षेप्ता शिष्यः "जीवपरमात्मानौ वस्तुतो भिन्नौ, विरुद्धधर्मसंसर्गित्वात्, शीतोष्णवत्", इत्यनुमानेन प्रत्यवतिष्ठत इत्याह—

(१) बृ. उ. ४. ४. २३. (२) बृ. उ. ४. ३. २२. (३) बृ. उ. ४. ४. १९. कठ. उ. ४. १०.; आत्मप्रबोधे. १. (४) बृ. उ. ३. ५. १.

विशोको विजिघत्सोऽपिपासः" सर्वसंसारधर्मविवर्जितः श्रूयते सर्वश्रुतिषु स्मृतिषु च। कथं तद्विलक्षणोऽनेकसंसारधर्मसंयुक्तः परमात्मानमात्मत्वेन मां च संसारिणं परमात्मत्वेनाग्निमिव शीतत्वेन प्रतिपद्येयं? संसारी च सन्, सर्वाभ्युदयनिःश्रेयससाधनेऽधिकृतः, अभ्युदयनिःश्रेयससाधनानि कर्माणि तत्साधनानि यज्ञोपवीतादीनि कथं परित्यजेयम्?—इति॥ ३३॥

तं प्रति ब्रूयात्—यदवोचो दह्यमाने च्छिद्यमाने वा देहे प्रत्यक्षा वेदनोपलभ्यते ममेति, तदसत्। कस्मात्? दह्यमाने च्छिद्यमान इव वृक्ष उपलब्धुरुपलभ्यमाने कर्मणि शरीरे

स यदीत्यादिना। एवं विरुद्धधर्मवत्त्वहेतुमुपपाद्यानुमानमाह—कथं तद्विलक्षण इति। एवं सति, भेदस्य तात्त्विकत्वे कर्मतत्साधनपरित्यागात्मकस्य संन्यासस्य नास्त्यवसर इत्याह—संसारी चेति॥ ३३॥

तत्रानुमाने तावद्धेत्वसिद्धिं दर्शयितुमुपक्रमते। तं प्रति ब्रूयादित्यादिना।

जीवपरमात्मानाविति किमुपाधिभेदविशिष्टं वस्तु यथाप्रतिपत्ति निर्दिश्यते? किंवा चैतन्यमात्राकारम्? आद्ये बाधव्यभिचारौ, आकाशभेदवदौपाधिकस्य भेदस्यावास्तवत्वात्, भेदमात्रसाधने सिद्धसाधनत्वाच्चेत्यभिप्रेत्य द्वितीयेऽसिद्धिमुक्त्वा तामुपपादयति—तदसत्। कस्मादित्यादिना। वृक्ष इव दह्यमाने छिद्यमाने शरीरे दाहच्छेदवेदनाया उपलभ्यमानत्वाद्दाहादिसमानाश्रयैव दाहच्छेदादिवेदनेति योजना। शरीरस्यैव तदुपलब्धृत्वशंकां वारयितुं तद्विशिनष्टि—कर्मणीति। कर्मत्वं साधयति—

---

(१) छां. उ. ८. १. ५. विरजो—पाठ.। (२) सर्वगन्धरसवर्जितः—पाठः। (३) °यम्—पाठः।

दाहच्छेदवेदनायां उपलभ्यमानत्वाद्दाहादिसमानाश्रयैव वेदना । यत्र हि दाहश्छेदो वा क्रियते, तत्रैव व्यपदिशति दाहादिवेदनां लोकः, न वेदनां दाहाद्युपलब्धरीति । कथं ? क्व ते वेदनेति पृष्टः, शिरसि मे वेदना, उरस्युदर इति वा, यत्र दाहादिस्तत्रैव व्यपदिशति, न तूपलब्धरीति । यद्युपलब्धरि वेदना स्यात् वेदनानिमित्तं वा दाहच्छेदादि, वेदनाश्रयत्वेनोपदिशेद्दाहाद्याश्रयवत् ॥ ३४ ॥

स्वयं च नोपलभ्येत, चक्षुर्गतरूपवत् । तस्माद्दाहच्छेदादिसमानाश्रयत्वेनोपलभ्यमानत्वाद्दाहादिवत्कर्मभूतैव वेदना ।

उपलब्धुरुपलभ्यमान इति । उक्तमर्थं लोकप्रसिद्ध्या द्रढयति—यत्र ीति । तत्रैवानुभवमपि प्रश्नपूर्वकमभिनयति—कथमित्यादिना । पुनस्तदेव व्यतिरेकमुखेनोपपादयति—यद्युपलब्धरीति । उपदिशेदित्यस्मात्पूर्वमुपलब्धारमित्यध्याहारः । यद्युपलब्धरि वेदना स्यात्तदा दाहाद्याश्रयदेहदेशवद्वेदनानिमित्तदाहच्छेदादिजन्यवेदनाश्रयत्वेनोपलब्धारमुपदिशेल्लोकः, नैवमुपदिशन्नुपलभ्यते, अतो दाहच्छेदादिसमानाश्रयैव वेदनेति योजना ॥ ३४ ॥

तत्रैव युक्त्यन्तरमाह—स्वयं चेति ।

यथा चक्षुर्गतं रूपं न चक्षुषा गृह्यते, तथाऽऽत्मगता वेदनाऽऽत्मना न गृह्येत, कर्मकर्तृत्वविरोधादित्यर्थः । आत्मनो वेदनाश्रयत्वनिराकरणमुपसंहरति—तस्मादिति । ननु वेदना नाम दुःखं, न तदचेतने देहे संभवति, सुखदुःखादिधर्माणां चेतनाश्रयत्वनियमात् । यदि पुनश्चेतनोऽप्यात्मा न

---

(१) 'उपलब्धु' अधिकः पाठः टीकानुसारी । (२) यद्युपलब्धरि वेदना स्यात्तदा वेदनानिमित्तदाहच्छेदादिवेदनाश्रयत्वेनो'—टीकानुसारी पाठः ।

**भावरूपत्वाच्च साश्रया तन्दुलपाकवत् । वेदनासमानाश्रय एव तत्संस्कारः स्मृतिसमानकाल एवोपलभ्यमानत्वात्,—वेदनाविषयः तन्निमित्तविषयश्च द्वेषोऽपि संस्कारसमानाश्रय एव ।**

वेदनाश्रयः, तदा शरीरमप्यचेतनं न तदाश्रयः, इत्यनाश्रयैव वेदनाऽस्तु, बौद्धैरपि तथाऽभ्युपगमादित्यत आह—भावरूपत्वाच्चेति । भावरूपत्वं कार्यत्वम् । वेदना साश्रया, कार्यत्वात्, तन्दुलपाकादिवदित्यर्थः । इतोऽप्रयोजकतामाशङ्क्य विपक्षे बाधकमाह—वेदनासमानाश्रय इति । वेदनाया निराश्रयत्वे तन्नाशे संस्काराभावात्कालान्तरे स्मरणं न स्यादित्यर्थः । यद्वा—हेत्वसिद्धिं परिहरति—वेदनासमानाश्रय एव तत्संस्कार इति । वेदनाया अकार्यत्वे तत्संस्कारस्मृत्योरसम्भवात् कालान्तरे पादे मे वेदनाऽभूदित्यादिव्यवहारो न स्यादित्यभिप्रायः । अथवा—साश्रया यदि वेदना, तर्ह्यात्माश्रयैव स्यात्—आत्मन्येव तत्संस्कारस्मृत्यादेरुपलम्भादित्याशङ्क्याह—वेदनासमानाश्रय एव तत्संस्कार इति । यस्या वेदनोपलभ्यते, तस्य एव तज्जन्यसंस्कारादि, वेदनातत्संस्कारस्मृतीनामेकाश्रयत्वनियमाद्वेदनायाश्चोपलब्धिकर्मनिष्ठत्वोपपादनान्नोपलब्ध्र्यात्मनि तत्संस्कारादिरित्यर्थः । तदेवानुमानेन साधयति—स्मृतिसमानकाल एवेति । स्मृतेर्यः कालो जाग्रदवस्थारूपः, तत्रैवोपलभ्यमानत्वात्, सुषुप्त्यादावनुपलभ्यमानत्वात्, वेदनाविषयो वेदनासमानविषयः समानाश्रय एव तत्संस्कार इत्यक्षरार्थः । तथा चायं प्रयोगः—वेदनादिरनात्माश्रयः, अनात्मप्रत्ययकाल एवोपलब्धिगोचरत्वात्, देहगौर्यादिवदिति । इतोऽप्यनात्माश्रय एव वेदनादिरित्याह—तन्निमित्तविषयश्चेति । तत् तस्या वेदनाया यन्निमित्तं दाहच्छेदादि तद्विषयो द्वेषोऽपि संस्कारतुल्याश्रयोऽनात्माश्रय इत्यर्थः । अयमिह प्रघट्टकाभिप्रायः—देहे छिद्यमाने दह्यमाने चाहं छिन्नो दग्ध इति च देहाभिन्नमात्मानं मन्यमानः संतप्यते जनः, तन्निमित्तकवेदनातत्संस्कारस्मृतिद्वेषाश्च देहाभिन्न

तथा चोक्तम्—

" रूपसंस्कारतुल्याधी रागद्वेषौ भयं च यत् ।

गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धोऽभयः सदा " ॥ ३५ ॥

किमाश्रयाः पुना रूपादिसंस्कारादय इति ? उच्यते—यत्र कामादयः । क्व पुनस्ते कामादयः ? " कामः संकल्पो विचि-

एवात्मन्युपलभते, न देहाभिमानहीनावस्थायाम् । देहश्चोपलभ्यमानत्वादुपलब्धिकर्मैव, नोपलब्ध्याश्रय इति संघातस्यैव वेदनादिः, नासंहतस्य साक्षिण आत्मन इति नित्यशुद्ध एवात्मेति । एवं निरूपितेऽर्थे वृद्धसंमतिमाह—तथा चोक्तं रूपेति । रूपं नीलपीतादिविषयः, तस्य संस्कारः सूक्ष्मावस्था, तदनुभवसंस्कारो वा स्मृतिहेतुः, स रूपसंस्कारः; तेन सह तुल्यः समानः आधिरुपाधिराश्रयो ययो रागद्वेषयोस्तौ रूपसंस्कारतुल्याधी । यच्च भयं त्रासस्तदपि रूपसंस्कारतुल्याधीत्यर्थः । किमाश्रयत्वमेषामित्यत आह—गृह्यते धीश्रयमिति । गृह्यते तत् त्रयमेतदिति शेषः । संकल्पविचिकित्सादेरप्युपलक्षणमेतत् । यतस्माद्रूपादिसंस्कारः तज्जन्यरागादि सर्वं धीसंश्रितमेवोपलभ्यते, न तत्साक्षिसंश्रितं, तत्तस्माज्ज्ञाता आत्मा सदा शुद्धो रागद्वेषरहितोऽभयश्च संसाररहित इत्यर्थः ॥ ३५ ॥

युक्त्या, संमत्या चोपपादितं वेदनादीनामप्यनात्मधर्मत्वं पुनः प्रश्नपूर्वकं श्रुत्या प्रतिपादयंस्तदाश्रयविशेषं निर्धारयति—किमाश्रया इत्यादिना ।

इत्यादिश्रुतेः—" एतत्सर्वं मन एव " इत्यवधारणात्, मनोबुद्ध्योश्चान्तःकरणात्मनैकत्वात्, बुद्धावेव कामादयः, नात्मनि—इत्यवधारितम्, इत्यर्थः । कामादेर्बुद्ध्याश्रयत्वेऽपि, कथं रूपादिसंस्कारसमानाश्रयत्वसिद्धिः?—इत्याशंक्य, रूपादेरपि बुध्याश्रयत्वे श्रुतिमाह—तत्रैवेत्यादिना ।

---

( १ ) तुल्य—पद्य-प्र. १५. १३. ( २ ) बृ. उ. १. ५. ३; मै. उ. ६ ३०.

किंत्सा " इत्यादिश्रुतेर्बुद्धावेव । तत्रैव रूपादिसंस्कारादयोऽपि, " कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदये " इति श्रुतेः । " कामा येऽस्य हृदि श्रिताः ", " तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य ", " असङ्गो ह्ययम् ", " तद्वा अस्यैतदतिच्छन्दाः " इत्यादिश्रुतिशतेभ्यः; " अविकार्योऽयमुच्यते ", " अनादित्वान्निर्गुणत्वात् " इत्यादिभ्यः—इच्छाद्वेषादि च क्षेत्रस्यैव—विषयस्य—धर्मः, नात्मन

कामादेरन्तःकरणनिष्ठत्वे वाक्यान्तरं पठति—कामा येऽस्येति । " तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य" इत्युक्तेः । सनिदानानामेव तेषां हृदयाश्रयत्वं गम्यते, तस्माच्छोकनिमित्तरूपादिसंस्काराणामपि बुद्धयाश्रयत्वं युक्तमेव, अन्यथा सर्वविशेषणानुपपत्तेरित्यर्थः । इदानीमात्मनो वेदनाकामद्वेषाद्यसंस्पृष्टत्वे श्रुतिस्मृतीः पठति—असङ्गो ह्ययमित्यादिना । अतिच्छन्दा इति छान्दसम्—रूपविशेषणत्वात् । अतिच्छन्दम्—छन्दः कामः अतिगतकामम्, असंस्पृष्टकामादिदोषम्, एतदात्मस्वरूपमित्यर्थः । निर्गुणत्वादित्यादिस्मृतिभ्यश्चेति संबन्धः । इदानीं सिंहावलोकनेन कामादेरनात्मधर्मत्वे श्रुत्युक्ते स्मृतिमाह—इच्छाद्वेषादि चेति ।

" इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् " ॥

इत्यादिस्मृतिभ्यश्च इच्छादि क्षेत्रस्यैव धर्मः, नात्मन इति योजना ।

---

(१) बृ. उ. १. ५. ३.; मै. उ. ६. ३० (२) बृ. उ. ३. ९. २० (३) बृ. उ. ४. ४. ७.; कठ. उ. ६. १४. (४) बृ. उ. ४. ३. २२. (५) बृ. उ. ४. ३. १५. (६) बृ. उ. ४. ३. २१. (७) भ. गी. २. २५. (८) भ. ग. १३. ३१. (९) भ. गी. १३. ६.

इति—स्मृतिभ्यश्च कर्मस्यैवाशुद्धिः, नात्मस्येति ॥ ३६ ॥

अतो रूपादिसंस्काराद्यशुद्धिसंबन्धाभावान्न परस्मादात्मनो विलक्षणस्त्वमिति प्रत्यक्षादिविरोधाभावाद्युक्तं पर एवात्माऽहमिति प्रतिपत्तुम्, "तदात्मानमेवावेत् । अहं ब्रह्मास्मीति[1]", "एकधैवाऽनुद्रष्टव्यम्[2]", "अहमेवाधस्तात्[3]", "आत्मैवाधस्तात्[4]", "सर्वमात्मानं पश्येत्[5]",

क्षेत्रस्यानात्मत्वं द्योतयितुं 'विषयस्य' इति विशेषणम् । श्रुतिस्मृतिसिद्धमर्थमुपसंहरति—कर्मस्यैवाशुद्धिः, नात्मस्थेति । इति सिद्धमिति शेषः॥३६॥

परमप्रकृतमुपसंहरति—अतो रूपादीति ।

रूपादिसंस्काराद्यशुद्धिसंबन्धाभावादेव, प्रत्यक्षादिविरोधाभावात्, न परस्मादात्मनो विलक्षणस्त्वम्—इति हेतोः पर एवात्माहमिति प्रतिपत्तुं युक्तम्, इति योजना । आत्माभेदेनैव ब्रह्म प्रतिपत्तव्यम्—इत्युक्तेऽर्थे श्रुतिवाक्यान्युदाहरति—तदात्मानमेवेत्यादिना । आत्मानं प्रत्यञ्चमेव 'अहं ब्रह्मास्मि' इति अवेत्—अवगतवत्तद्ब्रह्मेत्यर्थः । एकधैव एकत्वरूपेणैव, नतु विषयत्वेन, भेदेन वाऽनुद्रष्टव्यमित्याचार्योपदेशानन्तरं अनुसन्धेयम् "एतदप्रमेयं ध्रुवम्" इति वाक्यशेषः । "स एवाधस्तात्" इत्यादिना भूमानं परमात्मानं सर्वाधिष्ठानमुपक्रम्य तस्य ताटस्थ्यशंकानिवृत्तयेऽहंकारात्मत्वमुपदिश्य पुनरहमुपरागकृतपरिच्छेदादिनिवृत्तये तत्साक्षिप्रत्यगेकरसतां तस्य निर्दिशति छांदोग्यश्रुतिरित्याह—अहमेवाधस्तादिति । शमदमादिसाधनसंपन्नः सन्

(१) बृ. उ. १. ४. १०. (२) तत्रैव ४. ४. २०. (३) छां. उ. ७. २५. १. (४) छां. उ. ७. २५. २. (५) बृ. उ. ४. ४. २३. अत्र "पश्यति" इति काण्वपाठः । "आत्मान पश्येत्सर्वम्" इति माध्यन्दिनपाठः । शत. ब्रा. १४. ६. ३. २८.

"यत्र त्वस्य सर्वमात्मैव[1]", "इदं सर्वं यदयमात्मा[2]", "स एषोऽकलः[3]", "अनन्तरमबाह्यम्[4]", "सबाह्याभ्यन्तरो ह्यजः[5]", "ब्रह्मैवेदम्[6]", "एतया द्वारा प्रापद्यत", "प्रज्ञा-

सर्वमात्मानं पश्येदिति निर्दिष्टेऽर्थे हेतुमिव वचनान्तरमाह—यत्र त्वस्य सर्वमात्मैवेति। "अभूत् तत्केन कं पश्येत्" इत्यादिवाक्यशेषः। इदं सर्वं यद्भोक्तृभोग्यादिलक्षणं विश्वं, तत्सर्वमयमात्मा, नातोऽन्यद्वस्तुतोऽस्तीत्यर्थः। "स एषोऽकलोऽमृतः" इति प्रश्नोपनिषद्गतं वाक्यं पठति—स इति। स एष प्रत्यगात्मा कलाशब्दवाच्यप्राणाद्युपाधिभिर्वियुक्तोऽमृतः—अमृत ब्रह्मैवेति तस्यार्थः। तदेतद्ब्रह्म "अपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म" इति वाक्यं बृहदारण्यकमुदाहरति—अनन्तरमबाह्यमिति। मुण्डकवाक्यं च तत्समानार्थमाह—सबाह्येति। अमूर्तः पुरुष एव सबाह्याभ्यन्तरः सर्वस्य सहबाह्याभ्यन्तररूपेण वर्तते, नान्यः, अजो न जायते इत्यजः—जन्मादिविक्रियारहित इत्यर्थः। "ब्रह्मैवेदममृतं पुरस्तात्" इत्यादि चात्रोदाहर्तव्यमित्याह—ब्रह्मैवेदमिति। इदं सर्वं ब्रह्मैवेत्यर्थः। एवं ब्रह्माद्वयात्मप्रतिपादकानि वाक्यान्युदाहृत्य, ब्रह्मण एव जीवात्मना कार्यप्रवेशनादिवाक्यानि च जीवस्य ब्रह्माभेदप्रतिपत्त्यर्थमुदाहरति—एतया द्वारेत्यादिना। "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इति शिरःकपालयोः सन्धिगतच्छिद्रेण देहे प्रवेशं स्रष्टुरीश्वरस्य दर्शयत्यैतरेयकवाक्यमित्यर्थः। तत्र प्रविष्टस्य स्वरूपनिर्धारणपरं वाक्यं "येन वा पश्यति" इत्यादि "प्रज्ञानस्य नामधेयानि

---

(१) बृ. उ. ४. ५. १५. (२) बृ. उ. २. ४. ६.; ४. ५. ७. (३) प्र. उ. ६. ५. (४) बृ. उ. २. ५. १९; ३. ८. ८. (५) मुं. उ. २. १. २. (६) मुं. उ. २. २. ११. (७) ऐ. उ. ३. १२. (८) बृ. उ. २. ५. १९. (९) 'शादि'—पाठः।

नस्य नामधेयानि[1] ", " सत्यं ज्ञानमनन्तं ब्रह्म[2] ", " तस्माद्वा एतस्मात्[3] ", " तत्सृष्ट्वा । तदेवानुप्राविशत्[4] ", " एको देवः सर्वभूतेषु गूढः सर्वव्यापी[5] ", " अशरीरं शरीरेषु[6] ", " न जायते म्रियते वा विपश्चित्[7] ", " स्वप्नान्तं जागरितान्तम्[8] ", " स म आत्मेति विद्यात्[9] ", " यस्तु सर्वाणि भूतानि[10] ", " तदेजति तन्नैजति[11] ", " वेनस्तत्पश्यन्[12] ", " तदेवाग्निः[13] ", " अहं मनुरभवं सूर्यश्च ", " अन्तः प्रविष्टः

भवन्ति " इत्यन्तं प्रज्ञप्तिमात्रं तत्स्वरूपं, " प्रज्ञानं ब्रह्म " इति तस्य ब्रह्मात्मत्वं च तत्रोक्तमित्यभिप्रेत्याह—प्रज्ञानस्य नामधेयानीति । स्रष्टुरेव सृष्टे कार्ये जीवरूपेण प्रवेश इत्येतदेव तैत्तिरीयकवाक्येन द्रढयति—सत्यं ज्ञानमनन्तमित्यादिना । परमात्मैव सर्वसाक्षी सर्वभूतान्तरात्मेत्यत्र श्वेताश्वतरीयमन्त्रमुदाहरति—एको देव इति । शरीरादिसंसृष्टतया प्रतीयमानस्याप्यात्मनस्तद्धर्मसंसर्गाभावेन ब्रह्मात्मना ज्ञेयत्वे काठकवाक्यद्वयमुदाहरति—अशरीरं शरीरेष्वित्यादि । अवस्थासाक्षिण आत्मनोऽवस्थाधर्मास्पर्शित्वेन ब्रह्मत्वप्रतिपत्तौ काठकवाक्यमाह—स्वप्नान्तं जागरितान्तमिति । नेम्यरनाभिरूपरथचक्रनिदर्शनेन दृश्यदर्शनतत्साधनभूतसर्वजगदाश्रयरूपं प्राणशब्दितं ब्रह्मैव, स मे ममात्मेति प्रवृत्तं कौषीतकेयोपनिषद्वाक्यमुदाहरति—स म आत्मेति विद्यादिति । " यस्तु सर्वाणि भूतान्यात्म-

---

(१) ऐ. उ. ५. २. (२) तै. उ. २. १. (३) तै. उ. २. १. (४) तै. उ. २. ६. (५) श्वे. उ. ६. ११. (६) कठ. उ. २. २२. (७) कठ. उ. २. १८. (८) कठ. उ. ४. ४. (९) कौ. उ. ३. ८. (१०) ई. उ. ५, ६. (११) महाना. उ. २. ३. (१२) महाना. उ. १. ७. (१३) बृ. उ. १. ४. १०. (१४) ब्रह्मतया—पाठः । (१५) ब्रह्मात्मनो—पाठः ।

शास्ता जनानाम्[1] ", " सदेव सोम्य[2] ", " तत्सत्यं, स आत्मा तत्त्वमसि[3] " इत्यादिश्रुतिभ्यः ॥ ३७ ॥

स्मृतिभ्यश्च " पूः प्राणिनः सर्व एव गुहाशयस्य[4] ", " आत्मैव देवताः[5] ", " नवद्वारे पुरे[6] ", "समं सर्वेषु भूतेषु[7] ",

न्येवानुपश्यति ", " तदेजति तन्नैजति " इति च मन्त्रद्वयमीशावास्यगतमुदाहृतं; तत्राद्यो मंत्रः स्पष्टार्थः । द्वितीयः—परोपाधिनिबन्धनं चलनादिप्रतिभानं, स्वतस्तु निर्विकारः शुद्ध एवात्मा—इति दर्शयितुमित्यर्थः । " वेनस्तत्पश्यन् विश्वा भुवनानि विद्वान् यत्र विश्वं भवत्येकनीडम् " इति मन्त्रं तैत्तिरीया आमनन्ति । तस्यार्थः—यत्र यस्मिन्सर्वात्मके पूर्वोपादाने पूर्वोत्तरमन्त्रनिर्दिष्टे वस्तुनि विश्वं समस्तं एकनीडं भवति—एकायनं वर्तते, तदेव विश्वा भुवनानि सर्वाणि भुवनानि न ततः पृथक्किमप्यस्तीति पश्यन् श्रुत्याचार्यप्रसादादनुभवन् विद्वान् ज्ञानी वेनो भवति। विनतेः कान्तिकर्मणः, वनतेर्वा संभजनीयार्थस्य धातोरिदं रूपम् । वेनः कान्तिमान् संभजनीयो वा भवति—ईश्वर एव भवतीति । पुनरपि विदुषः सर्वात्मत्वे मंत्रद्वयं पठति— " तदेवाग्निस्तद्वायुः " इत्यादिरेकः, " अहं मनुरभवं सूर्यश्च " इति वामदेववाक्यरूपोऽपरश्चेति । " अन्तः प्रविष्टः शास्ता जनानाम् । एकः सन् बहुधा विचारः " इति तैत्तिरीयकश्रुतिरेकस्यैवान्तर्यामिणो बहुधा विचरणं संसारव्यवहारं वदन्ती जीवपरयोरभेदं सूचयतीत्यर्थः । तत्रैव सोपक्रमं छान्दोग्यवाक्यं पठति—सदेवेति ॥ ३७ ॥

श्रुत्युक्तेऽर्थे स्मृतीरप्याह—स्मृतिभ्यश्चेति ।

सर्वे प्राणिनो गुहाशयस्यैकस्यैवात्मनः पूः पुराणि शरीराणि, न प्रति-

---

(१) तै. आ. ३. ११. (२) छां. उ. ६. २. १. (३) छां. उ. ६. ८. ७. (४) आपस्तंबीयाध्यात्मपटले ४. (५) मनुस्मृ. १२. ११९. (६) भ. गी. ५. १३. (७) भ. गी. १३. २७.

"विद्याविनयसंपन्ने"[1], "अविभक्तं विभक्तेषु"[2], "वासुदेवः सर्वम्"[3] इत्यादिभ्य एक एवात्मा परं ब्रह्म सर्वसंसारधर्मविनिर्मुक्तस्त्वमिति सिद्धम् ॥ ३८ ॥

स यदि ब्रूयात्—यदि भगवन्, अनन्तरोऽबाह्यः सबाह्याभ्यन्तरो ह्यजः कृत्स्नः प्रज्ञानघन एव सैन्धवघनवदात्मा सर्वमूर्तिभेदवर्जित आकाशवदेकरसः, किमिदं दृश्यते, श्रूयते वा, साध्यं साधनं वा साधकश्चेति श्रुतिस्मृतिलोकप्रसिद्धं वादिशतविप्रतिपत्तिविषयमिति ॥ ३९ ॥

शरीरमात्मभेद इत्यर्थः । उदाहृतश्रुतिस्मृत्यर्थं संकलय्य प्रकरणार्थमुपसंहरति—एक एवेति ॥ ३८ ॥

तदेवं श्रुतिस्मृतिन्यायसिद्धे ब्रह्मात्मैकत्वेऽभिहिते लौकिकवैदिकव्यवहारविरोधं शंकते—स यदीति ।

गृहक्षेत्रदेशकोशादिकं साध्यं ऐहलौकिकं दृश्यते, तत्साधनं च प्रतिग्रहसेवाविजययुद्धादि, तत्साधकश्च तदर्थिवर्गो ब्राह्मणादिर्दृश्यते । तथा यागादि साधनं, स्वर्गादि साध्यं, तत्कामश्च साधक इति पारलौकिकमपि त्रिकं श्रूयते "स्वर्गकामो यजेत्" इत्येवमादीत्यर्थः । कुत्र दृश्यते, श्रूयते वा ? इत्याकांक्षायामाह—श्रुतिस्मृतिलोकप्रसिद्धमिति । लोक इति व्यवहर्तृजन उच्यते । देहात्मप्रसिद्धिवल्लोकप्रसिद्धेरसत्यत्वशंकायामाह—वादिशतेति । वादिशतविप्रतिपत्तीनां विषयो विषयत्वं यस्मिन्नुक्तत्रितये, तत्तथोक्तम् ॥ ३९ ॥

---

(१) भ. गी. ५. १८. (२) भ. गी. १८. २०. (३) भ. गी. ७. १९
(४) °विषय इति—पाठः ।

आचार्यो ब्रूयात्—अविद्याकृतमेतद्यदिदं दृश्यते, श्रूयते वा, साध्यं साधनं साधकश्चेति । परमार्थतस्त्वेक एवात्मा अविद्यादृष्टेरनेकवदवभासते—तिमिरदृष्ट्याऽनेकचन्द्रवत् । "यत्र वा अन्यदिव स्यात्[2]", "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति[3]", "मृत्योः स मृत्युमाप्नोति[4]", "(अथ) यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्....अथ यदल्पं तन्मर्त्यम्[5]" इति, "वाचारम्भणं विकारो नामधेयम्[6]", "अनृतम्[7]", "अन्योऽसावन्योऽहम्[8]" इति भेददर्शननिन्दोपपत्तेरविद्याकृतं द्वैतम्—"एकमेवाद्वितीयम्[9]", "यत्र त्वस्य[10]", "को मोहः कः शोकः[11]" इत्याद्येकत्वविधिश्रुतिभ्यश्चेति ॥ ४० ॥

व्यवहारस्याविद्याविषयत्वान्न तेन पारमार्थिकं ब्रह्मात्मैक्यं विरुध्यत इति समाधत्ते—आचार्यो ब्रूयादित्यादिना ।

स्पष्टोऽस्यार्थः । उक्तेऽर्थे श्रुतीरुदाहरति—यत्र वा इत्यादिना । इवशब्दोऽन्यदर्शनस्याभासत्वं द्योतयति । स्वप्नावस्थादृष्टान्तार्थो वैशब्दः । यत्र यदाऽविद्यावस्थायां द्वैताभावेऽपि द्वैतमिव द्रष्टृदृश्यदर्शनभेदवद्भवति, तत्तदा इतरो द्रष्टा इतरं स्वव्यावृत्तं कर्मभूतं विषयमितरेण—चक्षुषा करणेनेत्यर्थः—पश्यतीत्यर्थः । यच्च भेददर्शनोपलब्धं, तदल्पं, परिच्छिन्नं, यच्च परि-

---

(१) आभासत—पाठ. (२) बृ. उ. ४. ३. ३१. (३) बृ. उ. २. ४. १४, ४. ५ १५. (४) कठ. उ. ४. १०, बृ. उ. ४. ४. १९. (५) छां. उ. ७. २४. १. (६) तत्रैव ६. १. ४. (७) तत्रैव ७. २. १. इत्यादौ (८) बृ. उ. १. ४. १० (९) छां. उ. ६. २. १, २. (१०) बृ. उ. ४. ५. १५. (११) ई. उ. ७. (१२) दृष्टु दृश्यं—पाठ.।

**यद्येवं, भगवन्, किमर्थं श्रुत्या साध्यसाधनादिभेद उच्यते, उत्पत्तिः प्रलयश्चेति ? ॥ ४१ ॥**

**अत्रोच्यते—अविद्यावत उपात्तशरीरादिभेदस्येष्टानिष्टयोगिनमात्मानं मन्यमानस्य साधनैरेवेष्टानिष्टप्राप्तिपरिहारोपा-**

च्छिन्न तन्मर्त्यं, विनाशि, यच्च विनाशि, न तत्सत् "नासतो विद्यते भाव." इति वचनादित्यर्थ.। द्वैतस्याविद्याकृतत्वे श्रुतीरुपन्यस्य ब्रह्मात्माद्वयस्य परमार्थत्वे श्रुतीरुपन्यस्यति—एकमेवेत्यादिना ॥ ४० ॥

ननु साध्यसाधनभेदश्चेदविद्याविषय, तर्हि मिथ्यार्थगोचरत्वात् कर्मकाण्डमप्रमाण स्यादिति शिष्य. शंकते—यद्येवमिति ।

न केवलं कर्मकाण्डाप्रामाण्यापत्तिर्द्वैतमिथ्यात्वे, अपि तु ज्ञानकाण्डेऽपि सृष्टयादिवाक्याना निर्विषयतया प्रामाण्यहानिप्रसङ्ग इत्यभिप्रेत्याह—उत्पत्ति. प्रलयश्चेति । श्रुत्या किमर्थमुच्यत इत्यनुषङ्ग. ॥ ४१ ॥

तत्र वेदान्तवाक्यजनितब्रह्मात्मविज्ञानात्प्राक् कर्मकाडाप्रामाण्यापत्तिः शङ्क्यते ? तदूर्ध्वं वा, इति विकल्प्याद्य प्रत्याह—अत्रोच्यते—अविद्यावत उपात्तेति ।

'अप्राप्ते शास्त्रमर्थवत्'[1] इति न्यायात्, कर्तृसाधनफलभेदस्वरूपस्य शास्त्रज्ञानशून्यानामपि प्रसिद्धे, तत्र वेदस्यातात्पर्यात्, यथाप्रसिद्ध भेदमादाय, पुंस. पुरुषार्थसाधनमविज्ञात बोधयत· शास्त्रस्य नाप्रामाण्यशङ्केत्यभिप्रेत्य संगृहीतमर्थं विवृणोति—शरीरादिभेदस्येत्यादिना । साधनैरेवेष्टप्राप्तिं चानिष्टपरिहारं चेच्छत इष्टानिष्टप्राप्तिपरिहारोपायविवेकमजानत शनैस्तद्विषयमज्ञान निवर्तयितु शास्त्रमित्यन्वय.। साधनैरेवेष्टानिष्टप्राप्तिपरिहारेच्छाया निमित्त विशेषणान्तरेण द्योतयन्नाह—शरीरेति ।

---

(१) भ. गी. २. १६.

यदिवेकमजानत इष्टप्राप्तिं चानिष्टपरिहारं चेच्छतः शनैस्तद्विषयमज्ञानं निवर्तयितुं शास्त्रम्, न साध्यसाधनादिभेदं विधत्ते, अनिष्टरूपः संसारो हि स इति । तद्भेददृष्टिमेवाविद्यां

शरीरादिभेदस्य शरीरेन्द्रियादिसंघातविशेषस्य संबन्धिनी ये इष्टानिष्टे, तद्युक्तमात्मानं मन्यमानस्येति योजना । अयं भावः—अनाद्यविद्यावृतनिजस्वभावस्य, शरीरेन्द्रियमनोबुद्धिप्राणेष्वध्यस्तात्मभावस्य, परिच्छिन्नमात्मानं मन्यमानस्य, स्वातिरिक्तविषयसंबन्धाधीनमेव पुरुषार्थमिच्छतः, तदुपायं पर्येषमाणस्य, साक्षात्पुरुषार्थमात्मतत्त्वं बोद्धुमसमर्थत्वात् प्रथमं तदभिलषितस्वर्गादिसुखादिसाधनं मानान्तरादविज्ञातं बोधयच्छास्त्रं तं विधिनिषेधयोर्व्यवस्थापयति । ततो विहितानुष्ठानान्निषिद्धपरिवर्जनाच्चाहरहरेधमानात्मशुद्धेरनुपचीयमानपाप्मनो निषिद्धफलमिव काम्यफलमप्यनित्याशुचिदुःखरूपं संसार एवेति काम्यकर्मपरित्यागेनावश्यकमेव कर्मेश्वराराधनरूपमनुतिष्ठतोऽतितरां शुद्धान्तःकरणस्य सूक्ष्मवस्तुतत्त्वप्रतिपत्तियोग्योऽयमिदानीं जात इत्यात्मतत्त्वज्ञानमज्ञातं परमपुरुषार्थसाधनमुत्पादयदनया प्रणालिकयाऽज्ञातार्थावबोधनेनाज्ञानं पुंसो निवर्तयितुं शास्त्रं प्रवृत्तमित्येतदभिप्रेत्य शनैरित्युक्तमिति । ननु किमित्येवं तात्पर्यं वर्ण्यते, प्रतीयमानसाध्यसाधनभेदस्वरूपस्यापि शब्दशक्तितात्पर्यगोचरता किं न स्यात् ?—इत्याशंक्योभयपरत्वे वाक्यभेदापत्तेर्मैवमित्याह—न साध्येति । कस्मादन्यतरपरत्वेऽपि वस्तुसत्त्वपरत्वं नेष्यत इत्याशंक्यापुरुषार्थे तात्पर्यायोगादित्यभिप्रेत्याह—अनिष्टरूपः संसारो हि स इति । एवं कर्मकाण्डस्याज्ञातार्थावबोधने तात्पर्यं, न भेदस्य वस्तुत्वबोधने इत्यप्रामाण्यशंकां तस्यापाकृत्य, सृष्ट्यादिवाक्यस्य साक्षादद्वैतवस्तुप्रतिपत्तिपरत्वान्नाप्रामाण्यशंकेत्याह—तद्भेददृष्टिमिति । उत्पत्तिप्रलयादेरित्यादिपदात् स्थितिप्रवेशनियमनानि गृह्यन्ते । उत्पत्तिप्रलयादेरन्योपपत्तिदर्शनेनाद्वैतयुक्तिदर्शनद्वा-

संसारमूलमुन्मूलयति उत्पत्तिप्रलयादि—एकत्वोपपत्ति-प्रदर्शनेन ॥ ४२ ॥

अविद्यायामुन्मूलितायां श्रुतिस्मृतिन्यायेभ्यः अनन्तरोऽबाह्यः सबाह्याभ्यन्तरो ह्यजः सैंधवघनवत्प्रज्ञानघन एवैकरस आत्मा आकाशवत्परिपूर्ण इत्यत्रैवैका प्रज्ञा प्रतिष्ठिता परमार्थदर्शिनो भवति, न साध्यसाधनोत्पत्तिप्रलयादिभेदेनाशुद्धिगन्धोऽप्युपपद्यते ॥ ४३ ॥

तच्चैतत्परमार्थदर्शनं प्रतिपत्तुमिच्छता वर्णाश्रमाद्यभिमानकृ-

रेण संसारमूलमविद्यामेवोन्मूलयति सूक्ष्मादिवाक्यमित्यध्याहारेण योजना। अविद्यायाः संसारमूलत्वं द्योतयितुं तां विशिनष्टि—तद्भेददृष्टिमिति। *तस्य साध्यसाधनसाधकरूपस्य भेदस्य दृष्टिः प्रतिभासो यस्याः सा तथोक्ता,* तामित्यर्थः ॥ ४२ ॥

अविद्योन्मूलने वा किं स्यादित्यत आह—अविद्यायामुन्मूलितायामित्यादिना।

एवं प्रतिष्ठितप्रज्ञस्य परमार्थदर्शिनः—साध्यसाधनविशेषबुद्ध्यजनकत्वात्—तदा कर्मकाण्डस्यैव—स्वरूपतोऽप्रतीतेः—अप्रामाण्यमिष्टमेव, इति विकल्पान्तरपरिहार उक्तो वेदितव्यः ॥ ४३ ॥

एवं सति, यदुक्तं प्राक् 'यद्येवं' 'संसारी च सन्' इत्यादि तदप्यज्ञानविलसितं, मुमुक्षायामुत्पन्नायां कर्मतत्साधनापरित्यागे हेत्वभावादित्यभिप्रेत्याह—तच्चैतदिति।

पांक्तरूपेति पंचप्रकारमित्यर्थः। यजमानपत्नीपुत्रवित्तद्वयसाध्यकर्मफलभूतैतल्लोकपितृलोकदेवलोकैषणाभ्यो व्युत्थानम्—वैपरीत्येनोत्थानम्—तत्र

(१) 'प्रत्ययादेरेक—टीकासमतः पाठः। (२) ४१, ३३. वाक्ययोः

तपाङ्करूपपुत्रवित्तलोकैषणादिभ्यो व्युत्थानं कर्तव्यं, सम्यक्प्रत्ययविरोधात्तदभिमानस्य । भेददर्शनप्रतिषेधार्थोपपत्तिश्चोपपद्यते । न ह्येकस्मिन्नात्मन्यसंसारित्वबुद्धौ शास्त्रन्यायोत्पादितायां तद्विपरीता बुद्धिर्भवति । न ह्यग्नौ शीतत्वबुद्धिः, शरीरे वाऽजरामरमरणबुद्धिः । तस्मादविद्याकार्यत्वात् सर्व-

निःस्पृहतया तत्साधनसर्वकर्मतदुपकरणसंन्यासरूपं पारिव्राज्यम्—कर्तव्यमित्यर्थः । आपाततः परोक्षतो वाधिगतब्रह्मात्मभावस्य तदाऽऽपरोक्ष्योन्मुखस्य—ब्राह्मण्यादिदेहाद्यध्यासनिबन्धनकर्माधिकारित्वाभिमानशैथिल्यात्, तस्योद्देश्यविरोधात्—त्याज्यमेव ससाधनं कर्मेत्युक्तेऽर्थे हेतुमाह—सम्यगिति । अभेददर्शनमत्र सम्यग्ज्ञानं, तन्निष्ठता च तद्विरुद्धाभिमानतदास्पदं सर्वं त्याज्यमित्यत्रैव श्रुतार्थापत्तिमाह—भेददर्शनेति । "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"[1], "उदरमंतरं कुरुते । अथ तस्य भयं भवति"[2] इत्यादिभेददर्शनप्रतिषेधरूपो योऽर्थस्तस्योपपत्तिरुपपादनं सा उपपद्यत इत्यक्षरार्थः । भेदस्य तत्प्रयुक्ताभिमानस्य च प्रामाणिकत्वे श्रुत्या तन्निषेधो न घटते—नहि प्रमाणसिद्धस्य प्रमाणेन प्रतिषेधः संभवति, न च प्रतिषेधश्रुतेर्विषयान्तरमुत्प्रेक्ष्यते, अतः प्रतिषेधकवाक्यानां भेदापवादपरत्वाभावे, तदाम्नानमनर्थकं स्यात्, तच्चानिष्टम्, अध्ययनविधिविरोधात्—इति भावः । ननु सम्यग्ज्ञानस्य कर्मसमुच्चितस्यैव मोक्षसाधनत्वात्, न विहितकर्मत्यागो युक्त इत्यत आह—न हीति । विरोधादेव समुच्चयस्यानुष्ठातुमशक्यत्वात्तद्विधानासंभवात्, कर्मजन्यस्य चानित्यत्वात्, मोक्षत्वानुपपत्तेः, न ज्ञानकर्मसमुच्चयो मोक्षसाधनमिति भावः । यद्वा उक्तमेव विरोधं दृष्टा-

---

(१) बृ. उ. ४. ४ १९. (२) तै. उ. २. ७.

कर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमार्थदर्शननिष्ठेन त्यागः कर्तव्यः ॥ ४४ ॥

इति शिष्यानुशासनंप्रकरणम् ॥ १ ॥

कूटस्थाद्वयात्मबोधप्रकरणम् ।

सुखमासीनं ब्राह्मणं ब्रह्मनिष्ठं कश्चिद्ब्रह्मचारी जन्ममरण-

तोचया द्रढयति—न हीत्यादिना । निरूपितमर्थसारमुपसंहरति—तस्मादिति ॥ ४४ ॥

इति शिष्यप्रतिबोधनविधिर्नाम प्रकरण विवृतम् ॥ १ ॥

कूटस्थाद्वयात्मबोधप्रकरणम् ।

तदेवं शिष्यस्य देहद्वयाभिमानापोहेन ब्रह्मरूपत्वमुपदिश्य, तस्यामवस्थायां कर्मतत्साधनसंन्यासो न्यायत उपपादितः, ब्रह्मस्वभावविपरीतं चाविद्याकृतमित्युपक्षिप्तं, तदिदानीमनब्रह्मस्वरूपत्वस्याविद्यात्मकत्वम्, आत्मनः कूटस्थतया स्वाभाविकं ब्रह्मरूपत्वं च उपपादयितुं प्रकरणान्तरमारभमाणः—कृतसंन्यासस्य मुमुक्षोः कृत्यं श्रवणं विधितः सूचयन्—शिष्यप्रश्नमवतारयति—सुखमिति ।

सुखमासीनमित्यनेनाविक्षिप्तचित्ततया प्रसन्नतोक्ता । व्यावहारिकदृष्ट्या ब्राह्मणमित्युक्त्याऽनापदि ब्राह्मणेतरवर्णान्नोपदेशो ग्राह्य इति सूचयति । परमार्थतो ब्रह्मनिष्ठमित्युक्त्या शिष्यप्रतिबोधनसामर्थ्यं सूच्यते । कश्चिदिति प्रागुक्तगुणगणाढ्यः सुपरीक्षितः शिष्य उक्तः । तस्योपदेशग्रहणकाले एकाकित्वं सूचयितुं कश्चिदित्युक्तम् । तस्य विशेषणानि—

---

( १ ) शिष्यप्रतिबोधनविधिर्नामप्रकरणम्—पाठः ( २ ) 'न्मजराम'—पाठः । ( ३ ) 'विधिविधाननामक प्र'—पाठः । ( ४ ) तुलय—तै. उ. ३३: पृ. टिप्पणी.

लक्षणात् संसारान्निर्विण्णो मुमुक्षुर्विधिवदुपसन्नः प्रपच्छ—भगवन्, कथमहं संसारान्मोक्षिष्ये[1] शरीरेन्द्रियविषयवेदनावान्,—जागरिते दुःखमनुभवामि, तथा स्वप्नेऽनुभवामि, पुनः पुनः सुषुप्तिप्रतिपत्त्या विश्रम्य विश्रम्य जाग्रत्स्वप्नयोर्दुःखमनुभवामि[2]—किमयमेव मम स्वभावः? किंवाऽन्यस्वभावस्य सतो नैमित्तिकः?—इति। यदि[3] अयमेव स्वभावः, न मे मोक्षाशा; स्वभावस्यावर्जनीयत्वात्। अथ नैमित्तिकः, निमित्तपरिहारे स्यान्मोक्षोपपत्तिः॥ ४५॥

ब्रह्मचारीत्यादीनि। ब्रह्मणि प्रत्यक्तत्त्वे चरितुं विचरितुं शीलमस्यास्तीति ब्रह्मचारी—ब्रह्मविचारतत्पर इत्यर्थः। अनेन नित्यानित्यवस्तुविवेको दर्शितः। विशेषणान्तरेण वैराग्यमुक्तम्। विवेकवैराग्ययुक्तस्य शान्त्यादिरर्थप्राप्त इति मत्वा चरमं विशेषणमाह—मुमुक्षुरिति। "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"[5] इत्यादि शास्त्रमनुसरन्नाह—विधिवदुपसन्न इति। प्रश्नप्रकारमेवाह—भगवन्नित्यादिना नैमित्तिक इत्यन्तेन ग्रन्थेन। संसारमोक्षविषय एकः प्रश्नः, दुःखानुभवस्यात्मस्वभावत्वविषयोऽपरः किमयमित्यादिप्रश्न इति विवेकः। प्रथमप्रश्नस्य निमित्तमाह—शरीरेति। शरीरेन्द्रियविषयनिमित्तवेदनानुभवो हि संसारः, तद्वान् सन्नहं कथं संसारान्मोक्षिष्ये इति। जागरित इति द्वितीयप्रश्नस्य बीजमुक्तम्। जाग्रत्स्वप्नयोर्दुःखानुभवात्, सुषुप्तौ चात्मनि तत्तदननुभवात्, संशयोत्थानमित्यर्थः। नैमित्तिक इति च पप्रच्छेत्यन्वयः। उभयत्र फलमाह—यदि स्वभाव इत्यादिना॥ ४५॥

---

(१) मोक्ष्ये—पाठः। (२) मे दुःखमनुभवामीति च पु'—पाठः। (३) 'दि त्व'—पाठः। (४) 'हारास्या'—पाठः। (५) मुं. उ. १.२.१२. (६) 'ते —पाठः।

तं गुरुरुवाच—शृणु वत्स, न तवायं स्वभावः, किंतु नैमित्तिकः ॥ ४६ ॥

इत्युक्तः शिष्य उवाच—किं निमित्तम्? किं वा तस्य निवर्तकम्? को वा मम स्वभावः?—यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावः, रोगनिमित्तनिवृत्ताविव रोगी स्वभावं प्रतिपद्येयेति ॥ ४७ ॥

अन्वभावपक्षमवलम्ब्य गुरुरुत्तरं वदन् न भेतव्यं त्वयेति शिष्यमाश्वासयतीत्याह ग्रन्थकारः—तं गुरुरिति ।

'किंतु' इति मध्येऽध्याहारः कर्तव्यः ॥ ४६ ॥

कृताश्वासः शिष्य उवाच—किं निमित्तमिति ।

निमित्तनिवृत्तिमन्तरेण नैमित्तिकस्यात्यन्तिकनिवृत्त्यनुपपत्तेस्तत्स्वरूपमविदित्वा, तत्परिहारायोगात्तस्य प्रश्नः कृतः । निवर्तकप्रश्नस्तु तत्स्वभावपरिज्ञानेन तदवलम्बनार्थः । सुखदुःखादिमत्त्वस्यास्वभावत्वोक्तौ तर्हि किंस्वभाव आत्मेति निःस्वभावं वस्तु नास्तीति मन्वानः पृच्छति—को वेति । यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावः, तत्किं निमित्तम्? किं वा तस्य निवर्तकमित्यन्वयः । इवशब्दो यथाशब्दार्थः । रोगी रोगनिमित्तनिवृत्तौ यथा स्वभावं प्रतिपद्यते, तथा दुःखनिमित्तनिवृत्तौ यं स्वभावमहं प्रतिपद्येयं, स को वा मम स्वभाव इति योजना । इति शिष्य उवाचेति सम्बन्धः ॥४७॥

---

(१) °व·, नैमित्तिकः—पाठः । (२) °विवारो°—पाठः । (३) प्रतिपद्येयमिति; प्रतिपद्यत इति—पाठौ (४) कार्यः—पाठः । (५) प्रतिपद्येयम्—पाठः । (६) इति गुरुणोक्तः शि°—पाठः ।

गुरुरुवाच—अविद्या निमित्तं, विद्या तस्यै निवर्तिका । अविद्यायां निवृत्तायां तन्निमित्ताभावान्मोक्ष्यसे जन्ममरणलक्षणात्संसारात्, स्वप्नजाग्रद्दुःखं च नानुभविष्यसीति ॥४८॥

शिष्य उवाच—का सौ अविद्या ? किंविषया वा ? विद्या च काऽविद्यानिवर्तिका यया स्वभावं प्रतिपद्येय ? इति ॥४९॥

गुरुरुवाच—त्वं परमात्मानं सन्तमसंसारिणं संसार्यहमस्मीति विपरीतं प्रतिपद्यसे, अकर्तारं सन्तं कर्तेति, अभोक्तारं

पृष्टवस्तुस्वरूपकथनेनोत्तरं गुरुरुवाच—अविद्येत्यादिना ।

सा अविद्या निमित्तं निदानं यस्य स संसारः, तन्निमित्तः, तस्याभावादिति विग्रहः । तदा स्वप्नजागरितदुःखं चात्मधर्मत्वेन नानुभविष्यसीत्यर्थः ॥ ४८ ॥

स्वरूपतोऽवगतपदार्थानां विशेषबुभुत्सया विनेयः पृच्छतीत्याह—शिष्य उवाचेति ।

वाशब्दश्चार्थे । किमाश्रया च सेत्यर्थः । स्वभावं प्रतिपद्येय—जाग्रदादावपि दुःखाद्यनुभवहीनमात्मतत्त्वमुपसंपद्येयेत्यर्थः ॥ ४९ ॥

तत्र स्वरूपावरणविपर्ययाध्यासलक्षणा त्वत्स्वरूपाश्रयविषयाऽविद्या—इति प्रथमप्रश्नयोरुत्तरं गुरुरुवाचेत्याह—गुरुरिति ।

परमात्मानं परिपूर्णस्वरूपं विपरीतं परिच्छिन्नस्वरूपमहमस्मीति त्वं प्रतिपद्यसे इति प्रतिद्वन्द्वं योज्यम् । यन्निमित्तमेवं संसार्याद्यात्मतामेव प्रतिपद्यसे, परिपूर्णत्वाद्यात्मत्वं विद्यमानमपि न प्रतिपद्यसे, सेयमविद्या त्वदा-

---

( १ ) तस्याः-पाठः । ( २ ) कासावविद्या ?—पाठः । (३) तस्मादिति—पाठः । ( ४ ) विद्या च का यया स्वं—पाठः ।

सन्तं भोक्तेति, विद्यमानं चाविद्यमानमिति—इयमविद्या॥५०॥

शिष्य उवाच—यद्यप्यहं विद्यमानः, तथाऽपि न परमात्मा—कर्तृत्वभोक्तृत्वलक्षणः संसारो मम स्वभावः, प्रत्यक्षादिभिः प्रमाणैरनुभूयमानत्वात्—नाविद्यानिमित्तः, अविद्यायाः स्वात्मविषयत्वानुपपत्तेः। अविद्या नामाऽन्यस्मिन्नन्यधर्माध्यारोपणा—यथा प्रसिद्धं रजतं प्रसिद्धायां शुक्तिकायाम्, यथा प्रसिद्धं पुरुषं स्थाणावध्यारोपयति, प्रसिद्धं वा स्थाणुं

-श्रया त्वद्विषया चेति त्वदनुभवसिद्धा। त्व तु चिदानन्दैकरस. कूटस्थ इत्यभिप्राय। विद्यमान चाविद्यमानमिति। नित्य सन्तमनित्यमित्यर्थ ॥५०॥

शिष्यस्त्वात्मनो नित्य त्वमुक्तमगीकृत्याससार्यात्मत्वमुक्तमाक्षिपतीत्याह्—शिष्य उवाचेति।

'प्रत्यक्ष' अह कर्तेत्यादिप्रत्यय.। कर्तृत्वादिः साश्रय, धर्मत्वात्, रूपादिवत्—इति साश्रयत्व सिद्धे नाचेतने सुखदु खम्, पाषाणादौ तददर्शनात्। परिशेषाच्चेतनाश्रयत्वसिद्धिरनुमानम्। "गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता", "य एष सुप्तेषु जागर्ति काम काम पुरुषो निर्मिमाणः" इत्यादिरागमश्चादिशब्दार्थः। विपक्षे बाधिका युक्तिं सगृह्णाति—अविद्यायाः स्वात्मविषयत्वानुपपत्तेरिति। अविद्यास्वरूपोपन्यासपूर्वक सगृहीतमर्थं विवृणोति—अविद्या नामेत्यादिना। मिथ्याज्ञानमेवाविद्येतेति मन्वानस्यायमुपन्यास। शुक्तिकायामध्यारोपयतीति वक्ष्यमाणस्यानुषङ्ग। एवमुत्तरत्राप्यनुषङ्गो द्रष्टव्य.। कस्मिंश्चिद्विषयभूते-

(१) 'याश्रात्म'—पाठ। (२) च त्वं—पाठ। (३) 'द्वेऽचेतने पापा'—
(४) श्वे. उ. ५. ७ (५) कठ उ. ५. ८

पुरुषे, नाप्रसिद्धं प्रसिद्धे, प्रसिद्धं वा अप्रसिद्धे । न चात्मन्यनात्मानमध्यारोपयति, आत्मनोऽप्रसिद्धत्वात्; तथात्मानमनात्मनि, आत्मनोऽप्रसिद्धत्वादेव ॥ ५१ ॥

तं गुरुरुवाच—न, व्यभिचारात् । न हि, वत्स, प्रसिद्धं प्रसिद्ध एवाध्यारोपयतीति नियन्तुं शक्यम्—आत्मन्यध्यारोपणदर्शनात्—गौरोऽहं, कृष्णोऽहमिति देहधर्मस्याहंप्रत्यय-

ऽर्थेऽन्यतः प्रसिद्धस्य विषयान्तरस्याध्यारोपो ह्यविद्येति प्रसिद्धिः । तत्रात्मा यदि प्रसिद्ध एव स्यात्, तदा तस्याध्यासविरोधिप्रकाशात्मकत्वात्, न तस्मिन्नतद्धर्मप्रतिभासः स्यात् । यद्यप्रसिद्धः, तदा विषयास्फुरणात्, कुत्रातद्धर्मप्रतिभासो भवेत् ? तथाच कर्तृत्वादेरात्मन्याविद्यकत्वानुपपत्तिः । अतः स्वाभाविक एवात्मनः कर्तृत्वादिलक्षणो धर्म इत्यभिप्रायः ॥ ५१ ॥

तत्राधिष्ठानाध्यस्यमानयोः पृथक् प्रसिद्धिमन्तरेणाध्यासानुपपत्तिरिति ते मतम्, किंवा प्रसिद्धिमात्रं विना ?—इति विकल्प्य, नान्त्यः, प्रसिद्धिमात्रस्याङ्गीकारात्, इत्यभिप्रेत्याद्यं निराकरोति—गुरुरुवाच—न, व्यभिचारादिति ।

सुषुप्त्यादावात्मन्यवभासमानेऽपि कर्तृत्वाद्याकारस्यानवभासात्, विशिष्टात्मविषयत्वमेव प्रत्यक्षानुमानागमानाम्—इत्यविद्यात्मत्वाबाधकत्वमिति द्रष्टव्यम् । वत्सेति संबोधयन्नत्रापि त्वं बाल एव, न न्यायमार्गे व्युत्पन्न इति दर्शयति । अन्यत्र पृथक् प्रसिद्धमेवान्यत्र प्रसिद्धेऽध्यारोपयतीति नहि नियन्तुं शक्यते, व्यभिचारादित्यन्वयः । कुत्र व्यभिचार इति तत्राह—आत्मनीति । संग्रहं विवृणोति—गौरोऽहमिति । देहातिरिक्तात्मवादिभिः—कृशोऽहमित्यादिदेहधर्मावभास आत्मन्यहंप्रत्ययविषये, तस्य

(१) प्रसिद्धेः—पाठः (२) 'पत्तेरि'—पाठः ।

विषये आत्मनि, अहंप्रत्ययविषयत्वं च आत्मनः देहेऽयमहमस्मीति ॥ ५२ ॥

शिष्य आह—प्रसिद्ध एव तर्ह्यात्माहंप्रत्ययविषयतया, देहश्चायमिति। तत्रैवं सति, प्रसिद्धयोरेवदेहात्मनोरितरेतराध्यारोपणा स्थाणुपुरुषयोः शुक्तिकारजतयोरिव। तत्र कं विशेषमाश्रित्य भगवतोक्तं प्रसिद्धयोरितरेतराध्यारोपणेति नियन्तुं न शक्यत इति? ॥ ५३ ॥

गुरुराह—शृणु, सत्यं प्रसिद्धौ देहात्मानौ। न तु स्थाणुपुरुषाविव विविक्तप्रत्ययविषयतया सर्वलोकप्रसिद्धौ। कथं तर्हि? नित्यमेव निरन्तराविविक्तप्रत्ययविषयतया प्रसिद्धौ।

च देहे मनुष्योऽहं जानामीत्यवभासोऽपि—अध्यासोऽङ्गीक्रियते। न हि देहात्मनोः पृथक्प्रसिद्धिरस्ति, अतस्तत्रोक्तनियमभङ्ग इत्यर्थः ॥ ५२ ॥

यथा स्थाणुपुरुषयोः प्रसिद्धयोरन्योन्यस्मिन्नध्यासः, तथा देहात्मनोरपीन्द्रियविषयत्वनाहंप्रत्ययविषयत्वेन च प्रसिद्धयोरेवतरस्मिन्नितराध्यास विशेषाभावात्, न व्यभिचार इति शङ्कते—शिष्य आहेति।

तथा चाहंकर्तृचिदात्मनोः पृथगवभासाभावान्नेतरेतराध्यास इति दार्ष्टान्तिकाऽसिद्धिरिति भावः ॥ ५३ ॥

आचार्यस्तु देहात्मनोः प्रसिद्धत्वेऽपि, त्वदभिमतनियमस्तत्र नास्तीत्यभिप्रेत्य, व्यभिचारं दूषयतीत्याह—गुरुरिति।

सत्यं, प्रसिद्धौ देहात्मानौ, तत्र शृणु विशेषमिति योजना। विशेषमेवाह—

(१) 'स्य दे'—पाठ। (२) 'ध्य उवाचे'—पाठ। (३) 'णात् स्था'—पाठ। (४) 'योरिव' 'रिव च—पाठ.। (५) 'तया। (६) ॥—पाठ। (७) 'त नि'—

न हि—अयं देहः, अयमात्मा—इति विविक्ताभ्यां प्रत्ययाभ्यां देहात्मानौ गृह्णाति यतः कश्चित्। अत एव हि मोमुह्यते लोक आत्मानात्मविषये—एवमात्मा, नैवमात्मेति। इमं विशेषमाश्रित्य अवोचं नैवं नियन्तुं शक्यमिति ॥ ५४ ॥

नन्वविद्याध्यारोपितं यत्र यत्, तदसत् तत्र दृष्टम्—यथा रजतं शुक्तिकायाम्, स्थाणौ पुरुषः, रज्ज्वां सर्पः, आकाशे तलमलिनत्वमित्यादि, तथा देहात्मनोरपि नित्यमेव निरन्तरा-

न रिषति। अविविक्तप्रत्ययविषयतया प्रसिद्धमेवाभिनयति—नह्ययमित्यादिना। तत्र लिङ्गमाह—अत एव हि मोमुह्यते लोक इति। मोहातिशयमेवाभिनयति—एवमात्मेति। देह आत्मा, इन्द्रियाण्यात्मा, कर्तात्मा, अकर्तात्मा, व्यापकः, परिच्छिन्नः, सगुणः, निर्गुण इति लोकवादिविप्रतिपत्तेः सर्वो लोको मोमुह्यमानो दृश्यते। विविक्तप्रत्ययतयोपलम्भे त्विदं न स्यादिति अस्ति विशेष इत्युपसंहरति—इमं विशेषमिति। तस्मादेकज्ञानोपरक्ततयोपलम्भ एवाध्यस्यमानाधिष्ठानयोः सिद्धिरध्यासेऽपेक्ष्यते, न पृथक्सिद्धिः, इत्यतोऽहं कर्ता भोक्तेत्यस्याप्यहं मनुष्य इतिवत् द्व्याकारप्रतिभासादध्यारोपत्वसिद्धिरिति भावः ॥ ५४ ॥

नन्वात्मानात्मनोरुभयोरपि यद्यध्यासगोचरता, तदाध्यस्तस्य मिथ्यात्वात्, आत्मनः सत्त्वानुपपत्तिप्रसङ्गः—इति शिष्यः शंकते—नन्विति।

यद्यदविद्याध्यारोपितं, तत्तदसद्दृष्टं, यथा शुक्तिकादौ रजतादीति व्याप्तिमुक्त्वा पक्षधर्मतामाह—तथा देहात्मनोरपीति। अनुमानं प्रयुङ्क्ते—

---

(१) 'क्तयो'—पाठः। (२) सत्यत्वा'—पाठः।

विविक्तप्रत्ययेनेतरेतराध्यारोपणा कृता स्यात्—तदितरेतरयो-र्नित्यमेवाऽसत्त्वं स्यात्—यथा शुक्तिकादिष्वविद्याध्यारोपितानां रजतादीनां नित्यमेवात्यन्तासत्त्वम्, तद्विपरीतानां च विपरीतेषु, तद्वद्देहात्मनोरविद्ययैवेतरेतराध्यारोपणा कृता स्यात्; तत्रैवं सति देहात्मनोरसत्त्वं प्रसज्येत—तच्चानिष्टम्, वैनाशिकपक्षत्वात्। अथ तद्विपर्ययेण देह आत्मन्यविद्ययाध्यारोपितः, देहस्यात्मनि सति असत्त्वं प्रसज्येत, तच्चानिष्टम्, प्रत्यक्षादिविरोधात्। तस्माद्देहात्मानौ नाविद्ययेतरेतरस्मिन्न-

तदितरेतरयोरित्यादिना। तत्—तत्र व्याप्तिपक्षधर्मत्वसिद्धौ सत्यामिति यावत्। आत्मन्यनात्मा, अनात्मनि चात्मा नित्यमेवासन् भवितुमर्हति, नित्यमेवेतरेतरत्राध्यस्तत्वात्, शुक्तिकादौ रजतादिवत्, रजतादौ शुक्त्यादिवदित्यवयवत्रयमभिधायोपनयनिगमने निर्दिशति—तद्वद्देहात्मनोरिति। सिद्धसाध्यत्वाशंका निराकरोति—तच्चानिष्टमिति। ननु नेतरेतराध्यासोऽङ्गीक्रियते, येनात्मनोऽप्यसत्त्वप्रसङ्गः स्यात्। किंत्वन्यतराध्यास एवान्यत्राङ्गीक्रियत इत्याशंकते गुरुः—अथेति। तद्विपर्ययेणानात्माधिष्ठानविपर्ययेणेत्यर्थः। तदेव स्पष्टयति—देह इति। शिष्यो निराकरोति—देहस्यात्मनि सतीति। यथा शुक्तिकादौ सत्येव, नेदं रजतमित्यादिना तदसत्त्वं प्रतीयते, तथात्मन्यहमवभासे सत्येव, देहस्यासत्त्वमनुभूयेत, न ह्यनुभूयते। अनुभूयत एवेत्यभ्युपगम. प्रमाणविरोधादयुक्त इत्यर्थः। यस्मादेवं युक्तिं न सहते, तस्मान्नाध्यास इत्युपसहरति—तस्मादिति। कथ

---

(१) 'त्ययतया ने'—पाठः। (२) 'ना शुक्तिकादिषु नि'—पाठः।

ध्यारोपितौ । कथं तर्हि ? वंशस्तंभवन्नित्यसंयुक्तौ ॥ ५५ ॥

न, अनित्यत्वपरार्थत्वप्रसंगात् । संहतत्वात्परार्थत्वमनित्यत्वं च वंशस्तंभादिवदेव । किंच—यस्तु परैर्देहेन संहतः कल्पित आत्मा, स संहतत्वात्परार्थः । तेनाऽसंहतः परोऽन्यो नित्यः सिद्धस्तावत् ॥ ५६ ॥

तस्यासंहतस्य देहे देहमात्रतयाध्यारोपितत्वेनासत्त्वानित्य-

तर्ह्यहं मनुष्य इत्यादिव्यवहारो लोकस्येति गुरुः शङ्कते—कथं तर्हीति । शिष्यो मीमांसकादिमतमाश्रित्य, संयोगसंबन्धादिति सदृष्टान्तमाह—वंशस्तंभवदिति । यथा वंशानां स्तंभानामाधाराधेयभावेन परस्परं संयोगविशेषे सति, गृहमित्येकशब्दप्रत्ययगोचरत्वम्, एवं देहात्मनोरपि संयोगविशेषात्, अहं मनुष्य इत्यादिसामानाधिकरण्यव्यवहारगोचरत्वमित्यर्थः ॥ ५५ ॥

सिद्धान्ती परिशेषेणेतरेतराध्यासं साधयितुमुक्तसंबन्धं तावत्प्रत्याचष्टे—न, अनित्यत्वेति ।

यत्संहतं तदनित्यं परार्थं च दृष्टं, यथा वंशस्तंभादि । तथा यद्यात्मापि देहादिभिः संहत एव स्यात्, तदा सोऽप्यनित्यः परार्थश्च स्यात्, तथानिष्टम्—अनित्यत्वे संघातात्मवादापत्तेः, परार्थत्वे चाचेतनत्वापत्तेरित्यर्थः । एवं परपक्षनिराकरणेनार्थान्नित्यः स्वार्थश्चात्माभ्युपेय इत्युक्तम्, तदेवानूद्य, आस्तिकैः सुदूरमपि गत्वा सोऽभ्युपगन्तव्य इत्यभिप्रेत्य स्वपक्षं साधयति—किंचेति । तेन परार्थेनानित्येन संघातेन लिङ्गेन परः संघातादन्यो विलक्षणस्तावदात्मा नित्यः सिद्ध इति योजना । विमतो देहः स्वविलक्षणशेषः, संहतत्वात्, गृहवदित्यर्थः ॥ ५६ ॥

ननु सत्यं संघातादचेतनादन्य आत्मा, तस्य च संघातासंबन्धेऽहं मनुष्य

(१) °स्य स—पाठः ।

**त्वादिदोषप्रसङ्गो भवति। तत्र निरात्मको देह इति वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥ ५७ ॥**

**न। स्वत एवात्मन आकाशस्येवासंहतत्वाभ्युपगमात्। सर्वेणासंहतः स चात्मेति न निरात्मको देहादिः सर्वः स्यात्।**

इति व्यवहारानुपपत्तेस्तत्सम्बन्धो वाच्य । तत्र सयोगविशेषस्यानङ्गीकार तादात्म्याध्यास सम्बन्ध इत्यायातम्। तथा च निरात्मवादापत्तिरिति प्रागुक्त शिष्य स्मारयति—तस्यासहतस्येति।

तस्यासहतस्य सघातसाक्षिणो देहे स्वस्मिन्नध्यस्ते इति योज्यम्। देहस्य स्वातन्त्र्येण सिद्ध्यनङ्गीकारादित्यर्थ । तथा च तादृशे देहेऽध्यारोपितत्वेन हेतुनात्मनो देहमात्रतयाऽसत्त्वानित्यत्वादिदोषप्रसङ्गो भवति । तत्र एव परस्पराध्यासाभ्युपगमे सतीति यावत् । अध्यस्तस्य मिथ्यात्वनियमात्, निरात्मको देहो निर्देहश्चात्मेति शून्यवादप्रसङ्ग इत्यर्थ ॥ ५७ ॥

किं शून्यवादप्रसङ्गात्तादात्म्यावभासस्याध्यासनिबन्धनत्व नेष्यत भवता? किंवा आधाराधेयभावादिसम्बन्धस्य प्रामाणिकस्य तद्धेतो सत्त्वात्? इति विकल्प्याद्य निराकरोति गुरु—न। स्वत एवेति।

अयमर्थ—देहादिर्हि—रूपादिमत्त्वात्, सावयवत्वाद्वा, घटादिवज्जडोऽपि सन्—तद्विलक्षणचेतनात्मतयोपलभ्यते, ततश्च तप्तायःपिंडवत्तस्य चेतनसश्लेषो वक्तव्य । तथात्मन सघातसाक्षिणश्चैतन्यमात्रस्वभावस्य निरवयवस्याकाशवत् स्वत परिच्छेदाशुद्ध्यादिधर्मयोगासभवात्, देहसश्लेषकृतस्तस्मिंस्तत्प्रतिभास इति वक्तव्यम्। तथा चेतरेतरधर्मससर्गितयोभयोरितरेतराध्यासेऽनुभवानुसारेणैव सिद्धे, निरधिष्ठानस्यारोपस्यादृष्टचरत्वात्, आरोपज्ञाने स्फुरतोर्मध्ये यदन्योपरागमन्तरेण कदाऽपि स्वातन्त्र्येण न

(१) 'णध्ये'—पाठ।

यथा चाकाशं सर्वेणासंहतमिति सर्वं न निराकाशं भवति, एवम् । तस्मान्न वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥ ५८ ॥

यत्पुनरुक्तम्—देहस्यात्मन्यसत्त्वे प्रत्यक्षादिविरोधः स्यादिति, तन्न, प्रत्यक्षादिभिरात्मनि देहस्य सत्त्वानुपलब्धेः । न ह्यात्म-

स्फुरति, तत्स्वरूपेणैवारोपितं भवति, यथा गगनोपरक्ततया स्फुरन्मालिन्यादिः यत्तु तद्विपरीतं, तदितरस्मिन्न स्वरूपेणारोपितं भवति, किंतु संसृष्टरूपेणैव, यथा शुक्तीदमंशादि रूप्यादौ । तत्रात्मनो देहाद्युपरागं विनाऽपि सुषुप्त्यादौ स्वतः स्फुरणात्, तस्य संघाते स्वरूपेण नाध्यासः, किंतु संसृष्टत्वेनैव; देहादेस्तद्विपरीतत्वात्, स्वरूपेणैव; इति नानित्यत्वादिदोषप्रसङ्गश्चिदात्मनः, नापि देहादेर्निरात्मकत्वप्रसङ्गः, इति न शून्यवादशंकावकाशः । देहस्य तु चैतन्याभासव्याप्ततया चिद्धर्माध्यारोपाधिष्ठानत्वमुपचर्यते, इति न परस्पराध्यासपक्षे कश्चिद्दोष इति । स्वतोऽसंहतस्यात्मनः सर्वत्र सर्वदा विद्यमानत्वात्, संघातो निरात्मकः स्यात्, नाप्यात्माऽनित्यत्वादिदोषवान् स्यादित्यर्थः। आकाशस्येवेत्युक्तं दृष्टान्तं विवृणोति—यथा चाकाशमिति । स्वपक्षदूषणोद्धारमुपसंहरति—तस्मादिति ॥ ५८ ॥

तदेवं दूषणोद्धारेणेतरेतराध्यासं तादात्म्यव्यवहारहेतुं ग्राहयित्वा, आद्यं विकल्पं निराकार्षीत् । इदानीं परमते दूषणमापादयितुं द्वितीयमुत्थापयति—यत्पुनरुक्तमिति ।

निराकरोति—तन्नेति । आत्मनि देहोऽस्तीत्येवं प्रत्यक्षं तावन्न संभवति, चक्षुःस्पर्शनाभ्यां देहस्य गृहीतत्वेऽपि, आत्मनस्ताभ्यामगृहीतत्वात्, तद्ग्रहणाभावे च तत्रेदमिति ग्रहणानुपपत्तेः । " पराञ्चि खानि " इति श्रुतेश्च नात्मा इन्द्रियविषयः, अतो न तस्मिन् देहसंबन्धः प्रत्यक्षः । अत

(१) ५५ श्लोके (२) चैतन्याध्यास—पाठः । (३) कठ. उ. ४. १.

नि—कुण्डे बदरम्, क्षीरे सर्पिः, तिले तैलम्, भित्तौ चित्रमिव च—प्रत्यक्षादिभिर्देह उपलभ्यते। तस्मान्न प्रत्यक्षादिविरोधः ॥ ५९ ॥

कथं तर्हि प्रत्यक्षाद्यप्रसिद्धात्मनि देहाध्यारोपणा, देहे चात्मारोपणा? ॥ ६० ॥

नायं दोषः, स्वभावप्रसिद्धत्वादात्मनः। नहि, कादाचि-

एव नानुमानादिगोचरत्वमपीत्यभिप्रेत्य, अनुपलब्धि व्यतिरेकदृष्टान्तैर्विवृणोति—नहीत्यादिना। आद्यः प्रत्यक्षस्य, द्वितीयोऽनुमानस्य, तृतीयोऽर्थापत्तेः। न हि कुण्डे बदरवदेहात्मानावेकदेशसंलग्नावुपलभ्येते, इत्युक्ते, भित्तिचित्रयोर्भेदेनानुपलम्भेऽपि, यथा आधाराधेयभावः, तथाऽत्रापीत्याशंक्याह—भित्तौ चित्रमिवेति। चित्रांकितायां भित्तेरुपलम्भवद्देहाकारांकित आत्मा नोपलभ्यते, तथा सति मयि मनुष्यो देहोऽयमस्तीति व्यवहारः स्यात्, न तु मनुष्योऽहं स्थूलोऽहमित्यादिरिति समुदायार्थः ॥ ५९ ॥

ननु सामान्यतो गृहीते, विशेषतश्चागृहीते विषये विषयान्तराध्यासो दृष्टः, तदिहात्मनः प्रत्यक्षाद्यविषयत्वे, कथं तत्रानात्माध्यारोपः, अनात्मनि वा कथमात्माध्यारोपः—तस्यात्यन्तासत्त्वे—इत्यभिप्रेत्य, शिष्यः शंकते—कथं तर्हीति ॥ ६० ॥

किमात्मनः स्फुरणाभावात्तत्राध्यासो न संभवतीत्युच्यते? किंवा, विषयत्वेन स्फुरणाभावात्? गृहीतसामान्यांशागृह्यमाणविशेषांशाभावाद्वा? तत्र नाद्य इत्याह—नायं दोषः, स्वभावप्रसिद्धत्वादात्मन इति ॥

स्वप्रकाशस्यात्मनः स्वमहिम्नैव स्फुरणादित्यर्थः। न द्वितीय इत्याह—

(१) 'प्र...माध्यारोपणम्—पाठः।

त्कसिद्धावेवाध्यारोपणा, न नित्यासिद्धौ—इति नियन्तुं शक्यम्, आकाशे तलमलाद्यध्यारोपणदर्शनात् ॥ ६१ ॥

किं भगवन्, देहात्मनोरितरेतराध्यारोपणा देहादिसंघातकृता, अथवात्मकृतेति ? ॥ ६२ ॥

गुरुरुवाच—यदि देहादिसंघातकृता, यदि चात्मकृता, किं तत्र स्यात् ? ॥ ६३ ॥

नहीति । आकाशे अप्रत्यक्षेऽपीति शेषः । अनैन्द्रियकेऽप्याकाशे ऐन्द्रियकभ्रमदर्शनात्, अविषयेऽपि स्वतः स्फुरत्यात्मनि विषयाध्यासो नासम्भावित इत्यर्थः । न चरमः—बहिरर्थेषु विद्यमानयोरपि सामान्यविशेषांशयोरग्निपैङ्गल्यादिवद्भूमादावध्यासं प्रत्यतन्त्रत्वात्, स्वरूपमात्रेण स्फुरणमध्यासविरोध्याकारेणास्फुरणं चाधिष्ठानस्याध्यासेऽपेक्ष्यते, तदिहात्मनः स्वरूपतः स्फुरणेऽपि, अनृतजडदुःखान्तवत्त्वानात्मव्यावृत्ताकारेण—वेदान्तजनितज्ञानेऽसति—अध्यासविरोधिस्फुरणाभावादध्यासोपपत्तेः, न कश्चिद्दोष इति द्रष्टव्यम् ॥ ६१ ॥

नन्वध्यासज्ञानाकारपरिणामः किमात्मनः ? उतानात्मनः ? किंवोभयोः? नाद्यः, तस्य विकारित्वापत्तेरनित्यत्वादिदोषप्रसङ्गात् । न द्वितीयः, अचेतनस्य तदनुपपत्तेः । अत एव न तृतीय इत्यभिप्रेत्य, शिष्यः पृच्छति—किं भगवन्निति ॥ ६२ ॥

शिष्याभिप्रायं श्रोतुकामो गुरुः कस्मिन्सति किं स्यादिति पृच्छति—यदीति । किं तत्र स्यात्त्वेति शेषः ॥ ६३ ॥

---

( १ ) °र्थः किंतु सम्भावितः । —पाठः । ( २ ) अध्यासविरोधिनि, असति विरोधिनि—पाठौ.

इत्युक्तः शिष्य आह—यद्यहं देहादिसंघातमात्रः, ततो ममाचेतनत्वात्परार्थत्वमिति न मत्कृता देहात्मनोरितरेतराध्यारोपणा । अथाहमात्मा परोऽन्यः संघातात्, चितिमत्त्वात्स्वार्थ इति मयैव चितिमतात्मन्यध्यारोपणा क्रियते सर्वानर्थबीजभूता ॥ ६४ ॥

इत्युक्तो गुरुरुवाच—अनर्थबीजभूतां चेन्मिथ्याध्यारोपणां जानीषे, मा कार्षीस्तर्हि ॥ ६५ ॥

स्वाभिप्रायं शिष्यः प्रकटयतीत्याह—इत्युक्त इति ।

अनात्मनः स्वरूपेणाध्यस्तत्वात्, निःस्वभावस्य तस्याध्यासकर्तृत्वानुपपत्तेः, आत्मैव तत्कर्तेति स्वयमूहमानः—अहमवभासस्यात्मप्रत्ययत्वात्, संघाते च तद्दर्शनात्, स वाहम्, अन्यो वाध्यासकर्ता—इत्युभयत्र दोषमुपन्यस्यति शिष्य इत्याह—यद्यहमित्यादिना । आद्ये पक्षेऽध्यासकर्तुरभावात् संसारदर्शनं न स्यादिति भावः । द्वितीये स्वयमेव स्वानर्थार्थं प्रवृत्तत्वादनिर्मोक्षापत्तिरिति भावः ॥ ६४ ॥

चिन्मात्राश्रयविषयानाद्यनिर्वचनीयाऽविद्यावेशवशात्, चिदात्मैवाविद्यापरिकल्पिताहंकारादिस्थूलशरीरान्तमात्मत्वेनाभिमन्यमानः, मिथ्यैवाध्यासकर्तेति प्रसिद्धिमुपगतः । परमार्थतस्तु कूटस्थ एवात्मा । अविद्यानिवृत्त्या च संसारनिवृत्तिर्निद्रानिवृत्त्येव स्वप्ननिवृत्तिरिति नानुपपन्नं किंचिदित्यभिप्रेत्य, शनैःशनैरुक्तार्थं शिष्यबुद्धिमारोहयति गुरुरित्याह—इत्युक्तो गुरुरित्यादिना ।

देहाद्यात्मभावनामनर्थार्थां चेदवगच्छसि, किमिति तर्हि तां न मुञ्चसि, स्वतन्त्रत्वात्तव ?—इति तावत्संघातविलक्षणतां तस्य सूचयति—अनर्थबीजभूतामिति ॥ ६५ ॥

---

(१) मन्यसे—पाठः ।

नैव, भगवन्, शक्नोमि न कर्तुम् । अन्येन केनचित्प्रयुक्तोऽहं, न स्वतन्त्र इति ॥ ६६ ॥

न तर्हि अचितिमत्त्वात्स्वार्थस्त्वम् । येन प्रयुक्तोऽस्वतन्त्रः प्रवर्तसे, स चितिमान् स्वार्थः । संघात एव त्वम् ॥ ६७ ॥

यद्यचेतनोऽहम्, कथं सुखदुःखवेदनां भवदुक्तं च जानामि ? ॥ ६८ ॥

गुरुरुवाच—किं सुखदुःखवेदनाया मदुक्ताच्चान्यस्त्वम्, किंवानन्य एव ? इति ॥ ६९ ॥

साक्षिणः कूटस्थत्वान्नानर्थसंबन्धः परमार्थतः, इत्युक्ताभिप्रायमनवबुध्यमानः शिष्यः प्राह—नैव, भगवन्निति ।

हे भगवन्, न कर्तुं नैव शक्नोमीत्यन्वयः । अनिच्छतोऽपि मे निवृत्त्यभावान्नाहं स्वतन्त्रः, अन्येन केनचिद्धेर्यप्राण इवेति मन्ये इत्यर्थः ॥ ६६ ॥

यद्येवं मन्यसे, तदा 'चितिमत्त्वात्स्वार्थ इति मयैवे' इत्यादिनोक्तं मृषा, इति गुरुः स्वाभिप्रायं प्रकटयति—न तर्हि अचितिमत्त्वादिति ॥ ६७ ॥

ननु कथमहं संघातः, ज्ञातृत्वादिति शिष्य आह—यद्यचेतन इति । भवदुक्तमिति । 'संघात एव त्वम्' इत्यादीत्यर्थः ॥ ६८ ॥

मिथ्याध्यासप्रयुक्तकर्तृत्वाद्यवभासस्य देहेन्द्रियान्तःकरणगतचिदाभासाविविक्ततया तद्विशिष्टात्मविषयत्वात्तस्य चाविवेकविवेकाभ्यामात्मनः परतन्त्रत्वस्वतंत्रत्वप्रतिभासगोचरत्वादविवेकनिराकरणेनास्य स्वरूपप्रतिष्ठा बुद्धिः संपाद्येत्यभिप्रेत्याचार्यः पृच्छतीत्याह—गुरुरुवाच—किमित्यादिना ॥ ६९ ॥

---

(१) ६४ वाक्ये.

शिष्य उवाच—नाहं तावदनन्यः । कस्मात्? यस्मात्तदुभयं कर्मभूतं घटादिकमिव जानामि । यद्यनन्योऽहम्, तेन तदुभयं न जानीयाम्, किंतु जानामि, तस्मादन्यः । सुखदुःखवेदनाविक्रिया च स्वार्थैव प्राप्नोति, त्वदुक्तं च स्यात्, अनन्यत्वे । नच तयोः स्वार्थता युक्ता । नहि चन्दनकण्टककृते सुखदुःखे चन्दनकण्टकार्थे, घटोपयोगो वा घटार्थः । तस्मात्तद्विज्ञातुर्मम चन्दनादिकृतोऽर्थः । अहं हि ततोऽन्यः समस्तमर्थं जानामि बुध्यारूढम् ॥ ७० ॥

शिष्य पुन स्वानुभवमनुसरन्नुत्तरमाहेति दर्शयति—शिष्य इति ।

नाहं संघातानन्य, तद्द्रष्टृत्वात् । यो यद्द्रष्टा, न स तदनन्य, यथा घटद्रष्टेत्यर्थ । हेतोरप्रयोजकताशङ्कामनवकाशयति—यदीति । तेनेति अनन्यत्वेन हेतुनेत्यर्थ । नहि स्वयं स्ववेद्य किमपि भवति, स्वात्मनि वृत्तिविरोधात्, जडस्य च स्वप्रकाशतानुपपत्ते । स्वान्यद्रष्टृविषयत्वाभावे तदसिद्धिप्रसङ्गात्, तद्व्यवहारलोप प्रसज्येतेति भाव । उपनयनिगमने दर्शयति—किंतु जानामि तस्मादन्य इति । अनन्यत्वे विषयत्वानुपपत्तिरूपं बाधकमभिधाय, शेष्यन्तराभावात्संघातस्य स्वशेषत्वापत्तिं बाधकान्तरमाह—सुखदु खेति । विक्रिया कर्तृत्वादिलक्षणेत्यर्थ । त्वदुक्तं चेति । असत्त्वानित्यत्वादिपूर्वोक्तदोषश्च प्राप्नोतीत्यर्थ । भवतु स्वार्थतेत्याशङ्क्य विषयस्य स्वार्थत्वाभाव दृष्टान्तेनोपपादयति—न च तयोरिति । सुखदु खवेदनाविक्रिययोरित्यर्थ । द्रष्टुरात्मनो दृश्यादन्यत्वं, शेषित्वं चोपपादितमुपसंहरति—तस्मादिति । ज्ञातृज्ञेयसंबन्धमाह—बुद्ध्यारूढमिति ॥ ७० ॥

तं गुरुरुवाच—एवं तर्हि स्वार्थस्त्वं चितिमत्त्वात्, न परेण प्रयुज्यसे। नहि चितिमान् परतन्त्रः परेण प्रयुज्यते, चितिमतश्चितिमदर्थत्वानुपपत्तेः, समत्वात्, प्रदीपप्रकाशयोरिव। नाप्यचितिमदर्थत्वं चितिमतो भवति, अचितिमतोऽचितिमत्त्वादेव स्वार्थसंबंधानुपपत्तेः। नाप्यचितिमतोरन्योन्यार्थत्वं दृष्टम्। नहि काष्ठकुड्ये अन्योन्यार्थं कुर्वाते ॥ ७१ ॥

ननु चितिमत्त्वे समेऽपि भृत्यस्वामिनोरन्योन्यार्थत्वं दृष्टम् ॥ ७२ ॥

यद्येवं प्रतिबुद्धोऽसि, वत्स, न तर्हि परप्रयुक्तता तवेति तत्त्वमवबोधयत्याचार्य इत्याह—तं गुरुरिति।

ननु चितिमतोऽपि परार्थत्वं किं न स्यादिति चेत्, तत्र वक्तव्यं—किं चितिमाश्चितिमदर्थः? किंवाऽचितिमदर्थः? इति। आद्येऽपि स्वयमेव स्वार्थः? चितिमदन्तरार्थो वा? नाद्य.—एकस्मिन्नुपकार्योपकारकभावलक्षणस्यार्थार्थित्वस्यायोगादित्यभिप्रेत्य, द्वितीयं प्रत्याह—चितिमत इति। समत्वादन्योन्यस्मिन्नन्योन्यकृतातिशयाभावादित्यर्थः। द्वितीयं दूषयति—नापीति। अचितिमदर्थत्वं चितिमत इति पूर्वेणानुषंगः। अचितिमतो जडस्य जडत्वादेव शेषित्वानुपपत्तेरिति हेत्वर्थः। मा भूत्तर्ह्यचेतनानामपि चितिमच्छेषत्व, तेषामन्योन्यार्थता किमिति न भवेत्?—अतः किमिति चेत-नोऽप्यस्य. स्वार्थः कल्प्यते,—इत्याशंक्य दृष्टविरोधान्नैवमित्याह—नाप्यचितिमतोरिति ॥ ७१ ॥

यदुक्तं 'चितिमतश्चितिमदर्थत्व नोपपद्यते, समत्वात्' इति तत्र व्यभिचार शकते—नन्विति ॥ ७२ ॥

नैवम्, अग्न्युष्णप्रकाशवत्तव चितिमत्त्वस्य विवक्षितत्वात्। प्रदर्शितश्च दृष्टान्तः प्रदीपप्रकाशयोरि[१]वेति। तत्रैवं सति, स्वबुद्ध्यारूढमेव सर्वमुपलभसे अग्न्युष्णप्रकाशतुल्येन कूटस्थनित्यचैतन्यस्वरूपेण। यदि चैवमात्मनः सर्वदा निर्विशेषत्वमुपगच्छसि, किमित्यूचिवान् 'सुषुप्ते विश्रम्य विश्रम्य जाग्रत्स्वप्नयोर्दुःखमनुभवामि, किमयमेव मम स्वभावः, किंवा नैमित्तिकः' इति च। किमसौ व्यामोहोऽपगतः, किंवा ने[२]? ॥ ७२ ॥

स्वामिचैतन्यस्य भृत्यदेह एवाचेतनभाग उपकरोति, न तन्निरपेक्ष चिन्मात्र, तथा भृत्यचैतन्यस्य स्वामिदेह एवाचेतनभाग उपकरोति, न चैतन्यमात्र, तथा दर्शनादित्यभिप्रेत्य परिहरति—नैवमग्निरिति।

तदेव चैतन्यस्यानन्यशेषत्वे सति, तस्येश्वरात्मत्व सिद्धम्, अत कूटस्थ एवात्मेत्युपसहरति—तत्रैव सतीति। चितिमत स्वार्थत्वमेव, न परार्थत्व सर्वदेति स्थिते सतीत्यर्थ। स्वबुद्ध्यारूढमेव स्वाध्यस्तान्त करणवृत्तिस्वलितमेव सर्वमध्यात्माधिभूतादिलक्षण सघात अग्न्युष्णप्रकाशवत्स्वरूपभूतेन निर्विकारनित्यचैतन्यस्वभावेनोपलभसे त्वम्। अतो नित्यमुक्तोऽह न सघाताध्यासकर्ता, न मे सघातधर्मससर्गोऽस्तीति स्वस्थो भवत्यर्थ।

ओमिति चेत्स ब्रूयात्, तदा गुरुरेव ब्रूयादित्याह—यदि चैवमिति। मोहादेवाग्रुवमिति चेत्स ब्रूयात्, तदा त प्रति गुरुणा वक्तव्यमाह—किमसाविति ॥ ७२ ॥

---

(१) रिति। (२) नेति—पाठ।

इत्युक्तः शिष्य उवाच—भगवन्, अपगतस्त्वत्प्रसादाद्व्या- मोहः, किंतु मम कूटस्थतायां संशयः । कथम् ? शब्दादीनां स्वतः सिद्धिर्नास्ति, अचेतनत्वात्; शब्दाद्याकारप्रत्ययोत्पत्तेस्तु तेषाम् । प्रत्ययानामितरेतरव्यावृत्तविशेषणानां नीलपीताद्या- कारवतां स्वतःसिद्ध्यसंभवात् । तस्माद्बाह्याकारनिमित्तत्वं गम्य-

ननु संसार्यहं दुःखी नित्यमुक्तस्वभावादीश्वरादन्य इत्यादिभ्रमहेतुर्यो व्यामोहोऽविवेकलक्षण आसीन्मम, स इदानीं त्वत्प्रसादान्निवृत्तः । परंतु कूटस्थचैतन्यस्वरूपेणेति यदिदं मम कूटस्थत्वमुचिवान्भवान्, तत्र प्रतिविषय ज्ञानकर्तृत्वात्, कथं कूटस्थचित्स्वभावता ? इति—संशयो जायते इति शिष्यप्रश्नमुत्थापयति—इत्युक्तः शिष्य उवाचेति ।

अपगतो व्यामोह इत्यनुषङ्गः । संघातसाक्षिणो निर्विकारस्योक्तत्वात्, कथं संशयः ? इति तन्मुखेनैव कूटस्थतामवगमयितुं गुरुः पृच्छति—कथमिति । संशय इत्यनुषङ्गः । शिष्यः स्वविदितमर्थं निवेदयति—शब्दादीनामिति । शब्दस्पर्शरूपरसगन्धास्तावद्विषयाः प्रसिद्धाः, तेषामचि- द्रूपत्वात् स्वतःस्फुरणं नास्तीत्यविवादम् । कथं तर्हि तेषां स्फूर्तिरिति ? तदाह—शब्दाद्याकारप्रत्ययोत्पत्तेस्तु तेषामिति । सिद्धिरित्यनुषङ्गः । शब्दाद्याकाराणां प्रत्ययरूपत्वान्न स्वातिरिक्तग्राह्यतेति विज्ञानवादिमत- माशङ्क्य मध्ये निराकरोति—प्रत्ययानामित्यारभ्य सिद्धिरित्यन्तेन । इत- रेतरं व्यावृत्तानि विशेषणानि शब्दाद्याकाररूपाणि येषां ते तथा । हेतु- गर्भं विशेषणम् । प्रकाशस्वभावत्वात्प्रत्ययानां स्वत एव परोपरागं विना नीलपीताद्याकारवत्ताया असंभवात्, न प्रत्ययमात्रस्वरूपाः शब्दादय इत्य- ध्याहारेण योजना । परमतनिराकरणमुपसंहरति—तस्मादिति । बाह्याः

(१) 'वत्तायाः स्व'—टीकानुसारी पाठः ।

त इति बाह्याकारवच्छब्दाद्याकारत्वसिद्धिः । तथा प्रत्ययानामप्यहंप्रत्ययालम्बनवस्तुभेदानां संहतत्वादचैतन्योपपत्तेः । स्वार्थत्वासंभवात् स्वरूपव्यतिरिक्तग्राहकग्राह्यत्वेन सिद्धिः, शब्दादिवदेव । असंहतत्वे सति चैतन्यात्मकत्वात्स्वार्थोऽप्यहं-

आकारः शब्दादिरूप इन्द्रियसंसृष्टोऽर्थो निमित्तं येषा प्रत्ययाना, तथा भावो बाह्याकारनिमित्तत्वमिति विग्रह. । इति यत', तस्मात्प्रत्ययाना बाह्याकारवच्छ दाद्याकारत्वसिद्धिरित्यन्वय. । चैतन्यात्पृथगाकारवन्तो ये शब्दादयः पराग्व्यवहारयोग्याः, तत्कृताकारत्वात् सिद्धिः प्रत्ययाना, न स्वत इत्यर्थ. । एव शब्दादीना विषयाणा स्वव्यतिरिक्तप्रत्ययग्राह्यत्वं चेदभ्युपगस्यसि, तर्हि प्रत्ययस्वरूपे विशेषाभावसिद्धे कूटस्थत्वसिद्धिरित्याशंक्याह—तथा प्रत्ययानामपीति । नहि विषयसंसृष्टतया भासमाना विषयाकाराः प्रत्ययाः स्वप्रकाशचैतन्यरूपा भवन्ति, आगमापायित्वात् । किंत्वन्यसाक्षिका एवेत्यभिप्रेत्य, तत्स्वरूपविशेषं विशेषणनिर्देशेन कथयति—अहंप्रत्ययालम्बनवस्तुभेदानामिति । अहप्रत्ययालम्बन वस्त्वन्त करण, तस्य भेदा वृत्तिविशेषा , तदात्मकानामित्यर्थ. । विमता प्रत्ययाः न चित्स्वभावा, सहतत्वात् । सहतत्वं चागमापायित्वाच्छब्दादिवत्, देहादिवद्वा । तथा विमता. स्वातिरिक्तग्राहकग्राह्या , अचेतनत्वात्, शब्दादिवदेवेत्यर्थ । अत. परमोकाराभावात्प्रत्ययोत्पत्त्याद्यवस्थासाक्षी निर्विशेषश्चिदात्मा सिद्ध एवेति कुत' कूटस्थताया सशय इति न वाच्यमित्याह—असंहतत्वे सतीति । यद्यपि सघातादन्यश्चैतन्यस्वभाव' स्वार्थ एवात्मा, तथाप्यहप्रत्ययानामन्त -

---

( १ ) 'त्वसि'—पाठ. । ( २ ) 'त्वमभिप्रेत्य नेतरात्मसिद्धि'—पाठ । ( ३ ) परमार्थाकारा'—पाठ ।

प्रत्ययानां नीलपीताद्याकाराणामुपलब्धेति विक्रियावानेव, कथं कूटस्थः?—इति संशयः ॥ ७४ ॥

तं गुरुरुवाच—न युक्तस्तव संशयः, यतस्तेषां प्रत्ययानां नियमेनाशेषत उपलब्धेरेवापरिणामित्वात्कूटस्थत्वसिद्धौ निश्चयहेतुमेवाशेषचित्तप्रचारोपलब्धिं संशयहेतुमात्थ । यदि हि तव परिणामित्वं स्यात्, अशेषस्वविषयचित्तप्रचारोपलब्धिर्न स्यात्, चित्तस्येव स्वविषये, यथा चेन्द्रियाणां स्वविषयेषु; न च तथात्मनस्तव स्वविषयैकदेशोपलब्धिः । अतः कूटस्थतैव तवेति ॥ ७५ ॥

तत्राह—उपलब्धिर्नाम धात्वर्थो विक्रियैव, उपलब्धुः कूटस्थात्मता चेति विरुद्धम् ॥ ७६ ॥

करणवृत्तीनां नीलपीताद्याकाराणामुपलब्ध्या उपलब्धिकर्ता इति हेतोर्विक्रियावानेवायं, कथं कूटस्थ इति मे संशय इत्यर्थः ॥ ७४ ॥

एवं चेद्दृश्यदर्शने विवेचयसि, न तर्हि ते संशयावकाश इति परिहरति—तं गुरुरुवाचेत्यादिना ।

संशयायोगे हेतुमाह—यत इति । यः परिणामी चित्तादिः, तस्य क्रमेण स्वविषयग्राहकत्वमकृत्स्नग्राहकत्वं सकलस्वविषयावस्थाग्राहकत्वं च दृष्टम् । तद्व्यापकं आत्मनः प्रत्ययसाक्षिणः सकाशाद्व्यावर्तमानं, स्वव्याप्यं परिणामित्वमपि तस्य व्यावर्तयतीति व्यापकविरुद्धोपलब्धेः कूटस्थत्वसिद्धौ निश्चय एव युक्तः, न संशय इत्यर्थः । उक्तमेवार्थं व्यतिरेकव्याप्तिं विवृण्वन्नुपपादयति—यदि हीति ॥ ७५ ॥

इदानीं प्रकृतिप्रत्ययार्थपर्यालोचनयोपलब्धा कूटस्थ इति विरुद्धमिति शिष्यः शङ्कामुद्भावयति—तत्राहेति ।

ने, धात्वर्थविक्रियायामुपलब्ध्युपचारात् । यो हि बौद्धः प्रत्ययः, स धात्वर्थो विक्रियात्मकः आत्मन उपलब्ध्याभासफलावसान इत्युपलब्धिशब्देनोपचर्यते, यथा छिदिक्रिया द्वैधी-

उपोपसर्गस्य लभतर्धातो कर्तरि तृचो विधानात्, धात्वर्थस्य च क्रियात्वात्, क्रियायाश्चोत्पत्तिविनाशवत्त्वात्, तत्कर्तरि कथ विक्रियाराहित्यमित्यर्थ. ॥ ७६ ॥

क्रियैव हि प्रकृतिभूतधात्वर्थ, कर्तृत्व च प्रत्ययार्थं सर्वत्र मुख्य इति नास्ति नियम । "गडि वदनैकदेशे", "सविता प्रकाशत", "सविता प्रकाशयति" इत्यत्र व्यभिचारादित्यभिप्रेत्य प्रकृत धात्वर्थतत्कर्तृवचनस्योपलब्धृशब्दस्य गौणार्थत्वमेव युक्तमित्याह गुरु—न, धात्वर्थेति ।

समर्थ विवृणोति—यो हि बौद्ध इति । बौद्धो बुद्धिपरिणाम प्रतिविषयमयति गच्छतीति प्रत्यय । ननु बुद्धेरन्त करणस्य द्रव्यत्वात्, तत्परिणामस्य च,—मृत्परिणामघटादिवत् द्रव्यत्वोपपत्ते,—कथ क्रियात्वमिति तत्राह—धात्वर्थो विक्रियात्मक इति । विशिष्टक्रियात्मक इत्यर्थ । नहि मृदादिवत्स्वाकारतिरोधानेनान्त करणपरिणाम इष्यत, किंतु जलूकावदालोकवद्वा सकोचविकासरूपेण । तादृशस्तु परिणाम परिणामिचेष्टारूपत्वात्, तत्रिन्येति वक्तु युक्त इत्यभिप्राय । तस्या क्रियाया उपलब्धिशब्दोपचारे निमित्तमाह—आत्मन इति । आत्मन स्वरूपभूता योपलब्धि, "सत्य ज्ञानम्", "विज्ञानघन एव" इत्यादिश्रुतिसिद्धा, तस्या आभास, वह्निव्याप्ताय पिण्डस्य वन्ह्याकारत्ववत्, चिदात्मव्याप्ततया चिच्छायापत्ति —तदेव फल, तदवसानस्तत्पर्यन्त इति कृत्वोपलब्धिशब्देनोपचर्यत इत्यर्थ । तत्रानुकूल दृष्टान्तमाह—यथेति ।

(१) गुरुरुवाच न—पाठः । (२) ॑व प्र॑—पाठ । (३) 'त्वात्रि—पाठ । (४) तै उ. २ १. (५) बृ उ २ ४ १२

भावफलावसानेति धात्वर्थेनोपचर्यते तद्वत् ॥ ७७ ॥

इत्युक्तः शिष्य आह—ननु भगवन्, मम कूटस्थत्वप्रतिपादनं प्रत्यसमर्थो दृष्टान्तः ? कथम् ? छिदिः छेद्यविक्रि-

अयं भावः—अर्थप्रकाशो ह्युपलब्धिशब्दार्थः प्रसिद्धः । स नार्थधर्मः, अर्थानां जडत्वादित्युक्तं, नाप्यन्तःकरणधर्मः, तस्यापि करणत्वाच्चैतन्यप्रकाशाश्रयत्वायोगात् । तथाऽपि स्वयंप्रकाशमाननित्यचैतन्यात्मन्यव्यवधानेनाहंतयैवाध्यासात्, स्वसत्तायां प्रकाशाव्यतिरेकात्, आत्मचैतन्यव्याप्तास्तत्तदर्थाकारा वृत्तीः कुर्वदन्तःकरणमुपलब्धा, कर्ता, प्रमाता, भोक्तेति च प्रमातृत्वकर्तृत्वभोक्तृत्वानुभवितृत्वव्यपदेशास्पदं भवति, यथाऽयःपिण्डो दहति, प्रकाशयतीति तद्वत् । आत्मा चाकाशवदविक्रियत्वात्कूटस्थोऽपि संसृष्टान्तःकरणगतस्वाभासाविवेकात्तद्धर्मैस्तदवस्थाभिश्च मिथ्यैव व्यपदिश्यते, चतुष्कोणो वर्तुलः कृशः स्थूलो जातो नष्टोऽग्निरिति यथायःपिण्डगताभासाविवेकादग्निर्व्यपदिश्यते, तद्वत् । तस्मादन्तःकरणस्य निराकारिणः कर्तृत्वेऽपि, उपलब्धेः क्रियमाणत्वाभावात्, उपलब्धिस्वरूपस्यात्मनः सिद्धं कूटस्थत्वमिति ॥ ७७ ॥

तत्रोक्तमर्थं विशदीकर्तुं दृष्टान्तस्य दार्ष्टान्तिकाननुरूपत्वं शङ्कयति—इत्युक्तः शिष्य आह—नन्विति ।

उभयत्र प्रकृतिप्रत्ययार्थयोरौपचारिकत्वस्योक्तत्वात्कथं दृष्टान्तासामर्थ्यमिति गुरुराह—कथमिति ।

उपचरितत्वेऽप्युपलब्धुर्विक्रिया दुर्वारा, यतः छिदिक्रियासाध्यं द्वैधीभावाख्यं फलं विक्रिया, एवमुपलब्धिफलस्यापि फलत्वाविशेषात्साध्यतया विक्रियात्वोपपत्तेः कथमुपलब्धा कूटस्थः स्यादिति शिष्यो दृष्टान्ताऽसामर्थ्यमुपपादयति—छिदिः छेद्येत्यादिना । छिदिक्रियायाः छेद्यविक्रियावसा-

यावसाना उपचर्यते यथा धात्वर्थत्वेन, तथोपलब्धिशब्दोपचरितोऽपि धात्वर्थो बौद्धः प्रत्ययः आत्मन उपलब्धिविक्रियावसानश्चेत्, नात्मनः कूटस्थतां प्रतिपादयितुं समर्थः ॥ ७८ ॥

गुरुरुवाच—सत्यमेवं स्यात्, यद्युपलब्ध्युपलब्ध्रोर्विशेषः। नित्योपलब्धिमात्र एव ह्युपलब्धा। न तु तार्किकसमय इवान्या उलब्धिः, अन्य उपलब्धा च ॥ ७९ ॥

ननूपलब्धिफलावसानो धात्वर्थः कथमिति ? ॥ ८० ॥

उच्यते—शृणु। उपलब्ध्याभासफलावसान इत्युक्तम्।

नत्वबद्धौद्धो धात्वर्थ उपलब्धिशब्दोपचरितोऽपि आत्मोपलब्धिविक्रियावसानश्चेदिति योजना। छिदिक्रियायाः छेत्तृकर्तृद्वैधीभावपर्यन्तत्ववदात्मकर्तोपलब्धिविकारपर्यन्त उपलब्धिधात्वर्थश्चेदित्यर्थः ॥ ७८ ॥

उपलब्धेः स्वरूपेणैव फलत्वं विवक्षित्वा दृष्टान्तानानुगुणत्वमध्यवस्यसि ? किंवोपाधिवशात् ?—इति विकल्प्य, आद्यं दूषयति—सत्यमेवमिति।

विशेषो भेदः। नित्यशब्देन बौद्धमताद्व्यावृत्तिः, मात्रपदेन भेदाभेदमतात्। "प्रज्ञानघन एवं"[1], "प्रज्ञानं ब्रह्म"[2] इत्यादिश्रुतिप्रसिद्धं हेतुमाह—हीति। एवकारव्यावर्त्यमाह—न तु तार्किकेति ॥ ७९ ॥

यद्येवमात्मतत्त्वं, कथं तर्हि धात्वर्थफलत्वस्ववचनमिति शिष्यः शङ्कते—नन्विति ॥ ८० ॥

उपाधिवशात्फलत्वोपचार उपलब्धेः, न स्वरूपत इत्युक्तं स्मारयन् पक्षान्तरमविरुद्धमित्याह गुरुः—शृण्विति।

अन्तःकरणवृत्तीनामाविर्भावतिरोभावधर्मकत्वात्, तद्विशिष्टतया स्फुरणमङ्गीकृत्य, विषयस्थचैतन्याभेदेन प्रकाशमानवृत्तितत्स्थाभासाश्रयतया

(१) बृ. उ. ४. ५. १३. (२) ऐ. उ. ५. ३.

तं गुरुराह—किंत्वनुभूयेते त्वया सन्ततम् ॥ ८७ ॥

शिष्य उवाच—बाढमनुभवामि, किंतु विच्छिद्य विच्छिद्य, न तु सन्ततम् ॥ ८८ ॥

गुरुराह—तर्हि आगंतुके त्वेते, न तवात्मभूते । यदि तवात्मभूते, चैतन्यस्वरूपवत्स्वतःसिद्धे सन्तते एव स्याताम् । किंच, स्वप्नजागरिते न तवात्मभूते, व्यभिचारित्वात्, वस्त्रादिवत् । न हि यस्य यत्स्वरूपं, तत्तद्व्यभिचारि दृष्टम् । स्वप्नजागरिते तु चैतन्यमात्रत्वात् व्यभिचरतः । सुषुप्ते चेत्स्वरूपं स्वप्नजागरिते ममेति शेषः ॥ ८६ ॥

स्वचैतन्यप्रकाश्यत्वान्न तव स्वभावभूते ते अवस्थे इति परिहरति—तं गुरुराहेति । सन्ततमिति । यदा ते भवतः, तदा नानुभूयमाने भवत इत्यर्थः ॥ ८७ ॥

तं गुरुराह—किंत्वनुभूयेते त्वया सन्ततम् ॥ ८७ ॥

शिष्य उवाच—बाढमनुभवामि, किंतु विच्छिद्य विच्छिद्य, न तु सन्ततम् ॥ ८८ ॥

गुरुराह—तर्हि आगंतुके त्वेते, न तवात्मभूते । यदि तवात्मभूते, चैतन्यस्वरूपवत्स्वतःसिद्धे सन्तते एव स्याताम् । किंच, स्वप्नजागरिते न तवात्मभूते, व्यभिचारित्वात्, वस्त्रादिवत् । न हि यस्य यत्स्वरूपं, तत्तद्व्यभिचारि दृष्टम् । स्वप्नजागरिते तु चैतन्यमात्रत्वात् व्यभिचरतः । सुषुप्ते चेत्स्वरूपं

स्वप्नजागरिते ममेति शेषः ॥ ८६ ॥

त्वच्चैतन्यप्रकाश्यत्वान्न तव स्वभावभूते ते अवस्थे इति परिहरति—तं गुरुराहेति । सन्ततमिति । यदा ते भवतः, तदा नानुभूयमाने भवत इत्यर्थः ॥ ८७ ॥

अनुभूयमानत्वमङ्गीकृत्य सन्ततानुभवशब्दार्थमजानानः शिष्य आह—बाढमिति ॥ ८८ ॥

तं गुरुराह—आगंतुके त्वेते इति । सुषुप्तावात्मस्वरूपे भासमानेऽपि, तयोरनवभासात्, नात्मनः स्वरूपभूते ते अवस्थे—अतो विच्छिद्य विच्छिद्यानुभूयेते त्वया ते इत्यर्थः । विमतेऽनात्मभूते, व्यभिचारित्वात्, वस्त्रादिवत्, इत्युक्त्वा, व्यतिरेकेणैतदेव द्रढयति—यदीत्यादिना । चैतन्यमात्रत्वादिति । चित्स्वभावादित्यर्थः । यत्र यदनुभवगोचरः, तत्रैव चेत्तन्नानुभूयते, तदा तस्य ध्वंसो बाधो वा स्यात् । उभयथाऽपि तस्य नाधिष्ठान-

---

( १ ) सतत—पाठः ।

तं गुरुराह—किंत्वनुभूयेते त्वया सन्ततम् ॥ ८७ ॥

शिष्य उवाच—बाढमनुभवामि, किंतु विच्छिद्य विच्छिद्य, न तु सन्ततम् ॥ ८८ ॥

गुरुराह—तर्हि आगंतुके त्वेते, न तवात्मभूते । यदि तवात्मभूते, चैतन्यस्वरूपवत्स्वतःसिद्धे सन्तते एव स्याताम् । किंच, स्वप्नजागरिते न तवात्मभूते, व्यभिचारित्वात्, वस्त्रादिवत् । न हि यस्य यत्स्वरूपं, तद्व्यभिचारि दृष्टम् । स्वप्नजागरिते तु चैतन्यमात्रत्वात् व्यभिचरतः । सुषुप्ते चेत्स्वरूपं स्वप्नजागरिते ममेति शेषः ॥ ८९ ॥

स्वचैतन्यप्रकाश्यत्वान्न तव स्वभावभूते ते अवस्थे इति परिहरति—तं गुरुराहेति । सन्ततमिति । यदा ते भवतः, तदा नानुभूयमाने भवत इत्यर्थः ॥ ८७ ॥

अनुभूयमानत्वमङ्गीकृत्य सन्ततानुभवशब्दार्थमजानानः शिष्य आह—बाढमिति ॥ ८८ ॥

तं गुरुराह—आगंतुके त्वेते इति । सुषुप्तावात्मस्वरूपे भासमानेऽपि, तयोरनवभासात्, नात्मनः स्वरूपभूते ते अवस्थे—अतो विच्छिद्य विच्छिद्यानुभूयेते त्वया ते इत्यर्थः । विमतेऽनात्मभूते, व्यभिचारित्वात्, वस्त्रादिवत्, इत्युक्त्वा, व्यतिरेकेणैतदेव द्रढयति—यदीत्यादिना । चैतन्यमात्रत्वादिति । चित्स्वभावादित्यर्थः । यत्र यदनुभवगोचरः, तत्रैव चेत्तन्नानुभूयते, तदा तस्य ध्वंसो बाधो वा स्यात् । उभयथाऽपि तस्य नाधिष्ठान-

(१) सतत—पाठः ।

यद्येवं भगवन्, कूटस्थनित्योपलब्धिस्वरूपे मयि शब्दाद्याकारबौद्धप्रत्ययेषु च मत्स्वरूपोपलब्ध्याभासफलावसानवत्सूत्पद्यमानेषु कस्त्वपराधो मम ? ॥ ८४ ॥

सत्यम्, नास्त्यपराधः, किंत्वविद्यामात्रस्त्वपराध इति प्रागेवावोचम् ॥ ८५ ॥

यदि, भगवन्, सुषुप्त इव मम विक्रिया नास्ति, कथं स्वप्नजागरिते ? ॥ ८६ ॥

आत्मनो नित्यनिवृत्ताशेषस्वगतविशेषतया कूटस्थत्वेऽवबोधिते, अवबुद्धस्वरूपः शिष्यः स्वभ्रान्तिबीजमपश्यन् पृच्छति—यद्येवमिति ।

अथवा—बौद्धप्रत्ययाश्चेदुपलब्ध्याभासफलावसाना जायन्ते, तदा तानात्मनि नित्यं पश्यतो मम कोऽपराध इत्याक्षिपति—यद्येवमिति ॥ ८४ ॥

प्रश्नस्योत्तरमाह—सत्यं नास्त्यपराध इति ।

कथं तर्हि 'किं न श्रुतं त्वया ?' इति मामास्थेति शङ्कते—किंत्विति । जिज्ञासोस्तव प्रेक्षावत उक्तार्थानवधानं नागन्तुकदोषनिमित्तकं संभाव्यत इत्यभिप्रेत्य मयोक्तमिति परिहरति—अविद्येति । यद्वा—आक्षेपं परिहरति—सत्यमिति । नास्त्यपराधस्तव स्वानुभवाप्रच्छादकत्वात् । कथं तर्हि त्वयोक्तं 'ममानाश्वासो जायते' इति पृच्छति—किंत्विति । अन्योऽपराध इत्युत्तरमाह—अविद्येति । तदेवं यथावदात्मनः स्वरूपानवभासाविद्यानिबन्धन एव संसारित्वमधिकृतत्वमित्याद्यतद्धर्मावभासः[1], न परमार्थोऽस्तीत्युपपत्तितोऽवगमितमात्मनः कूटस्थनित्यत्वम् ॥ ८५ ॥

इदानीमवस्थात्रयसाक्षितयावस्थाधर्मासंस्पर्शित्वेन पुनः कूटस्थतां प्रतिपादयितुमाक्षेपमुत्थापयति—यदि भगवन्निति ।

(१) मयोक्तमिति—पाठः । (२) °कृत्य तत्त्व°—पाठः ।

तं गुरुराह—किंत्वनुभूयेते त्वया सन्ततम् ॥ ८७ ॥

शिष्य उवाच—बाढमनुभवामि, किंतु विच्छिद्य विच्छिद्य, न तु सन्ततम् ॥ ८८ ॥

गुरुराह—तर्हि आगंतुके त्वेते, न तवात्मभूते । यदि तवात्मभूते, चैतन्यस्वरूपवत्स्वतःसिद्धे सन्तते एव स्याताम् । किंच, स्वप्नजागरिते न तवात्मभूते, व्यभिचारित्वात्, वस्त्रादिवत् । न हि यस्य यत्स्वरूपं, तत्तद्व्यभिचारि दृष्टम् । स्वप्नजागरिते तु चैतन्यमात्रत्वात् व्यभिचरतः । सुषुप्ते चेत्स्वरूपं स्वप्नजागरिते ममेति शेषः ॥ ८९ ॥

त्वच्चैतन्यप्रकाश्यत्वान्न तव स्वभावभूते ते अवस्थे इति परिहरति—तं गुरुराहेति । सन्ततमिति । यदा ते भवतः, तदा नानुभूयमाने भवत इत्यर्थः ॥ ८७ ॥

अनुभूयमानत्वमङ्गीकृत्य सन्ततानुभवशब्दार्थमजानानः शिष्य आह—बाढमिति ॥ ८८ ॥

तं गुरुराह—आगंतुके त्वेते इति । सुषुप्तावात्मस्वरूपे भासमानेऽपि, तयोरनवभासात्, नात्मनः स्वरूपभूते ते अवस्थे—अतो विच्छिद्य विच्छिद्यानुभूयेते त्वया ते इत्यर्थः । विमतेऽनात्मभूते, व्यभिचारित्वात्, वस्त्रादिवत्, इत्युक्त्वा, व्यतिरेकेणैवदेव द्रढयति—यदीत्यादिना । चैतन्यमात्रत्वादिति । चित्स्वभावादित्यर्थः । यत्र यदनुभवगोचरः, तत्रैव चेत्तन्नानुभूयते, तदा तस्य ध्वंसो बाधो वा स्यात् । उभयथाऽपि तस्य नाधिष्ठान-

(१) सतत—पाठः ।

व्यभिचरेत्, तन्नष्टं नास्तीति[१] बाध्यं वा स्यात्—आगन्तुकानामतद्धर्माणामुभयात्मकत्वदर्शनात्—यथा धनवस्त्रादीनां नाशो दृष्टः, स्वप्नभ्रान्तिलब्धानां त्वभावो दृष्टः ॥ ८९ ॥

नन्वेवं, भगवन्, चैतन्यस्वरूपमप्यागन्तुकं प्राप्तम्, स्वप्नजागरितयोरिव सुषुप्तेऽनुपलब्धेः, चैतन्यस्वरूपो वा स्यामहम् ॥ ९० ॥

न, पश्य । तदनुपपत्तेः । चैतन्यस्वरूपं चेदागन्तुकं पश्यसि, पश्य, नैतद्वर्षशतेनाप्युपपत्त्या कल्पयितुं[२] शक्नुमो वयम्,

धर्मत्वमिति सदृष्टान्तमुपपादयति—सुषुप्ते चेदित्यादिना । नाशो ध्वंसः । अभावो बाधः ॥ ८९ ॥

तत्र शिष्योऽतिप्रसङ्गं शङ्कते—नन्वेवमिति ।

दृष्टिश्रुतिमतिविज्ञातिलक्षणे हि स्वप्नजागरिते, दृष्ट्यादिमच्चैतन्यमेव; अतो यदि सुषुप्तौ स्वप्नजागरिते नोपलभ्येते, इति तत्र ते न स्तः, तदा चैतन्यमेव सुषुप्तौ नास्तीत्यात्मा आगन्तुकचैतन्यो वा स्यात्, अचैतन्यस्वरूपो वा, गत्यन्तराभावादित्यर्थः ॥ ९० ॥

गुरुः परिहरति—नेति ।

नैवं वक्तुमुचितमित्यर्थः । कथमिति चेत्तत्राह—पश्येति । पर्यालोचयेत्यर्थः । वस्तुस्वभाव आलोच्यमाने, चैतन्यस्यागन्तुकत्वानुपपत्तेर्नैवं वक्तुमुचितमिति वाक्यार्थः । ननु सुषुप्ते दृष्ट्यादिरूपस्य चैतन्यस्यादर्शनात्, जाग्रदादौ दर्शनात्, आगन्तुकमेव चैतन्यं पर्यालोचयामीति चेत्, तत्र वक्तव्यम्—किं निरुपाधिकचित्स्वरूपमेवागन्तुकं पश्यसि ? किंवा नयना-

(१) 'ति वा बाध्यमेव स्यात्; 'ति वा बाध्य वा स्यात्—पाठौ (२) कल्पयितु—पाठः । (३) तुलय | पद्यप्रबन्धे १४. २६.

**अन्यो वाऽचैतन्योऽपि; तस्य संहतत्वात्पारार्थ्यमनेकत्वं नाशित्वं च न केनचिदुपपत्त्या वारयितुं शक्यम्—अस्वार्थस्य स्वतःसिध्यभावादित्यवोचाम । चैतन्यस्वरूपस्य त्वात्मनः स्वतःसिद्धेरन्यानपेक्षत्वं न केनचिद्वारयितुं शक्यम्, अव्यभिचारात् ॥ ९१ ॥**

दिद्वारकबुद्धिवृत्त्युपहितम् ? इति विकल्प्य, आद्यं प्रत्याह—चैतन्यस्वरूपं चेदिति । अलौकिकप्रज्ञस्त्वं चेत् चैतन्यस्वरूपमागन्तुकं पश्यसि, तर्हि पश्य । वयं तु न्यायप्रमाणकुशला अपि तच्चैतन्यस्वरूपमागन्तुकं द्रष्टुं, घटयितुं वा न वर्षशतेनापि शक्नुमः, अन्यो वा कश्चिदचैतन्योऽपि मूढोऽपि न शक्नुयादित्यर्थः । अयं भावः—चैतन्यस्यागन्तुकत्वं चैतन्येन गृह्यते ? किंवाऽचैतन्येन ? नाद्यः, स्वमाहात्म्ये स्ववृत्तिविरोधात्—न ह्यङ्गुल्यग्रेण तदेव स्पृश्यते, असिधारया वाऽसिधारा छिद्यते—नाप्यचैतन्येनान्यचैतन्यस्यागन्तुकत्वं ग्राह्यम्, अन्यत्वस्याप्यसिद्धेः । न द्वितीयः, जडस्य चिदधीनप्रकाशतया चित्प्रकाशकत्वायोगात् । अतश्चैतन्यं नागन्तुकमिति । श्रुतिश्च भवति—" यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् । नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥ " इत्याद्या । एवमाद्यं विकल्पमनुपपत्त्या निराकृत्य, द्वितीयमचैतन्यापादनेन निराकरोति—संहतत्वादिति । नयनादिद्वारकबुद्धिवृत्त्युपाधिमतस्तस्य तु संहतत्वात् परार्थत्वादिकं पूर्वमेवोपपादितमिति नेदानीमुपपत्तिर्वक्तव्येत्याह—इत्यवोचामेति । अत्रापि श्रुतिर्भवति—" न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः । " इत्याद्या । अस्मिंस्तु श्रुतिवाक्ये

(१) बृ. उ. ४. ३. २३. (२) बृ. उ.३. ४. २.

नतु व्यभिचारो दर्शितो मया—सुषुप्ते न पश्यामीति ॥ ९२ ॥

न, व्याहतत्वात् । कथं व्याघातः? पश्यतस्तव न पश्यामीति व्याहतं वचनम् । न हि कदाचिद्भगवन्, सुषुप्ते मया चैतन्यमन्यद्वा किंचिद्दृष्टम् । पश्यंस्तर्हि सुषुप्ते त्वम्; यस्माद्दृष्टमेव प्रतिषेधसि, न दृष्टिम् । या तव दृष्टिः, तच्चैतन्यम्, इति मयोक्तम् । यया त्वं विद्यमानया न किंचिद्दृष्टमिति प्रतिषेधसि, सा दृष्टिस्तच्चैतन्यम् । तर्हि सर्वत्राव्यभिचारात्कूटस्थनित्यत्वं सिद्धं स्वत एव, न प्रमाणापेक्षम् । स्वतःसिद्धस्य हि प्रमातुरन्यस्य प्रमेयस्य परिच्छित्तिं प्रति प्रमाणापेक्षा । या

पञ्चम्यन्तशब्दवाच्यदृक्षादेरन्यद्रष्टृव्याप्यतयाऽचैतन्यस्वभावत्वोक्तेः, तदन्यो दृक्षादिस्वरूपप्रकाशकत्वेन द्रष्ट्रादिशब्दनिर्दिष्टः साक्षी नित्यचैतन्यस्वभावः सिद्ध इत्युपसंहरति—चैतन्यस्वरूपस्य स्थितिरिति ॥ ९१ ॥

उक्तमेवार्थं युक्त्यन्तरेणोपपादयितुं शङ्कामुद्भावयति—नन्विति ॥ ९२ ॥

उत्तरं संग्रहेणाह—न, व्याहतत्वादिति ।

व्याहतत्वमेव प्रश्नपूर्वकं विवृणोति—कथमित्यादिना । न हि कदाचिदिति पुनः शिष्यप्रश्नः । पश्यँस्तर्हीति गुरोरुक्तिः । पश्यन् द्रष्टा दृष्टिमानेव त्वं सुषुप्त इत्यर्थः । यस्मादित्यादिस्तदुपपादनपरो ग्रन्थः स्पष्टार्थः । सुषुप्ते मया किंचिन्न दृष्टमित्युत्थितस्य परामर्शानुपपत्त्या सौषुप्तानुभवस्यावश्यंभावात्, तदा करणोपसंहारात् आगन्तुकानुभवासंभवात्, स्वरूपचैतन्यमनागन्तुकं कूटस्थात्मस्वरूपं सिद्धमित्युपसंहरति—ययेत्यादिना । चैतन्यस्य स्वतःसिद्धिमुपपादयति—स्वतःसिद्धस्य हि प्रमातुरिति । हिशब्दो लोकानुभवप्रसिद्धिद्योतनार्थः । स्वतःसिद्धः प्रमाणनिरपेक्षत्वेनैव सिद्धः,

त्वन्या नित्या परिच्छित्तिरपेक्ष्यतेऽन्यस्यापरिच्छित्तिरूपस्य परिच्छेदाय, सा हि नित्यैव कूटस्था स्वयंज्योतिःस्वभावा। आत्मनि प्रमाणत्वे प्रमातृत्वे वा न तां प्रति प्रमाणापेक्षा, तत्स्वभावत्वात्। यथा प्रकाशनमुष्णत्वं वा लोहोदकादिषु परतोऽपेक्ष्यते अग्न्यादित्यादिभ्यः, अतत्स्वभावत्वात्, नाग्न्यादित्यादीनां तदपेक्षा, सदा तत्स्वभावत्वात्॥ ९३॥

प्रमाणप्रवृत्तेः प्रागेव प्रकाशमान इति यावत्। एवंविधस्य प्रमातुर्यदन्यत्प्रमेयं रूपं, तस्य परिच्छित्ति स्मृतिं प्रति प्रमाणापेक्षा, न प्रमातृस्वरूपपरिच्छित्तिं प्रति प्रमाणापेक्षेत्यर्थः। या त्वन्यस्यापरिच्छित्तिरूपस्याचेतनस्य परिच्छेदायाऽवभासनाय नित्या स्वतःसिद्धा चान्या परिच्छित्तिः संविदपेक्ष्यते, सा हि कूटस्थैव—यतो नित्या स्वयंज्योतिःस्वभावा चेति योजना। तां प्रति स्वरूपकूटस्थनित्यसंविदं प्रति आत्मनि संविद्रूपे विषये प्रमाणत्वे तत्सत्तानिश्चयफलव्यापारात्मत्वे, प्रमातृत्वे वा, तद्व्यापाराश्रयत्वे वा, न प्रमाणापेक्षा प्रमात्रपेक्षा वास्तीत्यर्थः। अयं भावः—अन्तःकरणवृत्तिप्रतिबिम्बितं हि चैतन्यं 'प्रमाणम्' इष्यते, वृत्तिमदन्तःकरणप्रतिबिम्बितं 'प्रमातृ'; तदुभयं प्रमेयावभाससमये नानवभासमानं भवति। तथा सति प्रमेयस्यैव स्वतःस्फुरणशङ्कापातादिदोषप्रसङ्गात्। तदवभासश्च न प्रमात्रन्तरात् प्रमाणान्तराद्वा भवति, अनवस्थाप्रसङ्गादनुपपत्तेश्चेत्यतः स्वप्रकाशतयैव प्रमातृप्रमाणप्रमेयाणामवभासकस्यात्मनः सिद्धिरिति तस्य सिद्धा नित्यस्वप्रकाशकूटस्थचिदात्मतेति। अप्रकाशस्वभावस्यैव प्रकाशकान्तरापेक्षा, न प्रकाशस्वभावस्येत्युक्तमर्थं दृष्टान्तोक्त्या बुद्धिमारोहयति—यथा प्रकाशनमिति॥ ९३॥

अनित्यत्व एव प्रमा स्यात्, न नित्यत्व इति चेत्॥९४॥

न, अवगतेर्नित्यत्वानित्यत्वयोर्विशेषानुपपत्तेः—नहि अवगतेः प्रमात्वेऽनित्यावगतिः प्रमा, न नित्या इति विशेषोऽवगम्यते ॥ ९५ ॥

नित्यायां प्रमातुरपेक्षाऽभावः, अनित्यायां तु यत्नान्तरितत्वादवगतिरपेक्ष्यत इति विशेषः स्यादिति चेत् ॥ ९६ ॥

सिद्धा तर्ह्यात्मनः प्रमातुः स्वतःसिद्धिः प्रमाणनिरपेक्षतयैवेति ॥ ९७ ॥

ननु संविदः प्रमाणफलत्वप्रसिद्धेः कथं नित्यत्वमित्याक्षिपति—अनित्यत्व एवेति ॥ ९४ ॥

अर्थावगतिर्हि प्रमा, न तस्याः स्वरूपत एवानित्यत्वे कल्पकमस्तीति समाधत्ते—नावगतेरिति ॥

संग्रहं विवृणोति—नहीति । चक्षुरादिद्वारकबुद्धिवृत्तिव्यक्ताया अवगतेः प्रमात्वे सति नित्याया प्रमात्वं न भवति, अनित्यायास्तु भवतीति विशेषो नहि गम्यते, विनिगमनाभावादित्यर्थः ॥ ९५ ॥

तत्र विनिगमनाभावोऽसिद्ध इति शिष्यः शङ्कते—नित्यायामिति ।
अवगतेर्नित्यत्वे कारकव्यापारवैयर्थ्यं स्यादित्ययं विशेष इत्यर्थः ॥९६॥

प्रमातुः स्वावगतेर्नित्यत्वे प्रमाणव्यापारवैयर्थ्यमापद्यते ? किंवा विषयावगतेर्नित्यत्वे ? नाद्यः, इष्टापत्तेरित्याह—सिद्धा तर्हीति ।

नित्यावगतिपक्षे प्रमाणनैरपेक्ष्यं चेत्त्वयानुमंस्यते, तर्हि प्रमातुरात्मनः स्वरूपस्य स्वतःसिद्धिः स्वप्रकाशता प्रमाणनिरपेक्षतयैव सिद्धेत्यर्थः । अनित्यस्यास्वप्रकाशस्य च जडत्वादात्मत्वानुपपत्तेरित्यभिप्रायः ॥ ९७ ॥

अभावेऽप्यपेक्षाऽभावः, नित्यत्वादेवेति चेत् ॥ ९८ ॥

न, अवगतेरात्मनि सद्भावादिति परिहृतमेतत् । प्रमातुश्चेत्प्रमाणापेक्षा सिद्धिः, कस्य प्रमित्सा स्यात्? यस्य प्रमित्सा,

नन्वात्मप्रमाया नित्यत्वाद्यदि प्रमाणानपेक्षा, तर्हि प्रमाभावस्यैव तत्र नित्यत्वात्प्रमाणानपेक्षा किं न स्यादिति शङ्कते—अभावेऽपीति । प्रमाभावेऽपीत्यर्थे ॥ ९८ ॥

परिहरति—नावगतेरिति ॥ अवगतेरात्मनि सद्भावादेव प्रमाणानपेक्षा । नह्यवगत्यभावशङ्कावकाश.—असहतस्य सघातसाक्षिणश्चितिमत्त्वोपपादनादित्यर्थः । अथवा—' आत्मसिद्धिः प्रमाणं नापेक्षते ' इति वदता प्रमाणाभावमपेक्षत इत्युक्तं स्यादिति मत्वा, तदपेक्षापि तत्र नोपपद्यते, आत्मसिद्धेर्नित्यत्वादेवेति शङ्कते—अभावेऽपीति । स्वत सिद्धिप्रमाणनैरपेक्ष्यशब्दाभ्यां सर्वानपेक्षप्रकाशमानात्मस्वरूपस्यैव विवक्षितत्वान्नात्र शङ्कावकाश इति परिहरति—नावगतेरिति । इदानीं प्रमातु स्वत सिद्धिर्निरपेक्षैवत्येतद्विपक्षबाधकोपन्यासेन साधयन्नित्याया अपि प्रमाया विषयावगतित्वसिद्धये विषयस्थत्वं सपादयितु प्रमाणव्यापारापेक्षास्तीति सूचयन्पक्षान्तरमपाकरोति—प्रमातुश्चेदित्यादिना । अयमर्थः—"सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव" इति स्थिते कदाचिदज्ञातत्वेन निर्विकल्पकसाक्ष्यवगतस्य ज्ञातत्वव्यवहारसिद्धये यस्य प्रमित्सोत्पद्यते, स एव तदा प्रमाता प्रमाणव्यापाराश्रय इत्युच्यते । तत्र प्रमातु स्वरूपसिद्धिश्चेत्प्रमाणापेक्षा स्यात्, तदा कस्य प्रमित्सा स्यात्?—तस्यैव वा? अन्यस्य वा? प्रमातुमिच्छा च स्वविषया? अन्यविषया वा? सर्वथापि नोपपद्यत इति । तत्रेच्छाश्रयस्येच्छागोचरत्वं निराकुर्वन्स्वप्रमातृत्वमात्मनो निराकु-

(१) °त्वात् प्रमाणानपेक्षा किं—पाठ । (२) अनन्यसिद्धे —पाठ । (३) विवरणे. पृ १३.

स एव प्रमाताभ्युपगम्यते । तदीया च प्रमित्सा प्रमेयविषयैव, न प्रमातृविषया, प्रमातृविषयत्वेऽनवस्थाप्रसंगात्प्रमातुस्तदिच्छायाश्च—तस्याप्यन्यः प्रमाता तस्याप्यन्य इति । एवमेवेच्छायाः प्रमातृविषयत्वे । प्रमातुरात्मनोऽव्यवहितत्वाच्च प्रमेयत्वानुपपत्तिः । लोके हि प्रमेयं नाम प्रमातुरिच्छास्मृतिप्रयत्नप्रमाणजन्मव्यवहितं सिद्धयति, नान्यथा अवगतिः प्रमेयविषया दृष्टा । न च प्रमातुः प्रमाता स्वस्य स्वयमेव

रोति—तदीया चेति । कर्मविषया न कर्तृविषयेत्यर्थः । कर्तैव कर्मापि किं न स्यादित्याशङ्क्यैकस्या क्रियायामेकस्यैव गुणप्रधानभावेन कर्तृकर्मतया वैरूप्यप्रसङ्गान्नैवमित्यभिप्रेत्यान्यप्रमातृकत्वे स्वयमसिद्धस्यान्यसाधकत्वानुपपत्तेरकरणस्य च निलीनतया साधकत्वासंभवात्, तस्यापि सिद्धावन्यापेक्षाया तस्यापि तथात्वमित्यनवस्थामाह—प्रमातृविषयत्व इति । प्रमातुरनवस्थामभिनयति—अप्यन्य इति । उक्तामनवस्थामिच्छायामतिदिशति—एवमेवेति । आत्मनोऽप्रमेयत्वे हेत्वन्तरमाह—प्रमातुरिति । एतदेव स्पष्टयति—लोके हीति । इच्छाजन्मव्यवहितमिष्यमाणं भवति, स्मृतिजन्मव्यवहितं स्मर्तव्यम्, प्रयत्नजन्मव्यवहितं च क्रियासाध्यं प्रयतितव्यम्, प्रमाकरणव्यापारोत्पत्तिव्यवहितं प्रमेयमिति हि लोकप्रसिद्धमित्यर्थः । सिध्यतीति निष्पत्तिप्रकाशयोर्निर्देशः । अन्वयमुक्त्वा व्यतिरेकमाह—नान्यथेति । अवगतिशब्दश्च प्रकाशप्राप्त्योः साधारणः, सुषुप्तस्यापि प्रमेयसिद्धिप्रसङ्गादिति भावः । तर्हि प्रमातुरपि सिद्धिरिच्छादिजन्मव्यवहितैव भवतु ? नेत्याह—न चेति । स्वयमेव प्रमाता स्वस्यैव प्रमातुरिच्छादीनामन्यतमनापि व्यवहितं कल्पयितुं न च केनचि-

केनचिद्व्यवहितः कल्पयितुं शक्यः इच्छादीनामन्यतमेनापि । स्मृतिश्च स्मर्तव्यविषया, न स्मर्तृविषया । तथेच्छाया इष्टविषयत्वमेव, नेच्छावद्विषयत्वम् । स्मर्त्रिच्छावद्विषयत्वेऽपि ह्युभयोरनवस्था पूर्ववदपरिहार्या स्यात् ॥ ९९ ॥

ननु प्रमातृविषयावगत्यनुत्पत्तौ, अनवगत एव प्रमाता स्यादिति चेत् ॥ १०० ॥

न, अवगन्तुरवगतेरवगन्तव्यविषयत्वात्, अवगन्तृविष-

च्छन्न इत्यन्वयः । तत्र हेतुमाह—स्मृतिश्चेत्यादिना । स्मृतीच्छयोः स्वाश्रयविषयकत्वे बाधकमाह—स्मर्त्रिच्छावद्विषयत्वे हीति । स्मर्ता च इच्छावांश्च स्मर्त्रिच्छावन्तौ, तौ विषयौ ययोस्तयोर्भावः स्मर्त्रिच्छावद्विषयत्वं, तस्मिन्निति विग्रहः । उभयोः स्मृतीच्छयोरित्यर्थः । स्मर्तुः स्ववृत्तिव्याप्यत्वायोगात्स्मर्त्रन्तरस्मृतिविषयता वक्तव्या । तथा चैकस्मिन्नात्मनि स्मर्त्रन्तराभ्युपगमे, तस्यापि पूर्वसमानयोगक्षेमतया स्मृत्यनवस्था स्यादित्यर्थः । तुल्यमिच्छायाः प्रयत्नस्येति च द्रष्टव्यम् ॥ ९९ ॥

तदेवमात्मनि न प्रमाणव्यापारापेक्षा, प्रमातुः स्वविषयप्रमाणक्रियाश्रयत्वायोगात्, प्रमात्रन्तरकल्पनायामनवस्थानात्, अप्रमेय एवात्मा सिद्ध्यति । तस्य च बाह्यविषयावच्छेदाय प्रमाणव्यापारापेक्षासंभवात्, न तद्वैयर्थ्यमिति चोक्तयाकतः स्वतोनित्यत्वं साधितम् । इदानीं प्रकारान्तरेण तदेव साधयितुं पूर्वपक्षयति—प्रमातृविषयेति ।

यद्विषयावगतिरुत्पद्यते, सोऽवगतः, सिद्ध इति चोच्यते । प्रमातुश्चावगत्यनुत्पत्तौ, प्रमाता सुषुप्त एव सदा स्यादित्यर्थः ॥ १०० ॥

तत्र किं सुषुप्तसाम्यपरिहारायात्मनोऽवगतिविषयत्वं वक्तव्यमित्यभि-

पत्वे चानवस्था पूर्ववत्स्यात्। अवगतिश्चात्मनि कूटस्थनित्यात्मज्योतिरन्यतोऽनपेक्षैव सिद्धा, अग्न्यादित्याद्युष्णप्रकाशवत्, इति पूर्वमेव प्रसाधितम्। अवगतेश्चैतन्यात्मज्योतिषः स्वात्मन्यनित्यत्वे, आत्मनः स्वार्थत्वानुपपत्तिः, कार्यकरणसंघातवत्संहतत्वात्पारार्थ्यं दोषवत्त्वं चावोचामः। कथम्? चैतन्यात्मज्योतिषः स्वात्मन्यनित्यत्वे, स्मृत्यादिव्यवधानात् सान्तरत्वम्। ततश्च तस्य चैतन्यज्योतिषः प्रागुत्पत्तेः, प्रध्वंसाच्चोर्ध्वमात्मन्येवाभावात्, चक्षुरादीनामिव संहतत्वात्,

प्रायः? किंवा सुषुप्तसाम्यपरिहारमात्रं वक्तव्यमिति?। तत्र नाद्य इत्याह—नावगन्तुरिति।

अवगन्तुरवगतिविषयत्वं स्वाश्रयावगतिव्याप्यत्वायोगादवगन्त्रन्तरावगतिविषयत्वं वाच्यम्, तथा चानवस्था पूर्ववत्स्मृतीच्छाविषयत्ववत्स्यादित्यर्थः। द्वितीयं प्रत्याह—अवगतिश्चेति। "अत्रायं पुरुषः स्वयंज्योतिः,"[1] "आत्मैवास्य ज्योतिः"[2],"एषोऽस्य परमो लोकः"[3], "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते"[4] इत्यादिश्रुतेरात्मनो नित्यप्रकाशस्वभावत्वावगमात्, अग्न्युष्णप्रकाशवदलुप्तावगतिरूपेऽन्यतस्तूत्पत्त्यपेक्षाभावात्, न सुषुप्ततुल्यता तस्येति भावः। विपक्षे चोक्तं दोषं स्मारयति—अवगतेश्चैतन्यात्मज्योतिष इति। उक्तामेवानुपपत्तिं प्रश्नपूर्वकमुपन्यस्यति—कथमित्यादिना। स्मृत्यादेः स्मृतीच्छादिरूपाद्व्यवधानात्—विच्छेदात्—चैतन्यज्योतिषः सान्तरत्वम्—इच्छादिवृत्त्यन्तरपूर्वकत्वमित्यर्थः। किं तत्र स्यात्तदाह—ततश्चेति।

---

(१) बृ. उ. ४. ३. ९. (२) बृ. उ. ४. ३. ६. (३) बृ. उ. ४. ३. ३२. (४) बृ. उ. ४. ३. ३०.

पारार्थ्यं स्यात्। यदा च तदुत्पन्नमात्मनि विद्यते, नै तदात्मनः स्वार्थत्वम्, तद्भावाभावापेक्षा ह्यात्मानात्मनोः स्वार्थत्वपरार्थत्वसिद्धिः। तस्मादात्मनोऽन्यनिरपेक्षमेव नित्यचैतन्यज्योतिष्ट्वं सिद्धम् ॥ १०१ ॥

नन्वेवंसति, असति प्रमाश्रयत्वे, कथं प्रमातुः प्रमातृत्वम्? ॥ १०२ ॥

उच्यते—प्रमाया नित्यत्वेऽनित्यत्वे च रूपविशेषाभावात्। अवगतिर्हि प्रमा, तस्याः स्मृतीच्छादिपूर्विकाया अनित्यायाः कूटस्थनित्याया वा, न स्वरूपविशेषो विद्यते,

आत्मा यद्यागन्तुकचित्प्रकाशविषयः स्यात्, तदा संहतः परार्थश्च स्यात्, इन्द्रियान्तःकरणप्राणादिवदिति। फलितमाह—यदा चेति। चैतन्यज्योतिःस्वच्छब्दार्थः। यदा चात्मनि तदुत्पन्नं विद्यते, तदा नैवमात्मनः स्वार्थत्वं संभवतीत्यन्वयः। तत्र हेतुमाह—तद्भावेति। तस्य संहतत्वस्य भावाभावौ, तदपेक्षा हीति योजना। आगन्तुकचित्प्रकाशगम्यस्यानात्मत्वनियमात्, तस्य च पारार्थ्यात्, तद्विलक्षण आत्मा नित्यचैतन्यस्वरूप एव सन् सदैवावभासत इत्युपसंहरति—तस्मादिति ॥ १०१ ॥

इदानीं नित्यचैतन्यस्वरूपत्वे प्रमातृत्वानुपपत्तिं शङ्कते—नन्वित्ति १०२

अन्यप्रमाश्रयत्वाभावेऽपि प्रमातृत्वव्यपदेश उपपद्यत इति परिहरति—उच्यत इत्यादिना।

- रूपविशेषः स्वरूपविशेषः। संग्रहं विवृणोति—अवगतिर्हीति। तत्र

---

(१) नैव संभवति तदा—पाठः टीकानुसारी

यथा धात्वर्थस्य तिष्ठत्यादेः फलस्य गत्यादिपूर्वकस्यानित्यस्यागतिपूर्वस्य नित्यस्य वा स्वरूपविशेषो नास्तीति तुल्यो व्यपदेशो दृष्टः—'तिष्ठन्ति मनुष्याः', 'तिष्ठन्ति पर्वताः' इत्यादिः। तथा नित्यावगतिस्वरूपेऽपि, प्रमातरि प्रमातृत्वव्यपदेशो न विरुध्यते, फलसामान्यादिति ॥ १०३ ॥

अत्राह शिष्यः—नित्यावगतिस्वरूपस्यात्मनोऽविक्रिय-

दृष्टान्तमाह—यथेति। तिष्ठतिर्ह्यचलत्वेऽर्थे प्रयुज्यते, तत्र किंचिद्गतिपूर्वकमेवाचलं भवति, यथा जङ्गमजातम्, किंचित्त्वचलमेव सदा, यथा स्थावरजातम्, उभयत्र तिष्ठतिव्यपदेशेनैवं कश्चिद्विशेषोऽवगम्यते। तथा प्रमातेति—नित्यप्रमाश्रयत्वेऽपि—व्यपदेशो न विरुध्यत इत्यर्थः। फलसामान्यादिति। फलस्वरूपे प्रमाया विशेषाभावादित्यर्थः। अयमाशय—प्रमाणफल हि प्रमा। सा च चित्प्रकाशरूपा प्रमातृगतैव वक्तव्या—अन्यथा विषयगतत्वे मयेदं विदितमिति स्वात्मनि ज्ञानज्ञेयसंबन्धानुभवानुपपत्तेः। जडस्य चान्तःकरणादे—व्यापाराश्रयत्वेऽपि—चिदाश्रयत्वायोगात्—प्रमातृत्वानुपपत्ते, चिदात्मनस्तु कूटस्थत्वात् व्यापारवत्त्वायोगात्प्रमा प्रति कर्तृत्वानुपपत्ते, मुख्यया वृत्त्या जडाजडयोरुभयोरपि प्रमातृत्वव्यपदेशायोग्यत्वात्, परस्पराध्यासेन व्यवहारप्रवृत्तेर्मिथ्यैवात्मनो बाह्यविषयेऽपि प्रमातृत्वमिति स्थितौ, स्वात्मनि स्वयप्रकाशस्वभावे कुतः प्रमातृत्वशङ्कावकाश? कुतस्तरामनवभासप्रसङ्ग? कुतस्तमा च प्रमाणापेक्षा?—इति ॥ १०३ ॥

एव कुटस्थनित्यचैतन्यज्योतिषोऽन्तःकरणोपाधिसंबन्धप्राप्तमौपाधिकं

(१) °स्यापूर्वस्य—पाठ। (२) °षे न कश्चिद्वि—पाठ। (३) विषयगतत्वेन—पाठ। (४) प्रमातानु°—पाठ।

त्वात्कार्यकरणैरसंहत्य तक्षादीनामिव वास्यादिभिः कर्तृत्वं नोपपद्यते। असंहतस्वभावस्य च कार्यकरणोपादानेऽनवस्था प्रसज्येत। तक्षादीनां तु कार्यकरणैर्नित्यमेव संहतत्वमिति वास्याद्युपादाने नानवस्था स्यादिति ॥ १०४ ॥

इह तु असंहतस्वभावस्य करणानुपादने कर्तृत्वं नोपपद्यत इति करणमुपादेयम्, तदुपादानमपि विक्रियैवेति तत्कर्तृत्वे करणान्तरमुपादेयम्, तदुपादानेऽप्यन्यदिति प्रमातुः स्वातप्रमातृत्वमुपपाद्य, इदानीं कर्तृत्वमपि तथैवेति प्रतिपादयितुं चोद्यमुद्भावयति—अत्राहेति।

तक्षादीनामिवेति व्यतिरेकदृष्टान्तः। तक्षा काष्ठवर्धकः। वासी तदायुधविशेषः। कस्मान्नोपपद्यत इत्यत आह—असंहतस्वभावस्येति। तक्षादिदृष्टान्तं विवृणोति—तक्षादीनां त्विति। अनवस्था न स्यादिति संबन्धः। इतिशब्दः शंकासमाप्त्यर्थः ॥ १०४ ॥

असंहतस्य कर्तृत्वादर्शनात्, आत्मनोऽपि संहतत्वं सिषाधयिषितम्? किंवा वस्तुतस्तस्य कर्तृत्वाभावः? इति वक्तव्यम्। तत्राद्यः पक्ष आत्मनः कूटस्थत्वसाधनेनैवापोहितत्वादनवसरदुःस्थ इति मत्वा, द्वितीयमङ्गीकरोति—असंहतस्वभावस्य करणानुपादाने इति। स्वातन्त्र्ये कर्तृत्वे सतीत्यर्थः।

अयं भावः—कर्तृत्वं कचित्करणोपादानसाध्यं, कचित्तु स्वसान्निध्यमात्रनिबन्धनम्। तत्र करणोपादानसाध्ये कर्तृत्वे, वस्तुत आत्मनः करणोपादानासंभवात्, कर्तृत्वाभावः पारमार्थिकः। तथापि लौकिकमायाचित्तैजसवदात्मनः कर्तृत्वप्रतिभासो मायाप्रत्युपस्थापितान्तःकरणविकाराविवेकादुपपद्यते। द्वितीये तु तक्षाद्यात्मनः स्वहस्तादिव्यापारयितृत्वरूपे

---

(१) असंहतस्य त° –पाठः। (२) °दुपपद्यते—नि. सा. पाठः।

न्त्येऽनवस्थाऽपरिहार्या स्यादिति । न च क्रियैवात्मानं कारयति, अनिर्वर्तितायाः स्वरूपाभावात् । अथान्यदात्मानमुपेत्य क्रियां कारयतीति चेत्—नः अन्यस्य स्वतःसिद्धत्वाविषयत्वाद्यनुपपत्तेः । न ह्यात्मनोऽन्यदचेतनं वस्तु स्वप्रमाणकं

कर्तृत्वे स्वसान्निध्यातिरिक्तस्य करणादेरभाववदात्मनोऽपि सकलकरणसाक्षितया सन्निधिमात्रेणैव कर्तृत्वव्यपदेश उपपद्यते—इति परमार्थतोऽकर्तृत्वम्, उपाध्यविवेकात्कर्तृत्वव्यपदेशश्चेति न किंचनावद्यमिति । तथाच पारमर्षं सूत्रद्वयं—"कर्ता शास्त्रार्थवत्त्वात्", "यथा च तक्षोभयथा" इति च । तर्ह्यस्वतन्त्र एव करिष्यत्यात्मेति कर्ममीमांसकमतमाशंक्य प्रत्याह—न च क्रियेति । क्रियाशब्दः किं प्रयत्नवचनः, तद्व्याप्यधात्वर्थवचनो वा, तत्साध्याऽपूर्ववचनो वा ? इति विकल्प्याद्यौ प्रत्याह—अनिर्वर्तिताया इति । नहि स्वयमसिद्धः परं साधयतीति न्यायादित्यर्थः । तृतीयेऽपि किं तन्निष्पाद्यं नियोगाख्यमपूर्वं विवक्षितम्, उत पूर्वनिर्वृत्तं धर्माधर्माख्यम् ? नाद्यः, पूर्वोक्तदूषणानुवृत्तेः । न च लिङादिश्रवणसमनन्तरं प्रतीयमानाकारं प्रवर्तयत्यात्मानमिति वाच्यम् । प्रतीतिकाले यद्यस्तीतिबुद्धिः, तदा सिद्धत्वप्रतीतेर्न कारयितृत्वम् । नास्तीति प्रतीतौ वन्ध्यासुतवन्न कारयितृत्वम् । साधारणप्रतीतौ च पक्षे निवृत्तिसंभवान्न प्रेरकत्वसिद्धिरित्यभिप्रेत्य द्वितीयमुत्थापयति—अथेति । यदप्यन्यत्पूर्वसिद्धं तदचेतनं ? चेतनं वा ? आद्ये न प्रेरकत्वसंभव इत्याह—नेत्यादिना । आदिशब्दात्प्रेरकत्वमदृः । तथा चात्मनः कर्तृत्वे सति लब्धस्वरूपस्यादृष्टस्य प्रेरकत्वसिद्धिः, तत्सिद्धावन्यसिद्धिरित्यन्योन्याश्रय इति भावः । द्वितीयं प्रत्याह—न हीति । अदृष्टमचेतनम्, आत्मान्यत्वाच्छब्दादिवदित्यर्थः । स्वप्रमाणकं स्वतःसिद्धमिति

(१) ब्र. सू. २. ३. ३३., ४०.

दृष्टम् । शब्दादिसर्वमेवावगतिफलावसानप्रत्ययप्रमितं सिद्धं स्यात् । अवगतिश्चेदात्मनोऽन्यस्य स्यात् , सोऽप्यात्मैवासंहतः स्वार्थः स्यात्, न परार्थः । न च देहेन्द्रियविषयाणां स्वार्थतामवगन्तुं शक्नुमोऽवगत्यवसानप्रत्ययापेक्षसिद्धिदर्शनात् ॥ १०५ ॥

ननु देहस्यावगतौ न कश्चित्प्रत्यक्षादिप्रत्ययान्तरमपेक्षते ॥ १०६ ॥

यावत् । अतः स्वसत्तास्फूर्त्योरात्मसापेक्षस्य कुतस्तत्प्रेरकत्वसंभव इति भावः । शब्दादीनामात्मसापेक्षसिद्धिकत्वं पूर्वोक्तं स्मारयति—शब्दादिसर्वमेवेति । एवं मीमांसकशंका निराकृता । इदानीं क्षेत्रज्ञातिरिक्तोऽपीश्वरोऽवगत्याश्रयः प्रेरकश्चास्तीति नैयायिकशंकामपाकुर्वन्नात्मान्यस्याचेतनत्वानुमाने व्यभिचारप्रसक्तिं वारयति—अवगतिश्चेदिति । ईश्वरो वस्तुत आत्मभिन्नो न भवति, अवगत्याश्रयत्वात्, प्रत्यगात्मवदित्यनुमानानुगृहीतायाः "अयमात्मा ब्रह्म" इत्यादिश्रुतेरात्मनोऽन्यो न चेतनोऽस्ति । स चात्मभूत ईश्वरो देहादिभिरसंहतः, स्वार्थः, स्वतन्त्रो, न परतन्त्र इति न क्रियाक्षेपः । अत आत्मनः कर्तृत्वं विभ्रममात्रसिद्धमित्यर्थः । ईश्वरात्मनो जगत्कर्तृत्वमपि मायाद्वारकमेवेति न कापि कर्तृत्वं परमार्थमिति भावः । नन्ववगत्याश्रयत्वात्कथमसंहतत्वादि ? यतो देहादेः संहतस्याप्यवगत्याश्रयत्वमस्तीति लोकायतमतमाशङ्क्याह—न चेति । देहादिर्नावगत्याश्रयः, अवगम्यमानत्वात्, घटादिवदित्यर्थः ॥ १०५ ॥

ननु कथं देहादेरवगत्यवसानप्रत्ययापेक्षसिद्धिकत्वं, यावता मनुष्योऽहं पश्यामि जानामीति स्वसंवेद्यत्वमनुभूयते? इति शङ्कते—नन्विति ॥१०६॥

---

(१) ७७ वाक्ये. (२) 'अनुमानेन—पाठः । (३) बृ. उ. २. ५. १९.

बाढम्, जाग्रत्येवं स्यात् । मृतिसुषुप्तयोस्तु देहस्यापि प्रत्यक्षादिप्रमाणापेक्षैवं सिद्धिः, तथैवेन्द्रियाणाम्—बाह्या एव हि शब्दादयो देहेन्द्रियाकारपरिणताः—इति प्रत्यक्षादिप्रमाणापेक्षैव हि सिद्धिः । सिद्धिरिति च प्रमाणफलमवगतिमवोचाम । सा चावगतिः कूटस्था स्वयंसिद्धा आत्मज्योतिःस्वरूपेति च ॥ १०७ ॥

अत्राह चोदकः—अवगतिः प्रमाणानां फलं कूटस्थनित्यात्मज्योतिःस्वरूपेति च विप्रतिषिद्धम् ।

अनुभवमात्रमङ्गीकरोति—बाढमिति । नायमनुभवः स्वनिबन्धनः, किंतु देहात्मनोरविवेकनिबन्धन इति प्रत्याययति—जाग्रत्येवं स्यादित्यादिना । यदि देहः स्वयंप्रकाशस्वभावः स्यात्, तदा स्वसत्तायां प्रमाणनिरपेक्षस्वभावत्वात्सुषुप्तिमरणावस्थस्यापि प्रमाणानपेक्षसिद्धिकत्वं स्यात्, न चैवमस्ति, तस्मादचेतनो देह इत्यर्थः । देह उक्तन्यायमिन्द्रियादावतिदिशति—तथेंद्रियाणामिति । तथा देहवत्प्रमाणापेक्षैव सिद्धिरित्यर्थः । किंच देहादिरनात्मा भौतिकत्वाद्बाह्यवदित्याह—बाह्या एव हीति । भूतान्येव ग्राह्यग्राहककरणतदायतनत्वेन परिणमन्ते, उपकार्योपकारकभावेन मिथःसंहतानां समानयोनित्वनियमादिति भावः । ननु सिद्धिरिति निष्पत्तिरुच्यते, सा न प्रत्यक्षाद्यपेक्षेति तत्राह—सिद्धिरिति चेति । देहाकारपरिणतेषु भूतेषु मदशक्तिवदवगतिरुत्पद्यते, इति तस्या अपि भौतिकत्वमविशिष्टमिति लोकायतिकशङ्कामपाकुर्वन्नवगतिस्वरूपमाह—सा चेति । इति चावोचामेत्यनुषङ्गः ॥ १०७ ॥

अवगतेः कूटस्थत्वे, तस्याः फलत्वप्रसिद्धिविरोधं शङ्कते—अत्राहेति ।

---

(१) जाग्रत्येवेव—पाठः । (२) पेक्षयैव—पाठः ।

इत्युक्तवन्तमाह—न विप्रतिषिद्धम् । कथं तर्हि ? कूटस्था नित्यापि सती प्रत्यक्षादिप्रत्ययान्ते लक्ष्यते तादर्थ्यात् । प्रत्यक्षादिप्रत्ययस्य अनित्यत्वे, अनित्येव भवति । तेन प्रमाणानां फलमित्युपचर्यते ॥ १०८ ॥

यद्येवं भगवन्, कूटस्थनित्यावगतिरात्मज्योतिःस्वरूपैव स्वयंसिद्धा, आत्मनि प्रमाणनिरपेक्षत्वात्, ततोऽन्यदचेतनं

अकार्यरूपाया अप्यवगतेः कार्यत्वं कूपाकाशकार्यत्ववदुपचर्यत इति न फलत्वप्रसिद्धिविरोध इति परिहरति—इत्युक्तवन्तमाह न विप्रतिषिद्धमिति । उपचारनिमित्तं पृच्छति—कथं तर्हीति । उत्तरमाह—कूटस्थेति । तादर्थ्यादिति । प्रत्यक्षादिप्रत्ययस्य बुद्धिवृत्तेर्विषयसंसृष्टतयावगत्यभिव्यक्त्यर्थत्वादित्यर्थः । तदेवं कूटस्थावगतिरूपे आत्मनि प्रमातृत्वं, कर्तृत्वं, फलत्वं च कल्पनामात्रमित्युपपादितम् । संहतस्य च देहादेर्विषयपर्यन्तस्य पारार्थ्यं, जाड्यं, पराधीनसिद्धिकत्वं चोक्तम् ॥ १०८ ॥

इदानीमेवमात्मानात्मनोरवगमितं तत्त्वमवगम्य, शिष्यः स्वावगतमर्थं गुरुं प्रति निवेदयन्नद्वैतत्वमात्मनः संभावयितुं द्वैतस्य मृषात्वं प्रकटयति—यद्येवं भगवन्नित्यादिना ।

हे भगवन्, यद्येवं प्रत्यगात्मतत्त्वं कूटस्थत्वादिविशेषणावगत्यात्मकं, तर्हि न प्रमातृत्वादिधर्मकं यतः, अतः प्रमाणनिरपेक्षत्वात्, परमार्थतः प्रमातुरभावे प्रमाणस्याप्यभावात्, तन्निरपेक्षसिद्धिकम् । ततः प्रत्यगात्मनोऽन्यदचेतनं, परस्परोपकार्योपकारकभावेन संहत्य, व्यवहारप्रवर्तकत्वात्परार्थं चेतनार्थं, चैतन्यप्रतिभासमात्रं सिद्धं स्वप्नदृष्टवदनृतमित्यर्थः । ननु सुखदुः-

(१) तर्हि अवगतेः फलत्वम् ? तत्त्वोपचारात् । कू°—चा. पि. पाठः।
(२) चैतन्यार्थं—पाठः ।

संहत्यकारित्वात्परार्थम् । येन च सुखदुःखमोहहेतुप्रत्ययावगतिरूपेण पारार्थ्यं, तेनैव स्वरूपेणानात्मनोऽस्तित्वं, नान्येन रूपान्तरेण । अतो नास्तित्वमेव परमार्थतः । यथाहि लोके रज्जुसर्पमरीच्युदकादीनां तदवगतिव्यतिरेकेणाभावो दृष्टः, एवं जाग्रत्स्वप्नद्वैतभावस्यापि तदवगतिव्यतिरेकेणाभावो युक्तः । एवमेव परमार्थतः, भगवन्, अवगतेरात्मज्योतिषो नैरन्तर्यभावात्कूटस्थनित्यताऽद्वैतभावश्च, सर्वप्रत्ययभेदेष्वव्यभिचारात् ।

खमोहान्वयित्वेन दृश्यस्य सत्त्वरजस्तमोरूपप्रकृतिविकार्यत्वावगमात्कथमनृतत्वमिति सांख्यशङ्कामपाकरोति—येन चेति । येन दृश्यमानाकारेण सुखदुःखमोहहेतुप्रत्ययावगतिरूपेण जडं परार्थं भोक्तृशेषवत् प्रतीयते, तेनैव रूपेणानात्मनः—स्वस्य दृश्यस्येति यावत्—अस्तित्वं सद्भावः, नान्येन सत्त्वाद्यात्मना रूपान्तरेण, तत्र प्रमाणाभावात् । अतः परमार्थतो नास्तित्वमेव दृश्यस्येत्यर्थः । किंच—विमतं जाग्रत्स्वप्नावस्थं दृश्यं नावगतिव्यतिरेकेण कचिदपि परमार्थसत्, दृश्यत्वाज्जडत्वाद्वा, रज्जुसर्पादिवदित्याह—यथा हीति । एवं दृश्यस्य सापेक्षत्वेन मायामयत्वे संभाविते द्रष्टृतत्त्वमद्वैतमनुभवारूढं मम संवृत्तमित्याह—एवमेवेति । एवं सतीत्यर्थः । नैरन्तर्यभावादेवेत्येवकारो योज्यः । अथवा—यथा द्वैतस्य दृश्यस्य तेन रूपेण परमार्थतोऽसत्त्वमनुभूयते मया, एवमेव भगवन्, अवगत्यात्मकस्य प्रत्यक्प्रकाशस्य कूटस्थनित्यता, अद्वैतभावश्च मयानुभूयत इत्यध्याहारः । कूटस्थनित्यतायां हेतुर्नैरन्तर्यभावादिति । उत्पत्त्यादिसाक्षिण उत्पत्त्यादिविकारस्यान्तरायस्यासंभवादित्यर्थः । अद्वैतभावे हेतुमाह—सर्वप्रत्ययेति । व्यावर्तमानेषु प्रत्ययेष्वव्यावृत्तेरित्यर्थः । ननु सुषुप्तेषु सूक्ष्मदृन्व्यावृत्त्यास्यावगत्यात्मनो

---

(१) रूपेणात्मनः—पाठः ।

प्रत्ययभेदाश्चावगतिं व्यभिचरन्ति । यथा स्वप्ने नीलपीताद्याकारभेदरूपाः प्रत्ययास्तदवगतिं व्यभिचरन्तः परमार्थतो न सन्तीत्युच्यन्ते, एवं जाग्रत्यपि नीलपीतादिप्रत्ययभेदास्तामेवावगतिं व्यभिचरन्तोऽसत्यरूपा भवितुमर्हन्ति । तस्याश्चावगतेरन्योऽवगन्ता नास्तीति न स्वेन स्वरूपेण स्वयमुपादातुं हातुं वा शक्यते, अन्यस्य चाभावात् ॥ १०९ ॥

तथैवेति । एषाऽविद्या, यन्निमित्तः संसारो जाग्रत्स्वप्नल-

नाद्वैतत्वसिद्धिः—प्रत्ययानां कुसुमवदवस्थितत्वात्—इत्याशंक्यावगतिव्याघृत्तानामज्ञातसत्त्वे मानाभावान्नैवमित्यभिप्रेत्याह—प्रत्ययभेदास्त्विति । विमता जाग्रत्प्रत्ययाः परमार्थतो न विद्यन्ते, चैतन्यप्रकाशव्यभिचारित्वात्, ये एवं त एवं, यथा स्वप्नप्रत्ययाः, तथाचेमे, तस्मात्तथेति समुदायार्थः । द्वैतस्य मिथ्यात्वे तस्य दृश्यत्वं व्यभिचारित्वं च कारणमुक्तं; सचैतन्यस्वरूपे आत्मनि नास्तीत्यात्मनः सत्यत्वं, कूटस्थत्वनित्यत्वं, स्वप्रकाशत्वं च सिद्धमित्याह—तस्याश्चावगतेरिति । योऽवगन्ता स एवात्मेति स्थितेरवगन्तुरवगम्यमानत्वाभावादवगम्यमानस्य चानात्मत्वादात्मा स्वतः परतो वा नोपादेयः, न हेयश्च; अन्यस्य चाभावात्पूर्णोऽहं त्वत्प्रसादादिदानीमस्मीति शेषः ॥ १०९ ॥

एवं शिष्येणोक्तं गुरुरनुजानाति—तथैवेति ।

प्रकरणोपक्रमे पृष्टं विद्याऽविद्यास्वरूपं तद्विभागं सप्रपञ्चमुपपादितमुपसंहरति—एषाऽविद्येत्यादिना । यन्निमित्तः संसारो जाग्रत्स्वप्नलक्षणः एषाऽविद्येत्यन्वयः । विद्या वेदान्तमहावाक्यजन्यप्रत्ययाभिव्यक्तकूटस्थात्मप्रका-

(१) 'भेदास्त्ववगतिं—टीकानुसारी पाठः (२) 'गतिस्वरूप—पाठः (३) 'स्तु स्तामेवा'—पाठः ।

क्षणः । तस्या अविद्याया विद्या निवर्तिका । इत्येवं त्वमभयं प्राप्तोसि—नातः परं जाग्रत्स्वप्नदुःखमनुभविष्यसि—संसारदुःखान्मुक्तोऽसीति ॥ ११० ॥

ओमिति ॥ १११ ॥

॥ इति श्रीअवगतिप्रकरणम् ॥ २ ॥

---

परिसंख्यानप्रकरणम् ।

मुमुक्षूणामुपात्तपुण्यापुण्यक्षपणपराणामपूर्वानुपचयार्थिनां

शरूपेत्यर्थः । एषा च विद्या तवेदानीं संवृत्तेति कृतकृत्यस्त्वमिति शिष्यं प्रत्याह गुरुः—इत्येवमिति ॥ ११० ॥

गुरुणोक्त शिष्योऽप्यनुमनुते—ओमितीति । इतिशब्दः प्रकरणसमाप्तिद्योतनार्थः ॥ १११ ॥

इति कूटस्थाद्वयात्मबोधनामकं प्रकरणं विवृतम् ॥ २ ॥

---

परिसंख्यानप्रकरणम् ।

यथोक्तविद्यावतः कृतकृत्यत्वान्न किंचिद्विधितोऽनुष्ठेयमस्तीत्युपपादितम् । तत्र यद्येवं विज्ञानवतामपि केषांचिद्भेददर्शनवासनावशान्निर्वातस्थप्रदीपवन्निश्चलं विज्ञानं न भवति, तदा तेषां ज्ञानदार्ढ्याय परिसंख्यानं नाम वक्ष्यमाणमनुचिन्तनमनुष्ठेयमुपदेष्टुमारभते—मुमुक्षूणामित्यादिना ।

मुमुक्षूणां परममुपशममिच्छतामित्यर्थः । अविद्यामूलकत्वात्कर्मणां, तन्निवृत्तिमन्तरेणात्यन्तिकनिवृत्त्यसंभवात्, पूर्वोपार्जितकर्मोच्छेदोऽपूर्वकर्मानुपजनिश्चाविद्यानिवृत्त्यैवोपपत्स्यते, इत्यविद्यानिवृत्तिद्वारा तदुभयमिच्छ-

( १ ) प्राप्तोषि—पाठ. । ( २ ) र्थीना, र्थिन —पाठौ (३) नुमन्यते—पाठ. ।

परिसंख्यानमिदमुच्यते—अविद्याहेतवो दोषा वाङ्मनःकायप्रवृत्तिहेतवः, प्रवृत्तेश्चेष्टानिष्टमिश्रफलानि कर्माण्युपचीयन्ते इति—तन्मोक्षार्थम् ॥ ११२ ॥

तत्र शब्दस्पर्शरूपरसगन्धानां विषयाणां श्रोत्रादिग्राह्यत्वात्, स्वात्मनि परेषु वा विज्ञानाभावः; तेषामेव परिणतानां यथा लोष्टादीनाम्। श्रोत्रादिद्वारैश्च ज्ञायन्ते। येन च ज्ञायन्ते,

तामित्युत्तरविशेषणद्वयस्यार्थः। परिसंख्यानानुष्ठानप्रयोजनमाह—अविद्याहेतव इति। अविद्या हेतुर्निदानं येषां ते तथा। दोषा रागद्वेषादयः। ते च वागादीनां व्यापारोत्पत्तिहेतवः। तद्व्यापाराच्च द्विविधं कर्मजातं शास्त्रीयं स्वाभाविकं च देवतिर्यङ्मनुष्यत्वप्रापकमुपचीयते इति यतः, अतस्तन्मोक्षार्थमविद्यारागादिनिबन्धनकर्मतत्फलोसङ्गनिवृत्त्यर्थं परिसंख्यानं कार्यमित्यर्थः॥ ११२॥

परिसंख्यानप्रकारं सोपस्करं निरूपयति—तत्रेत्यादिना।

तत्र प्रथममात्मानमनात्मभ्यो विविच्यानुसंदधीतेत्युपदिशंस्तद्विवेकप्रकारमाह—शब्दस्पर्शेत्यादिना। विषयत्वे हेतुः—श्रोत्रादिग्राह्यत्वादिति। स्वात्मनि शब्दादिस्वरूपे, परेषु वा घटादिषु विज्ञानाभावो विज्ञातृत्वाभावश्चैतन्याभावो वा निश्चितः। यथा लोष्टादीनां विषयाणां, तथा तेषामेव शब्दादीनां भूतसूक्ष्माणां परिणतानां देहाद्याकारतामापन्नानां यथोक्तविज्ञानाभावो निश्चीयत इति योजना। विमता देहादयो न चेतनावन्तः, विज्ञानकर्मत्वात्, लोष्टादिवदित्यर्थः। हेत्वसिद्धिं परिहरति—श्रोत्रादीति। ज्ञायन्ते देहाद्याकारपरिणताः शब्दादय इति शेषः। एवं देहेन्द्रियमनोबु-

(१) 'फलगन्ध'—पाठः।

स विज्ञातृत्वादतज्जातीयः । ते हि शब्दादयोऽन्योन्यसंसर्गित्वा-ज्जन्मवृद्धिविपरिणामापक्षयनाशसंयोगवियोगाविर्भावतिरोभाव-विकारविकारिक्षेत्रबीजाद्यनेकधर्माणः, सामान्येन च सुख-दुःखाद्यनेककर्माणः । तद्विज्ञातृत्वादेव स विज्ञाता सर्वशब्दादि-धर्मविलक्षणः ॥ ११३ ॥

तत्र शब्दादिभिरुपलभ्यमानैः पीड्यमानो विद्वानेवं परि-संचक्षीत ॥ ११४ ॥

द्विप्राणाहंकारपर्यन्तस्य साक्ष्यस्यानात्मतया हेयत्वमुपदिश्य, अवशिष्टमहेय-मनुपादेयं च साक्षिणमात्मानं दर्शयति—येन चेति । अतज्जातीयो भूतसं-घातविलक्षणस्वभाव इत्यर्थः । विलक्षणस्वभावत्वमेव प्रकटयितुं विषयस्वभा-वमुपन्यस्यति—ते हीत्यादिना । जन्मग्रहणादेव तदनन्तरास्तित्वं गृहीतं द्रष्टव्यम् । जन्मादयः षट् भावानां स्वरूपनिबन्धना विकाराः । संयोग-वियोगौ पुत्राद्यनुबन्धनिबन्धनौ । आविर्भावतिरोभावशब्दावागन्तुकप्रकाश-विषयतया जडत्वबोधकौ । दर्शनादर्शने आविर्भावादिशब्दार्थः । विकारवि-कारीति व्रणगण्डविस्फोटाद्यवस्थोच्यते । क्षेत्रबीजेति स्त्रीपुंसद्वयात्मकपरि-णामभेद उक्तः । आदिपदादनुक्तावान्तरभेदग्रहः । एवंविधानेकधर्मवन्त इत्यर्थः । सामान्येनेति । शब्दाद्यनुभवे सति सुखदुःखमोहरागाद्युत्पत्तेः प्रसिद्धेरित्यर्थः । कर्मशब्दः कार्यवचनः । शब्दादिविषयवदवस्थासाक्षिणस्तद्वि-लक्षणस्वभावत्वमाह—तद्विज्ञातृत्वादेवेति ॥ ११३ ॥

एवं साक्षिसाक्ष्यान्वयव्यतिरेकाभ्यामात्मानात्मानौ विविच्य, आत्मान-मेव शुद्धं 'अहं ब्रह्मास्मि' इत्यनवरतमनुचिन्तयतो यदाऽन्यमुपलम्भादुप-

---

(१) स शब्दादि—पाठः । (२) °व तद्विज्ञाता—पाठः । (३) भावाः स्वरू-पनिबन्धनादिविकाराः—पाठः । (४) °विभागौ—पाठः ।

शब्दस्तु ध्वनिसामान्यमात्रेण, विशेषधर्मैर्वा षड्जादिभिः, प्रियैः स्तुत्यादिभिरिष्टैरनिष्टैश्चासत्यबीभत्सपरिभवाक्रोशादिभिर्वचनैर्वा मां दृक्स्वभावमसंसर्गिणमविक्रियमचलमनिधनमभयमत्यन्तसूक्ष्ममविषयं गोचरीकृत्य, स्प्रष्टुं नैवार्हति, असंसर्गित्वादेव मम। अत एव न शब्दनिमित्ता हानिर्वृद्धिर्वा। अतो मां किं करिष्यति स्तुतिनिन्दादिप्रियाप्रियत्वादिलक्षणः शब्दः? अविवेकिनं हि शब्दमात्मत्वेन गतं प्रियः शब्दो वर्धयेत्, अप्रियश्च क्षपयेत्, अविवेकित्वात्। नतु मम विवेकिनो बालाग्रमात्रमपि कर्तुमुत्सहते इति। एवमेव स्पर्शसामान्येन तद्विशेषैश्च शीतोष्णमृदुकर्कशादिज्वरोदरशूलादिलक्षणैश्चाप्रियैः प्रियैश्च कैश्चिच्छरीरसमवायिभिर्बाह्यागन्तुकनिमित्तैश्च न मम काचिद्विक्रिया वृद्धिहानिलक्षणा अस्पर्शत्वात्क्रियते, व्योम्न इव मुष्टिघातादिभिः। तथा रूपसामान्येन तद्विशेषैश्च प्रियाप्रियैः स्त्रीव्यञ्जनादिलक्षणैररूपत्वान्न मम काचिद्धानिर्वृद्धिर्वा क्रियते। तथा रससामान्येन तद्विशेषैश्च प्रियाप्रियैः मधुराम्ललवणकटु-

ऽम्मनिमित्तनिक्षेप उपस्थितो भवति, तदाऽवेक्षुपानैर्ष्युर्यादिविकारोद्भवभयपरिहारायानुचिन्तनीयमुपदिशति—तत्र शब्दादिभिरिति॥ ११४॥

उक्तमेव विषय विभज्य व्युत्पादयति—शब्दस्त्विति।

ध्वनिरव्यक्तवर्णविशेषो नादमात्र इत्यर्थः। विशेषधर्मैरित्यस्य व्याख्या—षड्जादिभिरित्यादि। 'मा दृक्स्वभावम्' इत्यस्य विवरणार्थानि विशेष-

(१) मा—पाठ। (२) यत—पाठ.। (३) °लवणकटु—पाठ.। (४) °दाऽवेक्षु°—पाठ।

तिक्तकषायैर्मूढबुद्धिभिः परिगृहीतैः अरसात्मकस्य मम न काचिद्धानिर्वृद्धिर्वा क्रियते। तथा गन्धसामान्येन तद्विशेषैश्च प्रियाप्रियैः पुष्पाद्यनुलेपनादिलक्षणैरगन्धात्मकस्य न मम काचिद्धानिर्वृद्धिर्वा क्रियते, "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" इति श्रुतेः ॥ ११९ ॥

किंच—य एव बाह्याः शब्दादयः, ते शरीराकारेण संस्थिताः तेद्ग्राहकैश्च श्रोत्राद्याकारैः, अन्तःकरणद्वयतद्विषयाकारेण च, अन्योन्यसंसर्गित्वात्संहतत्वाच्च सर्वक्रियासु। तत्रैवं सति विदुषो न मम कश्चिच्छत्रुर्मित्रमुदासीनो वाऽस्ति। तत्र

णान्यसंसर्गिणमित्यादीनि। 'उत्सहत इति' इत्यत्र 'परिसंचक्षीत' इत्यनुषङ्गः। 'किंच य एव' इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः ॥ ११५ ॥

एवं तावच्छब्दस्पर्शरूपरसगन्धैः सामान्यविशेषरूपैर्न हानिर्वृद्धिर्वा ममेति तैरनभिभवमनुचिन्तनीयमभिधाय, इदानीं शब्दाद्यनुभवमनुचिन्तनीयं दर्शयति —किंच य एवेति।

'य एव शरीरेन्द्रियाकारैः परिणम्य संस्थिताः, त एवान्तःकरणद्वयतद्विषयसुखदुःखाद्यात्मना च परिणमन्ते', इत्यध्याहारः। तत्र हेतुद्वयमाह—अन्योन्येति। सर्वक्रियासु संहतत्वात्संभूयकारित्वादित्यर्थः। ततः किमित्यत आह—तत्रैवं सतीति। भूतभौतिकानामेव सक्रियत्वे सति विदुषो मम सर्वविकारविकारिसंघातसाक्षिणो निर्विकारस्य न कश्चिच्छत्र्वादिर्विद्यत इति चिन्तयेत्। यदि. कश्चिन्मिथ्याज्ञाननिमित्तादेहाभिमानान्मम

(१) कठ. उ. ३. १५. (२) तत्परिमाणरूपैस्तद्ग्राहकैश्च—पाठः। (३) बुद्धिमनसी (४) तेषामन्योन्य'—पाठ.। (५) ११६ वाक्यारम्भे. (६) शब्दादि.—पाठः।

यदि कश्चित् मिथ्याज्ञानाभिमानेन प्रियमप्रियं वा प्रयुयुक्षेत क्रियाफललक्षणं, तन्मृषैव प्रयुयुक्षते सः, तस्याविषयत्वान्मम, "अव्यक्तोऽयमचिन्त्योऽयम्" इति स्मृतेः। तथा सर्वेषां पञ्चानामपि भूतानामविकार्यः, अविषयत्वात्, "अच्छेद्योऽयमदाह्योऽयम्" इति स्मृतेः। याऽपि शरीरेन्द्रियसंस्थानमात्रमुपलक्ष्य, मद्भक्तानां विपरीतानां च प्रियाप्रियादिप्रयुयुक्षा, तज्जा च धर्माधर्मादिप्राप्तिः, तेषामेव, न तु मय्यजरेऽमृतेऽभये "नैनं कृताकृते तपतः", "न कर्मणा वर्धते नो कनीयान्", "सबाह्याभ्यन्तरो ह्यजः", "न लिप्यते लोकदुःखेन बाह्यः"

प्रियमप्रियं वा क्रियाफललक्षणं प्रयुयुक्षेत प्रयोक्तुमिच्छेत्, स तन्मृषैव प्रयुयुक्षते तस्याविषयत्वान्ममेति चिन्तयेदिति योजना। प्रियाद्यविषयत्वे मानमाह—अव्यक्तोऽयमिति। अविकारित्वं चात्मनश्चिन्तयेदिति सप्रमाणमाह—तथा सर्वेषामिति। नन्वेवमनाधेयातिशयश्चेदात्मा, कथं तर्हि तमुद्दिश्यान्येषामुपकाराद्यर्था प्रवृत्तिः? तत्राह—याऽपीति। शरीरसंस्थानमेव ते पश्यन्ति, नात्मानम्। शरीरे च ममाभिमानाभावादात्मनश्चासङ्गादिलक्षणत्वान्न मयि तत्कृतोऽतिशयः। किंतु तेषामेव यथाक्रियं फललाभ इत्यर्थः। स्वस्यानाधेयातिशयत्वे प्रमाणमाह—नैनमित्यादिना। किंच, यद्यनात्मा नाम स्यात्, तदा तत्कृतं प्रियमप्रियं वा भवेत्; न तन्ममास्ति

(१) प्रयुयुक्षेत—पाठः। (२) प्रयुयुक्षति—पाठः। (३) भ. गी. २. २५. (४) तत्रैव २. २४. (५) बृ. उ. ४. ४. २५; प्र. उ. ५. ७. (६) बृ. उ. ४. ४. २२. (७) बृ. उ. ४. ४. २३. (माध्यन्दिनपाठः) (८) मुं. उ. २. १. २. (९) कठ. उ. ५. ११. (१०) 'क्रिय क्रियाफल'—पाठः।

इत्यादिश्रुतिभ्यः। अनात्मवस्तुनश्चाऽसत्त्वं परमो हेतुः। आत्मनश्चाद्वयत्वे, द्वयस्यासत्त्वात्, यानि सर्वाण्युपनिषद्वाक्यानि विस्तरशः समीक्षितव्यानि समीक्षितव्यानीति ॥ ११६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ सकलवेदोपनिषत्सारोपदेशसाहस्र्या गद्यग्रन्थः समाप्तः ॥

---

सर्वात्मत्वान्ममेति चिन्तयेदित्याह—अनात्मवस्तुनश्चेति। कुतस्तस्यासत्त्वमित्यत्र हेतुमाह—आत्मनश्चेति। आत्मनश्चाद्वयत्वे प्रामाणिके सति तद्विरुद्धस्य द्वयस्यासत्त्वादित्यर्थः। उक्तार्थसाधकं प्रमाणमप्यनुशीलनीयमित्याह—यानीति। ब्रह्मविद्याप्रतिपादकानि सर्वाणि वेदान्तवाक्यानि विस्तरशो बहुशाखोपसंहारेण पुनः पुनरालोचनीयानीत्यर्थः। द्विरुक्तिर्ग्रन्थसमाप्तिद्योतनार्था ॥ ११६ ॥

इति परिसंख्यानप्रकरणं तृतीयं विवृतम् ॥ ३ ॥

उपदेशसाहस्र्याः सद्गद्यबन्धो यथामति।
व्याख्यातो रामतीर्थेन भक्त्या स्वज्ञानसिद्धये ॥

इति श्रीमच्छंकराचार्यकृतोपदेशसाहस्र्याः गद्यभागस्य पदयोजनिका नाम टीका श्रीकृष्णतीर्थशिष्यश्रीरामतीर्थविरचिता समाप्ता।

---

(१) असत्त्वादिति परमो हेतुः—पाठः। (२) अद्वयत्वविषयाणि—द्वयस्य—द्वैतस्य वा पाठः।

श्रीमच्छङ्कराचार्यप्रणीता

# उपदेशसाहस्री

## पद्यप्रबन्धः

### १ उपोद्घातप्रकरणम्

चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।
यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥ १ ॥

श्रीगणेशाय नमः ।

यत्राध्यस्तमिदं सर्वं मेयमानाद्यविद्यया ।
भाति नो भाति यज्ज्ञानात्तदस्मि ब्रह्म चित्सुखम् ॥

तदेव सर्वोपनिषदर्थसारसंग्रहं गद्यग्रन्थप्रबन्धेन संक्षेपतो युक्त्योपदिश्य, पुनरप्युक्तमेवार्थजातं पद्यग्रन्थप्रबन्धेन सोपस्करं विस्तरेणोपदेष्टुकामो भगवान् भाष्यकारः पद्यग्रन्थारम्भे ग्रन्थप्रतिपाद्यपरदेवतानमस्काररूपं मङ्गलं कृतं शिष्यशिक्षार्थं श्लोकेनोपनिबध्नाति—चैतन्यमिति ।

तस्मै सामान्यतः प्रसिद्धाय[1] नमः प्रह्वीभावो भूयादित्यर्थः । तस्य विशेषजिज्ञासायां लक्षणमाह—सर्वविदे इति । सर्वं वेत्तीति सर्ववित्, तस्मै । सर्वशब्देन भूतं[2] भवद्भविष्यदित्येतदात्मकं जगदुच्यते । तत्सर्वं सर्वावस्थं सर्वदा सवितृवत्सन्निधिसत्तामात्रेण प्रकाशयत्सर्ववित् । नहीदं जडं स्वसत्तास्फूर्त्योः स्वतन्त्रं भवति, अतो यदधीनसत्तास्फूर्तिमदिदं, तदस्ति सर्वज्ञ

(१) प्रसिद्धात्मने—पाठ । (२) भूतभ°—पाठ. ।

सर्ववित्सर्वाश्रय इति तटस्थलक्षणं सिद्धं भवतीति भावः। एवं जगत्प्रवृत्तिस्थितिसंहारनियामकत्वेन सन्मात्रतया ताटस्थ्येन लक्षितस्य स्वरूपलक्षणं वदन्—सर्वविषयवेदनाश्रयतया सर्ववित्त्वम्—इति वैशेषिकादिमताशङ्कां वारयति—चैतन्यमिति। यच्चैतन्यं चितिस्वभावं ज्ञानस्वरूपं, तस्मै—इति यत्तच्छब्दयोः संबन्धः, 'विज्ञानमानन्दं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिभ्यः। नह्यचित्स्वभावस्य चिद्धर्मकता युज्यते, न खल्वनुष्णस्वभावकं जलमुष्णत्वधर्मकं भवतीति भावः। चिदेकरसस्यापि सर्वज्ञत्वं मायोपाधिकं व्यावहारिकमित्यनवद्यम्।

ननु चेतनोऽणुपरिमाण इत्येकदेशिनः, मध्यमपरिमाण इति दिगम्बराः, मन्यन्ते—अतस्तस्य सर्वविषयसंसर्गाभावे कथं सर्वज्ञत्वम्? प्रकाशो हि सावित्रादिः स्वसंसृष्ट एव प्रकाशव्यवहारहेतुः, नासंसृष्टे विषये, इत्यत आह—सर्वगमिति। 'नित्यं विभुं सर्वगतम्', 'आकाशवत्सर्वगतश्च नित्यः', 'स पर्यगाच्छुक्रम्' इत्यादिश्रुतिविरोधात्, अणुपरिमाणत्वादिकल्पनानवकाश इति; उत्क्रान्त्यादेर्लिङ्गोपाधिकत्वश्रवणात्, न तेन स्वाभाविकविभुत्वार्थकश्रुतिबाधः; इति दिक्।

ननु सर्वगमित्युक्ते—सर्वमन्यत्, तद्गतं च ब्रह्मान्यत्—इति वस्तुपरिच्छेदप्रतिभासात्, सांख्यादिवादिमतवत् सजातीयविजातीयभेदवत्त्वं प्राप्तमित्यत आह—सर्वमिति। 'सर्वं खल्विदं ब्रह्म', 'इदं सर्वं यदयमात्मा', 'आत्मैवेदं सर्वम्' इत्यादिश्रुतेरित्यर्थः। अनेन सर्वोपादानत्वमुक्तम्। उपादानं हि स्वकार्यं सर्वं व्याप्नुवद्व्यापक भवति, नानुपादानम्, तद्ध्येकदेशेन संसृज्यमानमव्यापकमेव भवति—इत्यतः सर्वोपादानत्वा-

(१) बृ. उ. ३. ९. २८. (२) तै. उ. २. १. (३) मुं. उ. १. १. ६. (४) ?. (५) ई. उ. ८. (६) छां. उ. ३. १४. १. (७) बृ. उ. २. ४. ६.; ४. ५. ७. (८) छां. उ. ७. २५. २. (९) तद्देकदेशेन—पाठः।

त्वमित्यभिप्रायः । सर्वात्मकमपि ब्रह्म जीवभावापन्नं, जीवस्य ब्रह्मणो भिन्नत्वात्, तद्धर्मसंसारिभावेन विरुद्धधर्मवतोरैक्यं संभवति, इद-मनुद्भिन्नदिक्षत आह—सर्वभूतगुहाशयमिति । सर्वभूतानां स्थावरजङ्ग-मानां गुहासु बुद्धिषु शेत इति सर्वभूतगुहाशयम्—गूढा अस्यां ज्ञानज्ञे-यज्ञातृपदार्था इति गुहा बुद्धिः—गूहतेः संवरणार्थस्य धातोरिदं रूपम् । सर्वप्राणिबुद्ध्यन्तःसाक्षितया निर्विकारं वर्तत इत्यर्थः । तथाच श्रुतिः—'यो वेद निहितं गुहायां परमे व्योमन्', 'हृद्यन्तर्ज्योतिः पुरुषः स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयम्' इत्याद्या । तथाच—'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादिना स्रष्टुरेव ब्रह्मणो जीवरूपेण प्रवेशश्रवणात्, 'अयमात्मा ब्रह्म' इत्यादितादात्म्यश्रुतेश्च, न ब्रह्मणोऽन्यो जीव इत्यव-धार्यते । विरुद्धधर्मसंसर्गप्रतिभासस्तूपाधिनिबन्धनः, न स्वरूपनिबन्धन इति भावः । एतेन जीवो नाम ब्रह्मणोंऽशः, विकारो वा, स्वतन्त्र एव वा—इति भेदाभेद-भेदवादिपक्षा निराकृता वेदितव्याः ।

ननु सर्वभूतगुहाशयत्वे ब्रह्मणो मानससंवेद्यत्वं स्यात्, तथा सर्वात्मत्वे प्रपञ्चात्मत्वप्राप्तिरिति शङ्कायामाह—यत्सर्वविषयातीतमिति । सर्वमवि-द्यातत्कार्यात्मकं विषयमतीत्य व्यवस्थितमित्यक्षरार्थः । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादिश्रुतेः परमेश्वराधिष्ठितमायाविवर्तत्वाव-गमात् सर्वस्य, मायायाश्चानिर्वचनीयत्वात्, परमार्थतः किमपि ब्रह्मणो भिन्नं वस्त्वस्ति । तथा सर्वान्तःकरणतत्प्रचारसाक्षिणो न मानससंवेद्यत्वं संभाव्यते । नहि मिथ्यादृष्टिगृहीतेन मरीच्युदकादिना भूम्यादि उदकादि-मत्परमार्थतो भवति, न वा काष्ठेनाग्निः प्रकाश्यते दह्यते वा, अतो युक्तं

---

(१) तै. उ. २. १. (२) छां. उ. ८. ३. ३. (३) तै. उ. २. ६. (४) बृ. उ. २. ५. १९. (५) एवेति भेदः—पाठः (६) श्वे. उ. ४. १०. (७) परमार्थ—पाठः । (८) वरिवर्ति तथा तस्य—पाठः ।

समापय्य क्रियाः सर्वा दाराग्न्याधानपूर्विकाः ।
ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रमे ॥ २ ॥

सर्वविषयातीतत्वमिति भावः । तथाच श्रुतिः 'नेति नेति', 'नेह नानास्ति किंचन', 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ॥' इत्याद्या । अत्र चैतन्यमित्यादिविशेषणत्रयं तत्त्वपदार्थसाधारणं, सर्वभूतगुहाशयमिति च बुद्ध्यादिसाक्षी त्वंपदार्थ उक्तः, सर्वविदिति तत्पदवाच्यं ब्रह्मोच्यते, सर्वविषयातीतमिति तत्पदलक्ष्यमुक्तम् । यत्तच्छब्दयोः सामानाधिकरण्यादेकार्थवृत्तित्वे सति, तत्त्वंपदार्थयोरैक्यमखण्डवाक्यार्थस्तात्पर्यवृत्त्या प्रतिपादितो भवति । तदेव मङ्गलाचरणव्याजेन वेदान्तशास्त्रीयविषयाद्यनुबन्धोऽप्यत्र प्रपञ्चितोऽस्य तत्प्रकरणत्वद्योतनाय । तथाहि—उक्तवाक्यार्थो विषयः, चैतन्यं सर्वविषयातीतमिति च चिदात्मनः सर्वानर्थसंस्पर्शित्वाभावोक्तेः, अशेषानर्थनिवृत्त्युपलक्षितं निरतिशयानन्दाविर्भावात्मकं ब्रह्मैव प्रयोजनमुक्तम्, अर्थात्तत्कामोऽधिकारी सूचित एव भवति । उक्तविशेषणानां वेदान्तेष्वेव प्रसिद्धेः, शास्त्रब्रह्मणोः प्रतिपाद्यप्रतिपादकभावः संबन्धो ध्वनित इति ॥ १ ॥

एवं देवतानमस्कारव्याजेन वेदान्तप्रतिपाद्यपरदेवतातत्त्वमुपक्षिप्तम् । इदानीं वेदान्तानां तत्परत्वं प्रतिपादयितुं कर्मकाण्डनिर्वृत्तमर्थमनूद्य तेन ज्ञानकाण्डाख्यवेदान्तानां संगतिमभिदधानस्तेषामगतार्थत्वमनन्यशेषत्वं च तावदाह—समापय्येति ।

वेदः इदानीं ब्रह्मविद्यां वक्तुं प्रचक्रमे—इत्यन्वयः । इदानीमिति जिज्ञासोरुपस्थितिसमय उक्तः । अथेति जिज्ञासाप्रवृत्तिप्रयोजकहेतुसाधनचतुष्टयसंपत्त्यानन्तर्यमुच्यते । तथाच विवेकवैराग्यशमादिसाधनसंपन्नस्य मुमुक्षो-

(१) बृ उ २ ३ ६ (२) बृ उ ४ ४ १९ (३) तै उ २ ४
(४) त ॥ १ ॥—पाठ । (५) वेदाना—पाठ ।

मोक्षसाधनब्रह्मविद्यां साक्षात्प्रतिपादयितुं ज्ञानकाण्डात्मको वेदः प्रवर्तत इत्यर्थः। कुतोऽस्य साधनसंपत्तिरित्यपेक्षायां कर्मकाण्डोक्तकर्मानुष्ठानजनितबुद्धिशुद्धित इत्यभिप्रेत्याह—समापय्येत्यर्धेन। दाराग्न्याधानपूर्विका इति विहितक्रियामात्रोपलक्षणम्। नित्यनैमित्तिकप्रायश्चित्तोपासनारूपाः सर्वाश्रमप्रयुक्ता विधिविहिताः सर्वाः क्रियाः समापय्य समाप्तिं प्रापय्य, कर्मकाण्डात्मनानुष्ठेयकर्माणि प्रतिपाद्य, स्थितो वेद इति संबन्धः। अयं भावः—वेदो हि स्वतःप्रमाणभूतः सर्वार्थप्रकाशको नित्यनिरतिशयपुरुषार्थमर्थयमानस्य तदुपायं मृगयतः सर्वोत्साहं प्रयतमानस्यापि तमलभमानस्य तादृक्पुरुषार्थसाधनं प्रत्यक्षादिभिरनवगम्यमानमुपदेष्टुं प्रवर्तते। नित्यनिरतिशयपुरुषार्थश्च मोक्ष एव, नान्यः, इति मोक्षोपायप्रतिपादने वेदतात्पर्यमवगम्यते। श्रुतिस्मृती चात्र भवतः— 'सर्वे वेदा यत्पदमामनन्ति'[1], 'सर्वे वेदा यत्रैकं भवन्ति' 'स मानसीन आत्मा जनानाम्'[2] इति, 'वेदैश्च सर्वैरहमेव वेद्यः'[3] इति च। मोक्षसाधनं च साक्षादात्मतत्त्वज्ञानमेव, 'तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय'[4] इति श्रुतेः। तच्च नाशुद्धान्तःकरणस्योपदेष्टुं युक्तं, तस्य तद्ग्रहणसामर्थ्याभावात्। श्रुतिश्च भवति—'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्'[5]॥ इति। अतस्तस्य ज्ञानोत्पत्तिप्रतिबन्धकदुरितक्षयार्थानि नित्यानि कर्माणि प्रथमं विधत्ते[6], तानि च संयोगरूपचोदनासमाख्यानामविशेषेण सर्वशाखाप्रत्ययन्यायेनेतिकर्तव्याङ्गकलापपरिमाणाधिकारिविशेषोक्तिपूर्वकमनुष्ठापयति[7]। 'धर्मेण पापमपनुदति'[8], 'न कर्म लिप्यते नरे'[9], 'अविद्यया मृत्युं तीर्त्वा' इत्यादिश्रुतेर्दुरितक्षय एव धर्मानुष्ठानस्य परं प्रयो-

---

(१) कठ. उ. १. १५. (२) तै. आ. ३. ११. १. (३) भ. गी. १५.१५. (४) श्वे. उ. ३. ८. (५) कठ. उ. २. २४. (६) विधत्ते—पाठः। (७) जै. सू. २. ४. ९., ८–३२. (८) महा–ना. उ. ७९. (९) ई. उ. २, ११.

कर्माणि देहयोगार्थं देहयोगे प्रियाप्रिये ।
ध्रुवे स्यातां ततो रागो द्वेषश्चैव ततः क्रियाः ॥ ३ ॥

जनं, परम्परया परमपुरुषार्थोपयोगित्वात् । ननु 'कर्मणा पितृलोकः' इत्याश्रुतः पितृलोकादिः प्रयोजनम्, तस्य क्षयादिदोषदुष्टतया हेयत्वात् । आनुषङ्गिकं हि तत्कर्मफलं भवति । भवदपि नेदं चित्तशुद्धिप्रतिबन्धकम् । तदुक्तं सुरेश्वराचार्यैः—

'नित्येषु शुद्धिप्राधान्याद्भोगोऽप्यप्रतिबन्धकः ।
भोगं भङ्गुरमीक्ष्य(क्ष)न्ते बुद्धिशुद्धिस्तु रोचते' ॥—इति ।

काम्याभिचारादिकर्मविधानं तु पुरुषवशीकरणेन स्वाभाविकप्रवृत्तिनिवारणार्थमित्येषा दिक् । तथाच चित्तशुद्धेः प्रथमापेक्षितत्वात्तदर्थं कर्मविधानं प्रथमं प्रवर्तते, पश्चाच्च ज्ञानोपदेश इति कर्मज्ञानकाण्डयोरर्थद्वारा हेतुहेतुमद्भावेन पौर्वापर्यसंबन्ध उक्तः । ज्ञानकाण्डस्य साक्षात्फलार्थविषयत्वात्कर्मभिरनपेक्षितार्थत्वाच्चागतार्थत्वमनन्यशेषत्वं च तस्य सिद्धमिति ॥ २ ॥

ननु कर्माणि कृतानि कर्तुः फलप्रदानि लोके दृष्टानि । यथा पित्रादिभिरुपदिष्टविषयाणीष्टफलानि, तैर्निषिद्धविषयाण्यनिष्टफलानि, तदुदास्तविषयाणि दैवाधीनतयोभयार्थानि, तथा वेदविहितानि कर्माणीष्टफलानि, निषिद्धान्यनिष्टफलानि, विहितप्रतिषिद्धव्यामिश्रकर्माणीष्टानिष्टव्यामिश्रफलानि भवन्ति । तथाच शास्त्रं—

'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।' इति ।

एवं च कर्मणां फलाव्यभिचारात्, मोक्षस्य च फलविशेषत्वात्, कर्म-

---

(१) बृ. उ. १. ५. १६. (२) एतत्कारिकाया. शुद्ध. पाठो मुद्रितपुस्तके एव वर्तते—नित्येषु शुद्धेः प्राधान्याद्भोगोऽप्यप्रतिबन्धकः । भोग भङ्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः ॥ सं. वार्तिके. ११३१. (३) भ. गी. १८. १२.

धर्माधर्मौ ततोऽज्ञस्य देहयोगस्तथा पुनः ।
एवं नित्यप्रवृत्तोऽयं संसारश्चक्रवद्भृशम् ॥ ४ ॥

विशेषसाध्यत्वोपपत्तेः, न विधया कृत्यमस्तीति न तदर्थानि ज्ञानकाण्डानि मुमुक्षुणा विचारणीयानि, किंतु कर्माण्येव कानिचिच्चातुर्मास्यादीन्यक्षय्यफलार्थान्यनुष्ठेयानीति कर्मजडानां प्रत्यवस्थानमित्याशङ्क्याह—कर्माणीति द्वाभ्याम्।

कर्मफलं हि जात्यायुर्भोगलक्षणं, तच्च देहसंबन्धं विना नोपपद्यत इति कर्माणि देहयोगार्थमेवेत्यर्थः । देहयोगे च संसारो दुर्वार इत्याह—देहयोग इति । देहसंबन्धे सति, प्रियाप्रिये सुखदुःखे ध्रुवे स्यातां भवेतामेव । 'न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति'[१] इति श्रुतेः । ततः सुखदुःखयोस्तत्साधनयोश्च यथासंख्यं रागद्वेषौ वासनारूपौ स्याताम् । ततो रागद्वेषाख्यान्निमित्तात्क्रिया वाङ्मनःकायचेष्टाः स्युरित्यर्थः ॥ ३ ॥

अज्ञस्य प्रत्यगात्मतत्त्वं ब्रह्माजानतोऽहंकारपरवशस्य[२] ततः क्रियाभ्यो विहितप्रतिषिद्धरूपाभ्यो धर्माधर्मौ पुनर्भवेताम्, पुनस्ततो देहयोगः, ततः प्रियाप्रिये, इत्येवं संसारो जन्ममरणकर्मकरणतत्फलभोगलक्षणः कुलालचक्रवद्भृशमत्यर्थमविश्रमं यथा स्यात्तथा नित्यप्रवृत्तोऽनादिकालमारभ्य प्रवर्तते अयं प्रत्यक्ष इत्यर्थः । तस्मादैहिकार्थानां कर्मणामनित्यफलत्वस्य लोके दृष्टत्वात्, आमुष्मिकफलार्थानामपि कर्मत्वादनित्यफलतानुमानात्, 'तद्यथेह कर्मजितो लोकः क्षीयते, एवमेवामुत्र पुण्यजितो लोकः क्षीयते'[३] इति वस्तुबलावलम्बिश्रुतेश्च, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्'[४] इत्याद्यर्थवादश्रुत्यवलम्बनेन, कर्मफलस्य नित्यत्वाशा न कार्येति भावः ॥४॥

(१) छां. उ. ८. १२. १. (२) परवशस्य—नि. सा. पाठः ।
(३) 'कर्मचितः—'पुण्यचितः' इत्यपि पाठः । (४) शत. ब्रा. २. ६. ३. १.

अज्ञानं तस्य मूलं स्यादिति तद्धानमिष्यते ।
ब्रह्मविद्याऽत आरब्धा ततो निःश्रेयसं भवेत् ॥ ५ ॥

नन्वेवमपि न मोक्षार्थिनो ज्ञानेन प्रयोजनमस्ति, कृतकर्मणा संसारनिमित्तानां फलभोगानन्तरं नाशे सति, 'निमित्ताभावान्नैमित्तिकाभावः' इति न्यायात्, अयत्नलभ्यत्वान्मोक्षस्य, इत्याशङ्क्याज्ञानमूलत्वात्कर्मणः, तस्मिन्सति, तदनुपरमान्नैवमित्याह—अज्ञानमिति ।

यद्वा—अज्ञस्य कर्मप्रवृत्त्यविरमात्संसाराविरमः, कृतकर्मफलभोगसमयेऽपि कर्मप्रवृत्त्यवश्यंभावात्पुनर्भोगसंतानाविच्छेदश्चेत्, कथं तर्हि कर्मनिवृत्त्या मोक्षसिद्धिरिति वीक्षायामाह—अज्ञानमिति । अयमर्थः—'नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति', 'एकः शत्रुर्न द्वितीयोऽस्ति शत्रुरज्ञानतुल्यः पुरुषस्य राजन् । येनावृतः कुरुते कार्यते च घोराणि कर्माणि सुदारुणानि ॥' इत्यादिश्रुतिस्मृतिभ्योऽज्ञानं तस्य पूर्वोक्तस्य कर्मतत्फललक्षणस्य संसारस्य मूलं स्यादिति हेतोस्तस्याज्ञानस्य हानमात्यन्तिकोपरम इष्यते यत्नेन संपादनीयतयाऽभिप्रेयते, मूलोन्मूलनमन्तरेण प्ररोहाविच्छेदादित्यर्थः । 'तरति शोकमात्मवित् ।',

'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥'
'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥'

इत्यादिश्रुतिस्मृतिभ्यो यतो विद्यैवाज्ञानहानहेतुरवगता, अतो ब्रह्मविद्याऽऽरब्धा । ततो ब्रह्मविद्यया निःश्रेयसं कैवल्यं भवेत् । तदुदये नान्त-

(१) विवक्षायां—पाठः । (२) तै. सं. ४. ६. २. (३) छा. प. ३. २. २८ (४) छा. उ. ७. १. ३. (५) श्वे. उ. ६. २०. (६) भ. गी. ५. १६. (७) 'तोऽवि'—नि. सा. पाठः ।

विद्ययाज्ञानहानाय न कर्माप्रतिकूलतः ।
नाज्ञानस्याप्रहाणे हि रागद्वेषक्षयो भवेत् ॥ ६ ॥

रीयकतयाऽज्ञाननिवृत्तौ, केवलात्मस्वरूपावस्थानरूपो मोक्षो लब्ध इव भवेदित्यर्थः ॥ ५ ॥

ननु कर्मणां विचित्रशक्तित्वात् 'हिरण्यदा अमृतत्वं भजन्ते'[1] इत्यादिश्रुतेः, 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः'[2] इत्यादिस्मृतेश्च कर्मभिरेव मोक्षसिद्धेः, कृतं ब्रह्मविद्ययेति शङ्कामपाकुर्वन्ननन्तरोक्तमर्थमुपपादयति—विद्ययेति द्वाभ्याम्।

संसारमूलाज्ञानहानाय विद्यैव समर्थेत्यध्याहारः। एवकारार्थमाह—न कर्मेति। तत्र हेतुरप्रतिकूलत इति। अविरोधादित्यर्थः। विद्यैव प्रकाशरूपत्वादप्रकाशरूपामविद्यां तत्कार्यं च निवर्तयति, यथा रज्ज्वावरणाविद्यातमसी तत्कल्पितसर्पाद्याकारं च रज्जुतत्त्वज्ञानप्रदीपो निवर्तयतः, स्वभावविरोधात्। कर्म तु नाज्ञानतमोनिवर्तकं, तदविरोधित्वात्, अप्रकाशात्मकत्वाद्वा, नीहारस्तोमवत्—इत्याद्यनुमानैः, 'नान्यः पन्था विद्यतेऽयनाय'[3] इत्यादिश्रुतिभिश्च, विरोधात्—'हिरण्यदाः' इत्यादावापेक्षिकममृतत्वं पर्यवस्यति। 'कर्मणैव हि' इति स्मृतिः 'न कर्मणा न प्रजया'[4] इतिश्रुतिविरोधेऽन्यपरा इत्यतो न तद्बलात्कर्मभिरज्ञानहानशङ्केत्यभिप्रायः। विद्या विनाऽज्ञानक्षयाभावश्चेत्, अज्ञानक्षयार्थमेव विद्याऽन्विष्यता, तत्कार्यस्य तु परमार्थत्वाद्विद्यया नाशानुपपत्तेः, तन्नाशे हेत्वन्तरमन्वेषणीयमित्यत आह—नाज्ञानस्येति। अज्ञानस्याप्रहाणे रागादिक्षयो न स्यात्। अविवेकपूर्वकत्वस्य राग-

---

(१) ऋ. सं. ८. ६. ३. २. (२) भ. गी. ३. २०. (३) कथ त—पाठः। (४) ेद्या तमसि—नि. सा. पाठः (५) तै. आ. ३. १३. (६) महा. ना. उ. १०. ५.; कै. उ. २.

रागद्वेषक्षयाभावे कर्म दोषोद्भवं ध्रुवम् ।
तस्मान्निःश्रेयसार्थाय विद्यैवात्र विधीयते ॥ ७ ॥
ननु कर्म तथा नित्यं कर्तव्यं जीवने सति ।
विद्यायाः सहकारित्वं मोक्षं प्रति हि तद्‍व्रजेत् ॥ ८ ॥

दावन्वयव्यतिरेकसिद्धत्वात्, अज्ञानमया रागादयः, न परमार्था इत्यज्ञान-निवृत्त्यैव निवर्तन्त इति न तत्र हेत्वन्तरान्वेषणेत्यर्थः ॥ ६ ॥

रागाद्यनिवृत्तौ का हानिरिति तत्राह—रागद्वेषेति ॥

दोषा रागद्वेषमोहाः, तदुद्भवं तद्धेतुकं कर्म ध्रुवं पुनः स्यादेव, इति पुनः संसारो दुर्वार इत्यर्थः । उपपादितमर्थमुपसंहरति—तस्मादिति। अत्रेति वेदान्तोक्तिः । विधीयते प्रकाश्यत इत्यर्थः ॥ ७ ॥

तदेवमज्ञानमूलत्वात्संसारस्य ज्ञानमेव तन्निवर्तकं मोक्षहेतुः, न कर्मे-त्युक्तम् । तत्र यदि कर्मणां स्वातन्त्र्येण मोक्षहेतुता न संभवेत्, तर्हि ज्ञानेन समुच्चये सति, तद्धेतुता स्यादिति समुच्चयवादिमतमुत्थापयति—ननु कर्मेति ॥

---

(१) तुलय—दुःखस्य च देहोपादानैकहेतुत्वात्, देहस्य च पूर्वोपचितधर्माधर्ममूल-त्वादनुच्छित्तिः । तयोश्च विहितप्रतिषिद्धकर्ममूलत्वादनिवृत्तिः । कर्मणश्च रागद्वेषा-स्पदत्वात्, रागद्वेषयोश्च शोभनाशोभनाध्यासनिबन्धनत्वात्, अध्यासस्य चाविचारित-सिद्धद्वैतवस्तुनिमित्तत्वात्, द्वैतस्य च शुक्तिकारजतादिवत् सर्वस्यापि स्वतःसिद्धा-द्वितीयात्मानवबोधमात्रोपादानत्वात्, अव्यावृत्तिः । अतः सर्वानर्थहेतुरात्मानवबोध एव । सुखस्य चानागमापायिनोऽपरतन्त्रस्यात्मस्वभावत्वात्, तस्यानवबोधः पिधानम् । अतस्तस्यात्यन्तोच्छित्तावशेषपुरुषार्थपरिसमाप्तिः । अज्ञाननिवृत्तेश्च सम्यग्ज्ञानस्वरूप-लाभमात्रहेतुत्वात्तदुपादानम् । अशेषानर्थहेत्वात्मानवबोधविपर्ययस्य चानागमिकप्रत्यक्षा-दिलौकिकप्रमाणाविषयत्वाद्वेदान्तागमवाक्यादेव सम्यग्ज्ञानम् ।

—नै. सि. उपक्रमे ।

यथा विद्या तथा कर्म चोदितत्वाविशेषतः ।
प्रत्यवायस्मृतेश्चैव कार्यं कर्म मुमुक्षुभिः ॥ ९ ॥

'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥'

इति स्मृत्युक्तन्यायेनावशेनापि जीवता पुरुषेण कर्म कर्तव्यमेवं विद्या यथा, तथा नित्यं कर्मावश्यं कर्तव्यं 'यावज्जीवम्' इत्यादिश्रुतिविहितत्वादित्यर्थः । उपयोगाभावान्मुमुक्षुणा नित्यं कर्म न कर्तव्यमित्यत आह— विद्याया इति । विद्याया मोक्षं प्रति कारणभूतायाः सहकारित्वमितिकर्तव्यभावं हि यस्मात्तत्कर्म भजेत्प्राप्नुयात्, अतस्तत्कार्यं मुमुक्षुणेत्यर्थः । 'विद्ययामृतमश्नुते' इति तृतीयया ज्ञानस्य मोक्षकरणत्वावगमात्, करणस्य चेतिकर्तव्यतासापेक्षत्वात्, अन्यस्य चेतिकर्तव्यस्यात्राभावात्, कर्मभिरेव प्रयाजादिभिर्दर्शादीव फलोपकार्यङ्गैर्ज्ञानं समुच्चीयत इति भावः ॥ ८ ॥

'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः' ॥

इत्यादिस्मृतेर्मुमुक्षुभिः कर्म न कर्तव्यमिति चेत्तत्राह—यथा विद्येति । यथा विद्या मुमुक्षुभिः कार्या, तथा कर्मापि कर्तव्यम् । कुतः ? 'विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह' इति समुच्चयविधिना अविशेषेण चोदितत्वादित्यर्थः । किंच—

'अकुर्वन्विहितं कर्म निन्दितं च समाचरन् ।
प्रसजꣳश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥'

इत्यननुष्ठाने प्रत्यवायस्मृतेश्च, कर्म कार्यमित्यर्थः । तथाचोदाहृतश्रु-

(१) भ. गी ३. ५. (२) वा। तथा च विद्या—पाठ (३) ई उ ११.
(४) शान्तिप. २४१. ७ (५) मनु. स्मृ. ११. ४४.

ननु ध्रुवफला विद्या नान्यत् किंचिदपेक्षते ।
नाग्निष्टोमो यथैवान्यद्ध्रुवकार्योऽप्यपेक्षते ॥ १० ॥
तथा ध्रुवफला विद्या कर्म नित्यमपेक्षते ।
इत्येवं केचिदिच्छन्ति न कर्म प्रतिकूलतः ॥ ११ ॥
विद्यायाः प्रतिकूलं हि कर्म स्यात्साभिमानतः ।
निर्विकारात्मबुद्धिश्च विद्येतीह प्रकीर्तिता ॥ १२ ॥
अहं कर्ता ममेदं स्यादिति कर्म प्रवर्तते ।
वस्त्वधीना भवेद्विद्या कर्त्रधीनो भवेद्विधिः ॥ १३ ॥

तिस्मृतिविरोधे 'तस्मात्कर्म न कुर्वन्ति यतयः'[1] इतीयमपि स्मृतिर्ज्ञानप्रशंसार्था वा भविष्यतीति भावः ॥ ९ ॥

अत्र सिद्धान्ती विद्यायाः सहकार्यपेक्षितत्वमुक्तमाक्षिपति—नन्विति ।
ब्रह्मविद्या सहकारिनिरपेक्षा, ध्रुवफलत्वात्, घटादिज्ञानवदित्यर्थः ।
पूर्ववादी व्यभिचारेण परिहरति—नेति । अवश्यंभाविफलोऽप्यग्निष्टोमो यथोद्गीथशस्त्रादितद्गतदेवताज्ञानसहकारि कर्मापेक्षते, तथा विद्याऽपीत्यर्थः ।
पूर्वपक्षमुपसंहरति—इत्येव केचिदिच्छन्तीति ।
सिद्धान्तं वक्तुमुपक्रमते—नेत्यादिना । विद्या स्वकार्ये न कर्मापेक्षते, तत्प्रतिकूलत्वात्, तद्विरोधित्वादिति यावत् । नहि स्वप्रतिकूलः स्वसहायो भवति । मा भूत्तिमिरं तेजसः सहायभूतमित्यर्थः ॥ १० ॥ ११ ॥
कर्मणो विद्याप्रतिकूलत्वमुक्तं साधयति—विद्याया इत्यर्धेन ।
हिशब्दः प्रसिद्धद्योतकः । साभिमानत इति । ब्राह्मण्याद्यभिमानसहितपुरुषनिर्वर्त्यत्वात्कर्मणः, विद्यायाश्च कूटस्थात्माकारतया जात्याद्यभिमानहीननिष्ठत्वात्, प्रसिद्धो विद्याकर्मणोर्विरोध इत्यर्थः । हिशब्दद्यो-

(१) शांतिप. २४३. ७. (२) 'द्वियो'—पाठः । (३) कर्मणा—पाठः ।

कारकाण्युपमृद्नाति विद्या बुद्धिमिवोषरे ।
इति तत्सत्यमादाय कर्म कर्तुं व्यवस्यति ॥ १४ ॥
विरुद्धत्वादतः शक्यं कर्म कर्तुं न विद्यया ।
सहैव विदुषा तस्मात्कर्म हेयं मुमुक्षुणा ॥ १५ ॥

तितां प्रसिद्धिमुपपादयति—निर्विकारेति । नाहं कर्ता भोक्ता, किंतु कूटस्थं ब्रह्मैवास्मीत्येवमात्मा कागन्तःकरणवृत्तिविषयेति इह वेदान्तेषु विद्वद्भिः प्रकर्षेणोक्तेत्यर्थः । कर्म तु—अहं ब्राह्मणः, अस्य कर्मणः कर्ता, ममेदं कर्मसाध्यं फलं भविष्यति—इत्यभिमानपूर्वकं प्रवर्तत इति प्रत्यक्षम् । अतः स्फुटो विरोध इत्यर्थः ।

ज्ञानकर्मणोरन्तर्मुखत्वबहिर्मुखत्वाभ्यां प्रवृत्तितो विरोधमुक्त्वा, उत्पत्तितोऽपि विरोधमाह—वस्त्वधीनेति ।

प्रमाणवस्त्वधीना विद्या यथाप्रमाणं यथावस्तु च जायते, न तत्र पुरुषस्वातन्त्र्यं संभवतीत्यर्थः । विधिर्विधेयं कर्म कर्त्रधीनं, पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यम् । अतः पुरुषस्वातन्त्र्यास्वातन्त्र्यरूपविरुद्धहेतुजन्यत्वात्, न कर्मज्ञानयोः समुच्चय इत्यर्थः ॥ १२ ॥ १३ ॥

किंच विद्यायां सत्यां कर्मणो निराश्रयतया स्वरूपालाभान्न ज्ञानसहकारितेति विधान्तरेण विरोधमाह—कारकाणीति ।

ऊषरदेशे जातामुदकबुद्धिं यथोषरस्वभावावलम्बिनी विद्योपमृद्नाति, तथात्मन्यविद्याध्यस्तकारकबुद्धिमात्मस्वभावावलम्बिनी विद्योपमृद्नात्येवेत्यर्थः । इति तत्सत्यमित्यर्धश्लोकः पूर्वेणान्वेति । उपमृद्नातीति यतः, अतस्तत्कारकजातं सत्यमादाय कर्म कर्तुं ज्ञानी कथं व्यवस्यतीति कथंशब्दाध्याहारेणायं योजनीयः ॥ १४ ॥

विरुद्धत्वकृतसमुच्चयासंभवे फलितमाह—विरुद्धत्वादिति ।

---

( १ ) तत्सत्यमतिमां—पाठः । ( २ ) सहैव—पाठः । ( ३ ) विध्यन्तरेण—पाठः ।

देहाद्यैरविशेषेण देहिनो ग्रहणं निजम् ।
प्राणिनां तदविद्योत्थं तावत्कर्मविधिर्भवेत् ॥ १६ ॥

अतो विरुद्धत्वादिति सामानाधिकरण्यम्। विद्यया सह कर्म कर्तुं विदुषा न शक्यमेवेत्यन्वयः । समुच्चयनिराकरणफलमाह—तस्मादिति ॥ १५ ॥

ननु 'शास्त्रा कर्म समाचरेत्' इत्यादिवचनात्, स्वर्गकामादिविध्यन्यथानुपपत्तेश्च, देहाद्व्यतिरिक्तात्मज्ञानवतः कर्माधिकारात्, ज्ञानकर्मणोर्विरोधे च तदयोगात्, अधिकार्यभावेन कर्मकाण्डस्याप्रामाण्यं प्राप्तम्—इत्याशङ्क्य, कर्मस्वरूपभेदाङ्गविशेषप्रयुक्तिक्रमाधिकारादिविशेषज्ञानस्य देहाद्व्यतिरिक्तात्मज्ञानस्य च कर्मविशेषाधिकारिण्यपेक्षितत्वेऽपि, न परमात्मतत्त्वज्ञानं तत्रापेक्ष्यते 'अनुपयोगात्, अधिकारिविरोधाच्च' इत्यभिप्रेत्य समाधत्ते—देहाद्यैरिति ।

यद्वा यद्यौपनिषदं ज्ञानं कर्मकारकभेदोपमर्दकं स्यात्, तदा ज्ञानकाण्डेन कर्मकाण्डस्य निर्विषयीकरणात्, बाधितविषयं कर्मकाण्डमप्रमाणं स्यात् । तच्चानिष्टं, स्वाध्यायाध्ययनविधिविरोधात्—इत्याशङ्क्य, किमात्मतत्त्वज्ञानात्प्राक्, ऊर्ध्वं वा तदप्रामाण्यापत्तिरिति विकल्प्य, आद्यं निराकरोति—देहाद्यैरिति। देहिन आत्मनो देहाद्यैर्देहेन्द्रियमनोबुद्धिप्राण-

(१) ? (२) प्रमाणादय प्रसङ्गान्ता द्वादश पदार्थाः क्रमाद्द्वादशानामध्यायानां विषयाः ।—

धर्मो द्वादशलक्षण्या व्युत्पाद्यात्र लक्षणैः ।
प्रमाणभेदशेषत्वप्रयुक्तिक्रमसञ्ज्ञकाः ॥
अधिकारोऽतिदेशश्च सामान्येन विशेषतः ।
ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदितः क्रमात् ॥
—जै. न्या. मा. वि. १. १. १.

(३) ब्र. सू. भाष्ये. १. १. १. (४) तै. आ. २. १५. ७; श. ब्रा. ११. ५. ६. ७.

नेति नेतीति देहादीनपोह्यात्माऽवशेषितः ।
अविशेषात्मबोधार्थं तेनाऽविद्या निवर्तिता ॥ १७ ॥

तद्धर्मैरविशेषणाविवेकेन ग्रहणं तद्विशिष्टतयैवात्माभिमानरूपं निजं स्वाभाविकं—न योषिदाद्यवगन्त्रादिभावबुद्धिवद्वुद्ध्यधीनं—यदेवंविधं प्राणिनामात्मज्ञानं, तद्विशेषोत्थमनाद्यज्ञानजभ्रान्तिसंस्कारोत्थं, सर्वसाधारणत्वात्। यावदेवं ब्राह्मणोऽहं, गृहस्थोऽहं सकलेन्द्रियवानहं, सकामो बलवान्, इत्यादिविज्ञानमनुवर्तते, तावत्कर्मविधिः कर्मकाण्डं प्रमाणं भवेदित्यर्थः । प्रमितिजनकं हि प्रमाणं भवति । 'अधिकारिणश्च प्रमितिजनको वेदः, नानधिकारिणः' इति स्थिते, कर्मप्रवृत्तिपर्यन्तं प्रमितिजनकस्य विधिकाण्डस्योक्ताधिकारिलाभान्न—प्रत्यगात्मतत्त्वविज्ञोदयात्प्राक्—अप्रामाण्यप्राप्तिरिति नाध्ययनविधिविरोध इति भावः ॥ १६ ॥

द्वितीयं विकल्पमिष्टापत्त्या प्रत्याचष्टे—नेतीति ।

'नेति नेति' इति वीप्सार्थया श्रुत्या देहादीन् मिथ्याद्रष्टात्मात्मीयभावेन गृहीतानशेषानपोह्य प्रतिषिध्य प्रतिषेधावधिभूत आत्माऽवशेषितः 'सत्यस्य सत्यम्' इत्यादौ । किमर्थमित्यत आह—अविशेषात्मबोधार्थमिति । अविशेषश्चासावात्मा चेति तथा । तस्य बोधो निर्विशेषचित्सदानन्दस्वभावाविर्भावः, तदर्थमित्यर्थः । परागर्थेष्वपोहितेषु तदवधित्वेन प्रत्यगर्थ एवावशिष्यते, इति प्रत्यक्तत्त्वबोधार्थमित्युक्तं भवति । बोधे सति किं स्यात्तदाह—तेनेति । यन्निबन्धनो देहादावात्माभिमानः कर्माधिकारहेतुः, साऽविद्या; तेन बोधेन निवर्तिता बाधितेत्यर्थः । अतो 'निमित्ताभावान्नैमित्तिकाभावः' इति न्यायेनात्मतत्त्वज्ञानवतो न कर्मविधिप्रतिपत्तिरिति तं प्रति फलवद्विज्ञानजनकत्वाभावात्कर्मकाण्डस्य तदा-

(१) निर्विशेषात्मभानार्थं—पाठः (२) बृ. उ. ६. २. १३. (३) बृ. उ. २. ३. ६. (४) बृ. उ. ३. ९. २६. इत्यादौ ।

निवृत्ता सा कथं भूयः प्रसूयेत प्रमाणतः ।
असत्येवाविशेषेऽपि प्रत्यगात्मनि केवले ॥ १८ ॥

नामप्रामाण्यमिष्टमेव, निवृत्तत्वात्प्रबोधं प्रत्यभिचारनिषेधाशाङ्कवदिति सर्वमनवद्यम् ॥ १७ ॥

ननु निर्विशेषात्मबोधेन सकृन्निवर्तिताप्यविद्या पुनरुद्भविष्यति, ततः कर्माधिकारहेतुसंभवात् कर्मविधिः स्यात्—शुक्तितत्त्वावगमात्तदज्ञाननिवृत्तावपि पुनस्तत्र समयान्तरे रजतभ्रमोदयोपलम्भात्—इत्याशङ्क्याह—निवृत्तेति ।

प्रमाणतो निवृत्ता प्रमाणाग्निना दग्धा साऽविद्या भूयः पुनः कथं प्रसूयेत जायेत ? नहि मृता दग्धा च भार्या पुनः प्रसवायोग्यवति, तद्वदित्यर्थः । अविद्यान्तरं जायेतेति चेत्, तत्र वक्तव्यं—किं निर्निमित्तं जायेत, निमित्ताद्वा ? नाद्यः, अकारणकार्योत्पत्त्यावतिप्रसङ्गात् । द्वितीये, किमात्मा निमित्तम्, अनात्मा वा ? नाद्य इत्याह—असत्येवेति । अविशेषे केवले इत्यनयोर्व्याख्यानव्याख्येयभावः । यद्वा—अविशेष इत्युक्ते मूर्त्यादिकतिपयविशेषाभावेऽपि विशेषान्तरशङ्का स्यात्, अत उक्तं—केवल इति । तावत्युक्ते, एकाकिनोऽप्यात्मनः प्रयत्नादिगुणयोगित्वविशेषशङ्का स्यात्, तन्निवृत्तयेऽविशेष इत्युक्तम् । तथा चाविशेषे केवले प्रत्यगात्मनि सर्वान्तरे परमार्थवस्तुनि साऽविद्याऽसती एव न सत्ता लभते, असहायस्यात्मनः कूटस्थस्य स्रष्टृत्वानुपपत्तेः । अविद्यान्तरसहायाभ्युपगमे चान्योन्याश्रयः, अनवस्था वा प्रसज्येतेत्यर्थः । अपिशब्देन पक्षान्तरं निरस्यते । अनात्मन्यप्यसत्येव साऽविद्या, कार्यस्यानात्मनोऽविद्याहेतुत्वानुपपत्तेरित्यर्थः । शुक्तिकादौ तु रजतादिविक्षेपोपादानांशस्यैवाऽविद्याशक्तिभेदस्य ज्ञानेन निवृत्त्यभ्युपगमात्, मूलाज्ञानस्य तादृगनन्तशक्तिमतो विद्यमानत्वात्, तद्वशात् पुनर्भ्रान्त्युदयोपपत्तेर्दृष्टान्तो विषम इति द्रष्टव्यम् ॥ १८ ॥

न चेद्भूयः प्रसूयेत कर्ता भोक्तेति धीः कथम् ।
सदस्मीति च विज्ञाने तस्माद्विद्याऽसहायिका ॥ १९ ॥
अत्यरेचयदित्युक्तो न्यासः श्रुत्याऽत एव हि ।
कर्मभ्यो मानसान्तेभ्य एतावदिति वाजिनाम् ॥ २० ॥

अविद्यायाः पुनरनुत्पत्तिसाधनफलमाह—न चेदिति पादत्रयेण ।

सदेव ब्रह्मैवाहमस्मीति विज्ञाने विशिष्टज्ञानेऽपरोक्षानुभवं सति, भूयः पश्चान्न चेदविद्या प्रसूयेतेति, कर्ता भोक्तेति धीः कर्माधिकारनिमित्तभूता कथं स्यात्? न स्यादेवेत्यर्थः । चकारः कर्तृत्वादेः पारमार्थिकत्वशङ्कानिवृत्त्यर्थः । कर्तृत्वादेः पारमार्थिकत्वे क्रियानित्यत्वायोगादनिर्मोक्षप्रसङ्ग इति भावः । ज्ञानकर्मसमुच्चयनिराकरणमुपसंहरति—तस्मादिति । यस्माद्विद्यायामुत्पन्नायां कर्मासंभवः सिद्धः, तस्मादसहाया केवलैव विद्या कैवल्यहेतुरित्यर्थः ॥ १९ ॥

विद्यायाः सहकारिनिरपेक्षत्वेनैव मोक्षहेतुत्वेनैव मोक्षहेतुत्वमिति युक्त्योक्तेऽर्थे श्रौतं लिङ्गमुपोद्बलयति—अत्यरेचयदिति ।

तैत्तिरीयोपनिषत्सु 'सत्यं परं परं सत्यम्' इत्युपक्रम्य 'सत्यतप-' आदिमानसान्तानि कर्माणि श्रेयःसाधनत्वेन निर्दिश्य, 'तानि वा एतान्यवराणि तपांसि' इति तेषां फल्गुफलत्वेन निन्दामभिधाय, 'न्यास इति ब्रह्मा' इत्युक्त्वा, 'न्यास एवात्यरेचयत्' इति तत्त्वज्ञानान्तरङ्गभूत संन्यासः स्तूयते । तस्मान्निन्दितस्यानुपादेयत्वात्, स्तुतस्य चोपादेयत्वात्, कर्मसापेक्षत्वे मोक्षस्य संन्यासविधानानुपपत्तेः, ससंन्यासमात्मज्ञानमेव मोक्षसाधनं गम्यत इत्यर्थः । अत एव हीति । ज्ञानस्य स्वफले कर्मनिरपेक्षत्वादेवेत्यर्थः । लिङ्गान्तरमाह—एतावदिति । वाजिनाममृतत्वं श्रुतमिति । वाजसनेयिनामुपनिषत्सु 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं

(१) महाना. उ. ३१. २.

अमृतत्वं श्रुतं यस्मात्त्याज्यं कर्म मुमुक्षुभिः ।
अग्निष्टोमवदित्युक्तं तत्रेदमभिधीयते ॥ २१ ॥

निदितम्' इत्युपक्रम्य, अद्वयमात्मतत्त्वं दुन्दुभ्यादिदृष्टान्तप्रबन्धेनोपपाद्य, 'उक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वम्' इति ज्ञानस्यैवामृतत्वसाधनत्वावधारणं श्रुतं तस्य कर्मानपेक्षाया लिङ्गं, अन्यथा 'एतावत्' इत्यवधारणार्थवचनानुपपत्तेरित्यर्थः । 'अमृतत्वस्य तु नाशाऽस्ति वित्तेन' इति च तत्रोक्तो वित्तसाध्यस्य कर्मणोऽमृतत्वसाधनत्वाभावे लिङ्गमनुसंधेयम् । नच 'विद्यां चाविद्यां च' इति समुच्चयविधानविरोधः, तस्य देवतोपासनज्ञानकर्मसमुच्चयविषयत्वात । अन्यथा 'हिरण्मयेन पात्रेण', 'अग्ने नय सुपथा' इति च मार्गयाचनाद्यनुपपत्तेरिति सर्वमनवद्यम् । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः',

'त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम् ॥

इत्यादिशास्त्रात्सर्वत्यागोपलक्षितमात्मज्ञानमेव मुक्तिसाधनं, तस्मादिति प्रकृतार्थमुपसंहरति । तस्मात्त्याज्यं कर्म मुमुक्षुभिः साधनचतुष्टयसंपन्नैरात्मतत्त्वजिज्ञासुभिरित्यर्थः । विविदिषोरपि नास्ति कर्मावसरः, कुतो विदुष इत्यभिप्रायः ॥ २० ॥

अत्रार्धश्लोकोऽधिकः प्रागुक्ताधिकार्थेन संख्येयः ।

तदेवं मुमुक्षुणा सर्वकर्मसंन्यासपूर्वकज्ञाननिष्ठेन भवितव्यमिति न्यायेनोपपादेदानीं परोक्तंदृष्टान्तमनूद्य दूषयति—अग्निष्टोमवदिति । अर्धश्लोकेन २१

(१) तस्मा'—पाठः (२) बृ. उ. ४. ५. ६. (३) बृ. उ. ४. ५. १५. (४) बृ. उ. २. ४. २; ४. ५. ३. (५) ई. उ. ११. (६) ई. उ. १५. (७) तै. प्रा. २. ८. २. (८) महाना. उ. १०. ५; कै. उ. २. (९) इति मौलुचीय-श्रुतिः—इति सं. वार्तिके. २१५.—२२०; तथा यतिधर्मसंग्रहे. (१०) १. १०.

नैककारकसाध्यत्वात्फलान्यत्वाच्च कर्मणः ।
विद्या तद्विपरीतातो दृष्टान्तो विषमो भवेत् ॥ २२ ॥
कृष्यादिवत्फलार्थत्वादन्यकर्मोपबृंहणम् ।
अग्निष्टोमस्त्वपेक्षेत विद्यान्यत् किमपेक्षते ॥ २३ ॥
प्रत्यवायस्तु तस्यैव यस्याहंकार इष्यते ।
अहंकारफलार्थित्वे विद्येते नात्मवेदिनः ॥ २४ ॥

दूषणमुच्यत इति प्रतिज्ञाय श्लोकेन दूषणमाह—नैकेति ।

कर्मणोऽग्निष्टोमादेरनेककारकसाध्यत्वात्—नियतद्रव्यमन्त्रतन्त्रप्रयोगसाध्यत्वादिति यावत्, तथा फलान्यत्वात्फलभेदवत्त्वात्—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति'[1] इतिश्रुतेर्विद्याद्वारा वीर्यवत्तरफलविशेषसंभवाच, युक्ता सहकार्यपेक्षेत्यर्थः । नैवं विद्याया इत्याह—विद्येति । तद्विपरीता कर्मस्वभावविपरीतस्वभावेति यावत् । यथावस्त्वधीनप्रमाणनिबन्धनाया निरतिशयमोक्षैकफलाया विद्याया न सहकार्यपेक्षा युक्तेत्यर्थः । यत एवं स्वभावभेदः कर्मविद्ययोः, अतोऽग्निष्टोमदृष्टान्तो विषमो दार्ष्टान्तिकाननुरूपो भवेदित्यर्थः ॥ २२ ॥

वैषम्यमेवोपपादयति—कृष्यादिवदिति ।

अग्निष्टोमः—सातिशयः, साध्यफलार्थत्वात्—अन्यकर्मोपबृंहणमन्यैः कर्मभिः सहकारिभिर्विहितोद्गीथाद्यङ्गसंश्रितोपासनादिरूपैरुपचयमपेक्षेतेति योजना । तत्र दृष्टान्त—कृष्यादिवदिति । कृषिवाणिज्यादौ फलोपचयार्थं साधनविशेषोपचयः प्रसिद्ध इत्यर्थः । विद्या तु निरतिशयफलत्वादन्यत्सहकारिभूतं किं वस्त्वपेक्षते ? न किमपीत्यर्थः ॥ २३ ॥

यदुक्तं 'अकुर्वन्विहितं कर्म'[2] इति, 'प्रत्यवायस्मृतेश्च'[3] इति तत्राह—प्रत्यवायस्त्विति ।

(१) छां. उ. १. १. १०. (२) मनुस्मृ. ११. ४४. (३) १. ६.

तस्मादज्ञानहानाय संसारविनिवृत्तये ।
ब्रह्मविद्याविधानाय प्रारब्धोपनिषत्त्वियम् ॥ २५ ॥
सदेरुपनिपूर्वस्य क्विपि चोपनिषद्भवेत् ।
मन्दीकरणभावाच्च गर्भादेः शातनात्तथा ॥ २६ ॥
इति उपोद्घातप्रकरणम् ।

'अस्य कर्मणोऽहं कर्ता, एतत्फलं च मम भोक्तव्यं', इति यस्याहङ्कार इष्यते इष्टो भवति, स्वाभाविको वर्तत इति यावत्, तस्याविकृतस्य विहिताकरणे प्रत्यवायो भवेदित्यर्थः । आत्मविदि आत्मतत्त्वज्ञाननिष्ठस्य तु अहङ्कारफलार्थित्वं न विद्यते, विषयाभावात् । अतो निमित्ताभावान्न प्रत्यवायस्तस्येत्यर्थः ॥ २४ ॥

'विद्यैवाज्ञानहानाय न कर्माप्रतिकूलतः' इत्युपक्रम्य, इयता ग्रन्थेन कर्मणः स्वातन्त्र्येण वा, ज्ञानसहकारितया वा सर्वथा न साक्षान्मोक्षहेतुत्वमस्तीत्युपपाद्य, 'ब्रह्मविद्यामथक्षानीं वक्तुं वेदः प्रचक्रमे' इति परमप्रकृतमुपसंहरति—तस्मादिति ।

विद्याया कर्मनिरपेक्षत्वं तच्छब्दार्थः । अज्ञानहानायानाद्यज्ञाननिरासः सिद्धयेऽपक्षितब्रह्मविद्या विद्यातु सपादयितुमियं परोपनिषत् वेदान्तभागः प्रारभ्यते इति योजना । अज्ञानहानस्य विशेषणं संसारविनिवृत्तये इति । संसारस्य विनिवृत्तिः सम्यङ्निवृत्तिर्यस्मादिति विग्रहः । अङ्गीकृतमार्पम् । अत्रोपनिषच्छब्दो लक्षणया वेदान्तग्रन्थेषु प्रयुक्तः ॥ २५ ॥

तर्हि कोऽस्य मुख्योऽर्थः इति वीक्षायां ब्रह्मविद्यायां शब्दसामर्थ्यं दर्शयन्नुपनिषच्छब्दव्युत्पादनेनापि स्वतन्त्रैव विद्या मोक्षहेतुरिति सूचयति—सदेरिति ।

---

(१) का ६ (२) का २ (३) विवक्षाया—पाठ । (४) ब्रह्म वि याख्य—नि सा पाठ ।

## २ आत्मज्ञानोत्पत्तिप्रकरणम् ।

प्रतिषेद्धुमशक्यत्वान्नेति नेतीति शेषितम् ।
इदं नाहमिदं नाहमित्यद्धा प्रतिपद्यते ॥ १ ॥

'षद्लृ विशरणगत्यवसादनेषु' इति धातोरुपनीत्युपसर्गद्वयपूर्वकस्य क्विप्प्रत्ययान्तस्योपनिषदिति रूपम् । अस्त्यत्र धात्वर्थत्रयम् । तथाहि—ये मन्दब्रह्मविदस्तेषां गर्भजन्मजरादिकं (१) उपनिषादयति शिथिलीकरोतीत्युपनिषदित्येकोऽर्थः । जिज्ञासोश्च (२) उप समीपे नि निश्चयेन ब्रह्म गमयतीति द्वितीयः । तत्त्वविदां तु गर्भादि (३) नाशयत्येनेति तृतीयः । एवं सम्यग्धात्वर्थयोगाद्विद्यैवोपनिषच्छब्दवाच्या । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते । 'लाङ्गलं जीवनम्' इतिवदित्यर्थः ॥ २६ ॥

इति प्रथममुपोद्घातप्रकरणम् ।

---

तदेवं मुमुक्षोर्मोक्षसाधनब्रह्मात्मविद्याप्रतिपत्तये वेदान्तारम्भ उपपद्यत इति स्थिते, पुनराशङ्क्यते । ननु विद्योपदेशाय वेदान्तारम्भस्तदोपपद्येत, यदि विद्योदयः सम्भाव्येत । स ह्यात्मनि संसारित्वग्राहकप्रत्यक्षादिविरोधाद्वाक्यशतेनापि नोत्पादयितुं शक्यते । असञ्जातविरोधितया प्रत्यक्षादेर्बलवत्त्वात्, तदुपजीविनश्चागमस्य दुर्बलत्वात्, कथञ्चिदुत्पन्नापि विद्या यदि प्रमाणसिद्धं संसारं बाधेत, तर्हि प्रत्यगात्मनोऽपि ब्रह्मरूपत्वं कथं प्रत्यक्षानुभवो न बाधेत? इति अत उत्तरं वदति—प्रतिषेद्धुमित्यादि ।

'नेति नेति' इति वीप्सया सकलदृश्यप्रतिषेधे शेषितमुर्वरितं यदात्मतत्त्वं, तत् प्रतिषेधावधित्वेन प्रतिषेद्धुः स्वरूपत्वेन प्रतिषेधसाक्षितयाऽवस्थितं यतः, अतः प्रतिषेद्धुमशक्यत्वात्, अद्धा साक्षात्प्रतिपद्यते निःसंदिग्धमुप-

---

(१) प्रतिषेधप्रकरणम्—पाठः । (२) चैतन्यप्रकरणमिति टीकान्तरे पाठः । (३) विद्योदयाय—पाठः । (४) तत्र प्रति—पाठः ।

अहंधीरिदमात्मोत्था वाचारम्भणगोचरा ।
निषिद्धात्मोद्भवत्वात्सा न पुनर्मानतां व्रजेत् ॥ २ ॥

लभ्यत इति योजना । उपलम्भप्रकारमभिनयति—इदमिति । इदं देहस्वरूपं नाहमात्मा, इदमिन्द्रियजातं मनोबुद्धिप्राणतदुपादानाचेतनपर्यन्तं नाहं, किन्त्वेषां प्रकाशकमव्यभिचारि स्वयंप्रकाशं कूटस्थमक्षरम् । यस्मिन् सर्वजगदाश्रयोऽव्याकृताकाश ओतश्च प्रोतश्च तदेवाहं परमक्षरमिति प्रतिपद्यत इत्यर्थः । अनेन विद्या नोदेतीत्येषा शङ्का निराकृता । प्रतिपद्भुमशक्यत्वादित्यनेन तु यथाव्याख्यातेन यथायोग्यत्वं दर्शितमिति विवेक्तव्यम् ॥ १ ॥

नन्वहं ब्रह्मेति ज्ञानसुखविषयोत्पन्नमपि न प्रतिष्ठां लभते, देहेन्द्रियाद्यभिमानस्यानवरतमनुवृत्तेरित्याशङ्क्य, तस्य प्रमाणमूलत्वाभावाद्बाधितानुवृत्तिमात्रेणाभासत्वात्, न विद्याप्रतिपक्षत्वमित्यभिप्रेत्य वाक्योत्थज्ञानस्य प्राबल्यमुपपादयति—अहंधीरिति ।

देहादावनात्मन्यात्मबुद्धिरहंधीरित्युच्यते, साहंकर्तुरिदमंशात् पूर्वपूर्वाहंकारवासनावासितान्तःकरणरूपादिदमात्मनः सकाशादुत्थिताध्यासात्मिकेत्यर्थः । स्वरूपतोऽस्या दौर्बल्यमुक्त्वा, विषयभेदादपि तदाह—वाचारम्भणगोचरेति । निरूप्यमाणं स्वतः सत्ताहीनमपि यदपरोक्षव्यवहारगोचरतया गम्यते, तद्वाचारम्भणमनृतजडानात्मरूपं, तदेव गोचरो विषयो यस्याः, सा तथा । यत एवमतो 'नेति नेति'[7] इति शास्त्रेण निषिद्धो बाधित आत्मा स्वरूपमुद्भवः कारणं च यस्याः सा निषिद्धात्मोद्भवा, तस्या

(१) इदधी°—पाठः (२) देहरूप—पाठः । (३) °दानचे°—नि. सा. पाठः ।
(४) सर्वं जगदाश्रये—पाठः । (५) बृ. उ. ३. ८ ११. (६) °ब्रह्मभावत्वा°—
पाठः । (७) बृ. उ. २. ३. ६. (८) कारणं य°—पाठः ।

पूर्वबुद्धिमबाधित्वा नोत्तरा जायते मतिः ।
दृशिरेकः स्वयं सिद्धः फलत्वात्स न बाध्यते ॥ ३ ॥

भावो निषिद्धात्मोद्भवत्वं, तस्मादिति विग्रहः । सा पुनरिदंधीरात्मयाथात्म्यज्ञानानन्तरं मानतां प्रमाणत्वं न ह्येव लभेत—(१) अवस्तुत्वात्, (२) अवस्तुजत्वात्, (३) अवस्तुविषयत्वाच्च, स्वप्नावस्थविशेषज्ञानवदित्यर्थः । अतो वाक्योत्थज्ञानमेव प्रबलं, नेतरदिति भावः ॥ २ ॥

इदानीं 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्'[१] इतिन्यायेन प्रथमोत्पन्नाया अपि कर्ता भोक्तेत्यादिधिय उत्तरेण ब्रह्मात्मज्ञानेन बाध्यत्वमुपपादयति—पूर्वबुद्धिमिति ।

न हि शुक्त्यज्ञानजन्यां रजतबुद्धिमबाधित्वा, शुक्तिधीरुत्तरोत्पद्यते । एवं कर्त्रादिबुद्धिमबाधित्वा, नात्मतत्त्वज्ञानमुत्तरमुत्पद्यते । अतः प्रसक्तनिषेधात्मकत्वाद्बाधस्य, पूर्वसमये उत्तरप्रसक्त्यभावात्, न पूर्वेणोत्तरस्य बाधः, किंतु परेण पूर्वस्य प्रसक्तस्य बाध इत्यनवद्यम् । पदार्थबोधे शब्दस्य मानान्तरसापेक्षत्वेऽपि न वाक्यार्थबोधे तदपेक्षा, पदार्थबोधेऽपि व्यवहारमात्रस्यैवापेक्षणात्, पूर्वबुद्धेर्व्यवहाराङ्गत्वांशस्योत्तरेणात्मज्ञानेनाबाधनाच्च नोपजीव्यविरोधश्चेति द्रष्टव्यम् । किंचौपनिषदात्मज्ञानमेव तत्त्वावेदकमत्यन्ताबाध्यार्थत्वादित्याह—दृशिरिति । ब्रह्माकाराकारान्तःकरणवृत्तिप्रतिफलितापरोक्षस्फूर्तिर्दृशिरित्युच्यते । स चैकः पराभावेनोपलक्षितोऽद्वितीय इति यावत् । स्वयंसिद्धः परनिरपेक्षसत्ताकस्फूर्तिकः स न बाध्यते, उक्तविशेषणैर्बाधायोग्यत्वावगमात् । फलत्वाच्च—नहि फलं बाध्यते, तस्य सर्वज्ञानसाधारणत्वात्, सर्वव्यवहारहेतुप्रकाशत्वाच्चेत्यर्थः । नित्यसिद्धस्याप्यस्य फलत्वं विषयाकारवृत्तिव्यक्तत्वापेक्षयोपचर्यत इति भावः ॥ ३ ॥

---

(१) जै. सू. ६. ५. ५४. (२) अपेक्षत्वात्—पाठः ।

इदं वनमतिक्रम्य शोकमोहादिदूषितम् ।
वनाद्गान्धारको यद्वत्स्वात्मानं प्रतिपद्यते ॥ ४ ॥

इति आत्मज्ञानोत्पत्तिप्रकरणम् ।

*एवं ब्रह्मात्मज्ञानस्य वाक्यादनुत्पत्तिशङ्का, उत्पन्नस्य प्राबल्योपपादनेन* पूर्वप्रवृत्तप्रत्यक्षादिभिर्बाध्यार्थत्वशङ्कां चोन्मथ्य, इदानीं कथमिदमुत्पद्यतामिति वीक्षायां पदार्थपरिशोधनेनेति श्रौतदृष्टान्तेनोपपादयति—इदं वनमिति ।

इदं शरीरमेव वनमिव वनं रागद्वेषशोकमोहादिभिर्व्याघ्रतस्करादिस्थानीयैर्दूषितमाक्रान्तमतिक्रम्य, दिङ्मात्रमाचार्यादवगम्यान्वयव्यतिरेकालोचनया पदार्थशोधनेन देहादिकमनात्मतया त्यक्त्वा, स्वमात्मानं सर्वानुस्यूतमनपोह्यं प्रतिपद्यते—'अहं ब्रह्मास्मि'[1] इत्यौपनिषदं पुरुषमवगच्छतीत्यर्थः । यथा गान्धारको गन्धारदेशवासी पुरुषो बद्धचक्षुरेव तस्करैरानीय, महावने निक्षिप्तः, स बन्धमोक्षार्थी तत्राक्रोशं कुर्वन्, केनचित्कारुणिकेनोपलब्धः, तेन मोचितबन्धः, दर्शितस्वदेशमार्गो ग्रामाद्ग्रामं पृच्छन्, पण्डितो मेधावी, वनात्स्वदेशं प्रतिपद्येत, तथाऽयमपि संसारी अविद्यारागादितस्करैर्मिथ्याज्ञानपटेन विवेकदृष्टिमाच्छाद्य, स्वदेशाद्देहारण्यं प्रवेशितो बन्धमोक्षार्थी कदाचित्केनचित्कारुणिकेनाचार्येण ब्रह्मविदा त्याजितमिथ्यादृष्टिपटः प्रतिबोधितस्वदेशब्रह्ममार्गोऽन्वयव्यतिरेकाभ्यां स्वयमूहमानः स्वमात्मानमधिगच्छतीत्यर्थः ॥ ४ ॥

इति द्वितीयं आत्मज्ञानोत्पत्तिप्रकरणम् ॥ २ ॥

---

(१) बृ. उ. १.४.१० (२) प्रतिपत्तिप्रकरणमित्यपि पाठः (३) त्यक्तिवि-धिप्र°—पाठः ।

## ३ ईश्वरात्मप्रकरणम्।

**ईश्वरश्चेदनात्मा स्यान्नासावस्मीति धारयेत्।**
**आत्मा चेदीश्वरोऽस्मीति विद्या साऽन्यनिवर्तिका ॥ १ ॥**

नैव ब्रह्मविद्या प्रतिपादिता, तस्या प्रकाशमान ब्रह्म किं प्रत्यगात्मनो भेदेन प्रत्येतव्य ? तदभेदेन वेति ? 'द्वा सुपर्णा सयुजा' इत्यत्र भेदश्रवणात् 'अयमात्मा ब्रह्म' इत्यभेदश्रवणाच्च संदेहे निर्णयकारण श्रौत दर्शयन् वाक्यविषयमर्थं स्पष्टयति—ईश्वर इत्यादिना।

ईश्वरो जगत्कारणत्वेनोपलक्षितः परमात्मा सत्यज्ञानानन्तानन्दरूप.। स चेदात्मभिन्नो मेर्वादिवद्विपरभूत. परोक्षो वा स्यात्, तदासावीश्वरोऽहमस्मीति मुमुक्षुर्न धारयेत्—आत्मान तत्त्वतो न प्रतिपद्येत। ततस्तत्त्वमस्यादिवचनविरोधः स्यात्, 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति न्यायविरोधश्च स्यादित्यर्थ.। ईश्वर एवात्माहमस्मि नान्य इति चेद्धारयेद्विचारनीयात्, तदा न श्रुतिन्यायविरोध इति बोध्यम्। सा विद्या तिरोहितभेदकाप्रत्यग्ब्रह्मैक्यावलम्बिनी अन्यस्या अविद्याया निवर्तिका समूलसंसारनिवर्तिकेत्यर्थ.। 'ब्रह्म वेद ब्रह्मैव भवति', 'ब्रह्मैव सन्ब्रह्माप्येति' इत्यादिश्रुतौ ब्रह्मज्ञानस्य ब्रह्मभावफलश्रवणादन्यत्वपक्षे स्थितस्य नष्टस्य चान्यस्यान्यभावानुपपत्तेरैक्यज्ञानमेव फलवदिति तत्रैव शास्त्रतात्पर्यं न भेदे। तज्ज्ञानस्याफलत्वात् 'अन्योऽसावन्योऽहमस्मीति न स वेद' इति भेददर्शनस्य निन्दितत्वाच्च भेदश्रुतेस्त्वनाद्यविद्याकल्पितभेदानुवादपरत्वान्न स्वार्थे तात्पर्यमिति भाव.॥ १ ॥

---

(१) श्वे उ. ४. ६. (२) बृ. उ. २. ५. १९ (३) ब्र सू ४. १ ३. (४) मु उ. ३. २. ९ (५) बृ उ ४. ४. ६, तै. आ. २ २. (६) बृ. उ. १. ४ १०.

आत्मनोऽन्यस्य चेद्धर्मा अस्थूलत्वादयो मताः ।
अज्ञेयत्वेऽस्य किं तैः स्यादात्मत्वे त्वन्यधीह्नुतिः ॥ २ ॥
मिथ्याध्यासनिषेधार्थं ततोऽस्थूलादि गृह्यताम् ।
परत्र चेन्निषेधार्थं शून्यतावर्णनं हि तत् ॥ ३ ॥

इतश्चाभेदे वेदतात्पर्यमाह—आत्मन इति ।

अस्थूलत्वादयो धर्माः प्रत्यगात्मनोऽन्यस्य भिन्नस्येश्वरस्य चेन्मता इष्टाः स्यु, तदास्येश्वरस्यानात्मभूतत्वादज्ञेयत्वे सति, मुमुक्षोरस्थूलत्वादिभिः श्रौतैर्धर्मैः किं स्यात् ? न किमपि—स्थूलोऽहं कृशोऽहमित्यादिस्वगतभ्रान्त्यनिवृत्तेरित्यर्थः । यदा त्वस्थूलत्वादिधर्मक ईश्वरोऽहमस्मीति ज्ञायते, तदा तस्याप्यात्मत्वे सति प्रतीचोऽन्यधीह्नुति—स्वात्मन्येव गृहीतायाः कृशस्थूलत्वादिधियो मोहमूलाया बाधसिद्धिः फलं स्यादित्यर्थः ॥ २ ॥

'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इति कार्यकारणात्मकजगदाश्रयप्रश्नोत्तरत्वेनाक्षरस्योपक्रमात्, 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इति जगदीश्वरतया मध्ये परामर्शात्, 'अदृष्टं द्रष्टृ' इत्यादिना तत्स्वभावकथनपूर्वेकमन्ते च 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्युपसंहारात्, ईश्वरपरता ब्राह्मणवाक्यस्याशेषस्यावधारिता; तत्र 'नान्यदतोऽस्ति द्रष्टृ''' श्रोतृ'''मन्तृ'''विज्ञातृ' इति द्रष्टृत्वाद्युपलक्षितस्य प्रत्यगात्मनोऽक्षरब्रह्माभेदश्चावधारित.—इतीश्वरात्मनोरभेद एव शास्त्रार्थो यतः, तस्मात्प्रत्यगात्मन्यध्यस्तस्थूलत्वादिप्रतिषेधपरमिदं वाक्यमास्थेयमित्यभिप्रेत्याह—मिथ्येति ।

ततस्तस्मान्मिथ्याध्यासस्य अज्ञानमूलस्य निषेधार्थं निवृत्त्यर्थं अस्थूलादिप्रत्यगात्मविशेषणत्वेन गृह्यताम् । विपक्षे दोषमाह—परत्रेति । अस्थूलादिवाक्यं परत्र प्रत्यगात्मनोऽन्यत्र स्थूलत्वादिनिषेधार्थं चेत्स्यात्, तदा

(१) ह्नुत्य°—पाठः । (२) बृ. उ. ३.८. ७,९,११. (३) °ध्यासाशन°—पाठ ।

मुमुत्सोर्यदि चान्यत्र प्रत्यगात्मन इष्यते ।
अप्राणो ह्यमनाः शुभ्र इति चानर्थकं वचः ॥ ४ ॥

इति ईश्वरात्मप्रकरणम् ।

४ तत्त्वज्ञानस्वभावप्रकरणम्

अहंप्रत्ययबीजं यदहंप्रत्ययवस्थितम् ।
नाहंप्रत्ययवद्दुष्टं कथं कर्म प्ररोहति ॥ १ ॥

हि निश्चित शून्यतावर्णनमेव तत्स्यात्—आत्मनोऽन्यस्य जडत्वात्, तस्य च स्थौल्यादिधर्मयोगाप्रतिषेध्यान्त पातित्व सति, ईश्वरस्येश्वरत्वायोगात्प्रतिषेधमात्रपरमेव शास्त्र स्यादित्यर्थ । तस्मादस्थूलादिधर्मकस्यानात्मत्वायोगादीश्वरमभ्युपगच्छतात्मैव सोऽभ्युपगन्तव्य इति भाव ॥ ३ ॥

किंच प्रत्यगात्मनोऽन्यत्र स्थूलत्वादिप्रतिषेध चाप्राप्तप्रतिषेधो निष्फलत्वापत्तेति दोषान्तरमाह—मुमुत्सोरिति ।

यदि प्रत्यगात्मनो मुमुत्सोरात्मतत्त्व बोद्धुमिच्छो ससारित्वेनाभिमतादात्मन इति यावत् । तदन्यत्र देहेन्द्रियप्राणमनस्तद्धर्मनिषेध इष्यते, तदा 'अप्राण' इत्यादिवचनमनर्थक निर्विषय स्यात्, अन्यत्र प्राणादिप्रसक्त्यभावात्, प्रतिषेधस्य च दृष्टार्थत्वादित्यर्थ ॥ ४ ॥

इति तृतीय ईश्वरात्मप्रकरणम् ॥ ३ ॥

---

ननु यदिदमीश्वराभेदनात्मनो ज्ञान मोक्षसाधनमुक्त, तन्नोपपद्यते—सचितानेककर्मसद्भावात्कर्मणा च फलावश्यभावनियमात्, तै प्रतिबन्धसभवादिति तत्राह—अहंप्रत्ययेति ।

अहमिति प्रत्ययोऽहकारोऽनात्मन्यात्माभिमानलक्षण, स बीज कारण

---

(१) मु उ. २. १ २

दृष्टवच्चेत्प्ररोहः स्यान्नान्यकर्मा स इष्यते ।
तन्निरोधे कथं तत्स्यात्पृच्छामो वस्तदुच्यताम् ॥ २ ॥

यस्य कर्मणस्तदहंप्रत्ययबीजम् । अहमिति प्रतीयते आत्मा यस्मिन्नन्तःकरणे साभासे, तदहंप्रत्ययवत्, तस्मिन्नहंप्रत्ययवति स्थितं संचितं यत्कर्मजातं, तत् 'नाहं कर्ता भोक्ता, किंतु ब्रह्मैवाहमस्मि', इति यः प्रमाणजनितः प्रत्ययः, स एव वह्निः, तेनोष्टं दग्धं कथं पुनः प्ररोहति फलोन्मुखं जायेत ?—इति योजना । तथा च श्रुतिस्मृती—'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'[१] । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा'[२] इति । ज्ञानोदये नान्तरीयकतया मूलाज्ञानस्य विरोधादेव निवृत्तिसंभवात्, तदा तत्कार्यान्तःकरणस्यापि निवृत्तेराश्रयाभावे कर्मस्थित्ययोगात्, कुतस्तेन मोक्षप्रतिबन्धशङ्केत्यभिप्रायः ॥ १ ॥

ननु तथा ज्ञानवतोऽपि भिक्षाटनादिकर्म सफलमुपलभ्यते, तथा तस्यादृष्टफलमपि कर्म सफलं स्यादिति कल्प्यत इति शङ्कते—दृष्टवच्चेत्प्ररोहः स्यादिति ।

परिहरति—नान्यकर्मा स इष्यत इति । नेति निषेधार्थः । स भिक्षाटनादिर्विदुषो व्यापारोऽन्यकर्मा । अन्यत्र प्रवृत्तं फलं कर्म कारणं यस्य सोऽन्यकर्मा स इष्यते । ज्ञानाविरोधिप्रारब्धफलकर्मनिबन्धनं हि भिक्षाटनादि, नैवं विधिलक्षणं, तस्य ज्ञानविरोधित्वादित्यर्थः । ननु ज्ञानादज्ञाननिवृत्त्या तन्मूलाहंकारनिवृत्तिद्वारेण तदाश्रयकर्मनिवृत्तौ कथमारब्धमपि कर्म सिद्ध्येत्, यन्निमित्ता विदुषो भिक्षाटनादिकर्मप्रवृत्तिरिति पृच्छति पूर्ववादी—तन्निरोध इति । कर्माश्रयः प्रथमतच्छब्दार्थः । कर्म द्वितीयतच्छब्दार्थः ॥ २ ॥

(१) मुं. उ. २. २. ८. (२) भ. गी. ४. ३७. (३) 'वविधल'—पाठः ।

देहाद्यारम्भसामर्थ्याज्ज्ञानं सद्विषयं त्वयि ।
अभिभूय फलं कुर्यात्कर्मान्ते ज्ञानमुद्भवेत् ॥ ३ ॥
आरब्धस्य फले ह्येते भोगो ज्ञानं च कर्मणः ।
अविरोधस्तयोर्युक्तो वैधर्म्यं चेतरस्य तु ॥ ४ ॥

उत्तरमाह—देहादिति ।

सद्विषयं प्रमाणजनितत्वेन प्रबलमपि ब्रह्मात्मविषयं ज्ञानमभिभूय, विदेहकैवल्यरूपात्फलात्प्रच्याव्य, कर्म प्रारब्धफललक्षणं स्वफलं देहाभासजगदाभासरूपं त्वयि ज्ञानवत्यपि कुर्यादेव । कुतः ? देहाद्यारम्भं प्रति समर्थत्वात् । अन्ते प्रारब्धकर्मफलभोगावसाने सति, ज्ञानं प्रतिबन्धरहितं समुद्भवेदुद्भूतं भवति—वर्तमानकार्यसंपादकाविद्यालेशमप्यपबाध्य विद्वांसं स्वाराज्ये स्थापयेदित्यर्थः ॥ ३ ॥

ननु प्रारब्धकर्मवशाज्ज्ञानिनोऽपि भोगः स्यात्, न त्वनारब्धकर्मतत्फलयोस्तस्मिन्नवस्थितिरिति कथमुपपद्येत ? अज्ञानकार्यत्वाविशेषात्सर्वस्य, अज्ञाननिवृत्तौ च पुनराश्रयाभावेनावस्थानाभावस्य समत्वात्—इत्याशङ्क्य विशेषमाह—आरब्धस्येति ।

भोगो ज्ञानं चेत्येते हि यस्मादारब्धस्य कर्मणः फले, अतस्तयोरविरोधो युक्तः, इतरस्य त्वनारब्धफलस्य संचितस्य क्रियमाणस्य वा कर्मणो वैधर्म्यं वैपरीत्यं विरोध एवेत्यक्षरार्थः । अयं भावः—ज्ञानं हि स्वकारणाज्जायमानं शरीरादिसापेक्षमेव जायते, अशरीरस्यागन्तुकज्ञानासंभवात् । शरीरादिकं तु न ज्ञानकारणादुत्पद्यते, अन्यकारणस्यान्यहेतुत्वायोगात् । अतः कैश्चित्कर्मविशेषैः शरीरविशेषे ज्ञानोत्पत्तियोग्ये स्वफलदानायारब्धे सति तमाश्रित्य ज्ञानहेतुकर्माणि ज्ञानमारभन्त इत्यभ्युपगन्तव्यम् । तथा चारब्धे देहे

(१) प्रच्याव—पाठः ।

देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ।
ततः सर्वमिदं सिद्धं प्रयोगोऽस्माभिरीरितः ॥ ५ ॥

इति तत्त्वज्ञानस्वभावप्रकरणम् ।

सद्भोगस्यावश्यंभावित्वाद्भोगप्रदकर्मारब्धशरीरमाश्रित्य स्वहेतुसमासादितं ज्ञानं स्वफलमज्ञाननिवृत्तिं कुर्वदपि न सद्यो भोगैकनाश्यदेहारम्भककर्माक्षिप्ताविद्यालेशं निवर्तयत्युपजीव्यविरोधित्वाभावादिति नारब्धफलकर्मज्ञानयोर्विरोधः । अनारब्धफलानां तु कर्मणामकर्त्रात्मतत्त्वज्ञानोदयविरोधादेव कर्तृस्वभावनिवृत्तावाश्रयाभावादभावोपपत्तेर्न ज्ञानसहावस्थानमुपपद्यत इत्यस्ति विशेष इति ॥ ४ ॥

ननु ज्ञानिनोऽपि चेद्भोगो देहारम्भककर्मनिबन्धनोऽस्ति, तर्हि तस्य कदाचिद्देहात्माभिमानसंभवात्, तदुद्भूतदुरितप्रतिबन्धवशान्मोक्षानुपपत्तिरिति चेन्नेत्याह—देहात्मज्ञानवदिति ।

यथा विवेकविलक्षणस्य लौकिकस्य देहे मनुष्योऽहमित्यात्मज्ञानं निःसंदिग्धमुपलब्धं, तथा मुख्यात्मन्येव देहाद्यहंकारपर्यन्तसाक्षिण्यात्मन्येव यस्य देहात्मज्ञानबाधकम् 'अहमस्मि परं ब्रह्म' इत्येवं रूपं निःसंदिग्धं ज्ञानं भवेत्, स यथोक्तज्ञानबलादनर्थराशेरपनीतत्वान्मुक्तिमनिच्छन्नपि बलान्मुच्यत एवेत्यर्थः । तथा चाविर्भूतात्मतत्त्वस्य पुनर्देहाभिमानहेत्वभावान्न मोक्षेऽपि प्रतिबन्ध इति भावः । तथाच श्रुतिः—'भिद्यते हृदयग्रन्थिश्छि-

---

(१) अयमर्धश्लोकः क्वचिन्नोपलभ्यते । (२) 'प्राप्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयान्निवृत्तिः'—ब्र. सू. भाष्य. ३. ३. ३२. जातेऽपि ज्ञाने विदुषो देहपातावधिश्रुतेः, अनुभवाच्च ज्ञानस्यावरणाज्ञाननिवर्तकस्य प्रारब्धविरोधित्वानुग्र-ज्ञानादनिवर्तनसामर्थ्याभावसिद्धेः, भोगेनैव प्रारब्धक्षयः—इति भावः ।

**मूत्राशङ्को यथोदङ्को नाग्रहीदमृतं यथा ।**
**कर्मनाशभयाज्जन्तोरात्मज्ञानाग्रहस्तथा ॥ ? ॥**

यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥' इत्याद्या । तथा स्मृतयोऽपि—'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संबध्यते पुनः ॥' 'यथा पर्वतमादीप्तं नाश्रयन्ति मृगद्विजाः । तद्वद्ब्रह्मविदो दोषा नाश्रयन्ते कदाचन ॥' 'मन्त्रौषधबलैर्यद्वज्जीर्यते भक्षितं विषम् । तद्वत्सर्वाणि कर्माणि जीर्यन्ते ज्ञानिनः क्षणात् ॥' इति । ज्ञानिनः कर्मणा प्रतिबन्धाभावमुपपादितमुपसंहरति—तत इत्यर्धश्लोकेन । सर्वमिदमिति प्रारब्धकर्माविरोधित्वोक्तिः । सिद्धं श्रुत्यादिप्रमाणसिद्धमित्यर्थः । प्रयोग उपपत्तिः ॥ ५ ॥

इति चतुर्थं तत्त्वज्ञानस्वभावप्रकरणम् ॥ ४ ॥

---

यदि प्रागुक्तरीत्या ब्रह्मात्मज्ञानममृतत्वं गमयेत्, किमिति तर्हि सर्वैः 'अहं ब्रह्मास्मि' इत्यात्मरूपं न गृह्यते ?—निसर्गत एव सर्वेषां परमपुरुषार्थित्वादिति तत्राह—मूत्राशङ्क इति । अत्रेयमाख्यायिका—उदङ्को नाम कश्चिदृषिर्भगवन्तं महाविष्णुं तपसा तोषयित्वा देवरक्षितममृतं प्रार्थितवान् । तदा भगवता देवेन्द्रं प्रत्युक्तम् 'अमृतमस्मै दीयताम्' इति । इन्द्रस्तु विष्णोराज्ञां पालयन्नमृतकलशं नीत्वा, मातङ्गवेषमास्थाय, स्ववसितदेशे तं कलशमुपनिधायोदङ्काय दातुमारेभेऽसूयया मा भवत्वस्यामृतपानमिति मन्यमानः । तदुदङ्कोऽपि चण्डालमूत्रशङ्कया न जग्राहेति । उदङ्को मूत्राशङ्कः सन् यथाभूतमेव प्रत्यक्षोपलब्धमप्यमृतं यथा नाग्रहीन्न मदभिल-

---

( १ ) मुं. उ. २. २. ८. ( २ ) वन. प. २००. ११०. ( ३ ) ?
( ४ ) सूत-सं. २. २०. ३५. ( ५ ) इत्यदृप्रत्ययप्रकरणमित्यन्यत्र.

बुद्धिस्थश्चलतीवात्मा 'ध्यायतीव' च दृश्यते ।
नौगतस्य[1] यथा वृक्षास्तद्वत्संसारविभ्रमः ॥ २ ॥
नौस्थस्य प्रातिलोम्येन नगानां गमनं यथा ।
आत्मनः संसृतिस्तद्वद्ध्यायतीवेति हि श्रुतिः ॥ ३ ॥

पितममृतमिदमिति न गृहीतवान्—जातिनाशभयादिति योजना—तथा जन्तोर्लोकस्य वर्णाश्रमोपाधिविहितकर्मनाशभयादात्मज्ञानस्य यथोक्तस्याऽग्रहस्तस्मिन्ननादर इत्युत्तरार्धयोजना । पदार्थस्वरूपापरिज्ञानं विपरीतज्ञानं च श्रुत्युक्तात्मस्वरूपाग्रहणकारणमिति भावः ॥ १ ॥

ननु दृष्टान्ते देवेन्द्रस्य वेषान्यत्वममृतकलशस्य च मूत्राशयध्याननिवेशनं च जात्यन्तरमूत्रभ्रमोत्पादनेनामृताग्रहणकारणमासीत्, न तथात्मनो ब्रह्मभूतस्य भ्रमकारणमस्तीत्यत आह—बुद्धिस्थ इति ।

अनाद्यविद्यया स्वात्मन्यध्यस्तबुद्धौ लिङ्गशरीरे अभिमानित्वेन स्थित आत्मा, तस्या बुद्धौ चलन्त्या, चलतीव दृश्यते, न वस्तुतश्चलत्यविक्रियत्वात्, तथा—तस्या ध्यायन्त्या निश्चलीभूताया, ध्यायतीव निश्चल इव दृश्यते प्रतिभासते, न वस्तुतो ध्यायति । चलनाभावे तत्प्रतियोगिकस्य नैश्चल्यस्याप्यभावादित्यर्थः । विकारवद्बुद्ध्यविवेकाद्दावेव संसार्यहमस्मीति विपरीतनिश्चयदोषाच्छ्रुत्यादिभिरीर्यमाणमप्यात्मनो ब्रह्मत्वं न गृह्णाति लोक इत्यभिप्रायः । अविवेकादन्यथाप्रतिपत्तौ दृष्टान्तमाह—नौगतस्येति । तद्वदिति दार्ष्टान्तिकोक्तिः ॥ २ ॥

उक्तमेव प्रपञ्चयति—नौस्थस्येति ।

जलस्थाया चलन्त्या नावि स्थितस्य जनस्य यथा नौगतिदिग्वैपरीत्येन

(१) बृ. उ. ४. ३. ७.

चैतन्यप्रतिबिम्बेन व्याप्तो बोधो हि जायते ।
बुद्धेः शब्दादिनिर्भासस्तेन मोमुह्यते जगत् ॥ ४ ॥

जलाशयतीरस्थानां नगानां वृक्षादीनां गमनं विभाव्यते उपाध्यविवेकात्, तद्वद्संसारिणोऽप्यात्मनः संसृतिरनुभूयत इत्यर्थः । उक्तार्थानुवादिनीं श्रुतिं पठति—ध्यायतीवेति हि श्रुतिरिति । '[1] स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीवे' इति श्रूयत इत्यर्थः ॥ ३ ॥

प्रपञ्चितदृष्टान्तानुगुण्येन दार्ष्टान्तिकं प्रपञ्चयन्नुदाहृतश्रुत्यर्थमाह—चैतन्यप्रतिबिम्बेनेति ।

चैतन्यप्रतिबिम्बश्चिदाभासः, तेन व्याप्तो हि यस्माद्बुद्धेर्बोधः—विषयाकारा बुद्धिर्जायते, अतः स्वाभासाविवेकाच्छब्दादिभिर्बुद्धिवृत्तिव्याप्तविषयैः—इत्थंभावे तृतीया । विषयभूतदेहाद्यात्मना भासो भासनं स्फुरणमात्मनो भवतीति शेषः । यदि शब्दादिनिर्भास इति पाठो लभ्यते, तदा बोधविशेषणम् । शब्दादेर्विषयस्य निर्भासो यस्मिंस्तथेति सुगमम् । येनैवमेकस्यां बुद्धिवृत्तौ देहादिविषयचैतन्ययोः संश्लेष इव भवति, तेनान्योन्याविवेकनिमित्तेन जगत् जनोऽतिशयेन मुह्यतीत्यर्थः । यथा नौस्थः पुरुषो नावश्चलनं नानुभवति, अचलत्सु च वृक्षेषु चलनमनुभवत्युपाधिसामर्थ्यात्, एवं बुद्धिस्थः[3] देहाद्यात्मभावमिवापन्न आत्मा तदीयं व्यापारं न पृथगनुभवति, तदाभासाविवेकात्तु चिदात्मनि विकारमारोपयन्ननुभवति मृषैव इत्येतत् 'ध्यायतीव' इत्यादिश्रुत्योच्यते । अत उपाधिसामर्थ्यात्संसारित्वविभ्रम इत्यभिप्रायः ॥ ४ ॥

---

( १ ) बृ. उ. ४. ३. ७. ( २ ) 'तीलु'—पाठः । ( ३ ) बुद्धिस्थदेहा'—पाठः ।

चैतन्यभास्यताहमस्तादर्थ्यं च तदस्य यत् ।
इदमंशप्रहाणे न परः सोऽनुभवो भवेत् ॥ ९ ॥

इति बुद्ध्यपराधप्रकरणम् ।

एवमविवेकाधीने ससाराध्यासे विविक्तपदार्थस्य वाक्यात् ' अहं ब्रह्मास्मि ' इति बुद्धिवृत्त्युदये मुक्तिः फलिष्यति, अतः पदार्थविवेकवता भाव्य मुमुक्षुणेत्यभिप्रेत्याह—चैतन्यभास्यतेति ।

अहमोऽहंकारस्य चिदचिद्ग्रन्थिरूपस्य यच्चैतन्यभास्यता दृश्यता, यच्च तादर्थ्यं चिदात्मनो विषयोपस्थापकत्वेन तच्छेषत्वमस्ति, तदुभयमस्याहंकारस्य सबन्धि तस्मिन्निदमंशस्य प्रहाणे विवेके सति न भवेन्न स्यादिति योजना । तत्र योऽनुभवः साक्षी परिशिष्ट, स पर परमात्मा वाक्यार्थभूतो भवेदित्यर्थ. । यद्वा—अस्याहमोऽहंकारस्य चैतन्यभास्यता जडता, तादर्थ्यं च तच्छेषत्वं च यद्यस्मादस्ति, तत् तस्मादयमहंकारो नात्मेति वेद्यांशप्रहाणेन तस्मिन्नस्मदर्थत्वाभिमानत्यागेन योऽनुभव. स पर आत्मेति निश्चयवान्भवेदिति योजना । *अथवा—स वाक्यार्थविषय' पर. सर्वोत्तरोऽनुभवोऽहमोऽहंकारस्येदमंशप्रहाणेन पृथक्करणेन भवेदिति सबन्ध. ।* इदमनिदमात्मकस्याहंकारस्य सबन्धी य इदमंश, तस्य साक्षिसाक्ष्यान्वयव्यतिरेकागमापायितद्वध्यन्वयव्यतिरेकालोचनरूपण मननेनापबाधे सति, अवशिष्टांशोऽनपोह्य आत्मेत्यनुभवो भवेदित्यर्थः । नन्वहमित्यवभासे इदमंश ... न चकास्ति, यस्य प्रहाणेन परोऽनुभवो भवेदित्याशङ्कायामाह—चैतन्यभास्यतेति । तादर्थ्यं चेति च । सुषुप्त्यादावात्मनि भासमानेऽप्यहंकारस्यानवभासादनात्मत्वे निश्चित सति, जागरितादावागन्तुकत्वाच्चैतन्यभास्यता तस्य सिद्धा, अत प्रतिभासते—इदमंशाभावेऽपि चैतन्यभास्यत्वेन

( १ ) परमोऽनु'—पाठ । ( २ ) 'कचतन्ये'—पाठ ।

छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशेष्यते ।
तथा शिष्टेन सर्वेण येन येन विशेष्यते ॥ १ ॥

लक्षणेनास्तीदमाकारतेत्यर्थः । तथा तादर्थ्यमप्यस्ति आत्मनि कर्तृत्वभोक्तृत्वादिव्यवहारनिर्वाहकतया आत्मशेषत्वमस्ति यद्यस्मात्, एवं तत्तस्मादप्यनात्मत्वलक्षण इदमंशो विद्यते । अतस्तत्प्रहाणेन ब्रह्मात्मानुभवो भवेदिति सर्वं समञ्जसम् ॥ ५ ॥

इति पञ्चमं बुद्ध्यपराधप्रकरणम् ॥ ५ ॥

---

पदार्थविवेकवतो वाक्यात् 'अहं ब्रह्म' इति ज्ञानं भवतीत्युक्तम् । तत्राहमित्यत्रेदमंशप्रहाणेन साक्षितत्त्वस्य शोधनप्रकारः सूक्ष्मोपायो निर्दिष्टः । तत्रासमर्थं प्रति स्थूलोपायेन पदार्थशोधनप्रकारमुपदेष्टुं प्रकरणमारभते । तत्र यत्स्वरूपप्रहाणमन्तरेण ज्ञातुं न शक्यते, यथाऽग्नेरौष्ण्यं, तस्य स्वरूपत्वादेव न विशेषणता यद्यपि, तथापि तथाविधस्य कचिद्विशेषणत्वव्यवहारः कल्पितभेदमाश्रित्य;—इति स्थिते, आत्मनि सति, सत्ताचैतन्यानन्दानामनपायान्न तेषां विशेषणत्वं, किंतु स्वरूपत्वमेव; कृशः स्थूलः कृष्णो गौरोऽहं मनुष्यः श्रोता द्रष्टा वक्ता कामी क्रोधी ज्ञानी कर्ता भोक्ता सुखी दुःखीत्येवविधानि विशेषणानि नात्मनः सत्तादिवत्स्वरूपभूतानि, सत्यप्यात्मनि सुषुप्त्यादौ तेषामभावात्; इत्येवमात्मनः पृथगुद्धृत्य तस्य कूटस्थताऽवधेयेत्यभिप्रेत्य पृथग्भूतस्य विशेषणत्वाभावे दृष्टान्तमाह—छित्त्वा त्यक्तेनेति ।

यथाऽयं दृष्टान्तः, तथा येन येन मनुष्यत्वादिना विशेष्यते, तेन सर्वेण शिष्टेन त्यक्तहस्तातिरिक्तेन पादादिना वा स्वयमात्मा न विशेष्यते । यथा

---

( १ ) विशिष्यते—पाठः । ( २ ) मूलाशङ्काप्रकरणमित्यन्यत्र पाठः ।

तस्मात्त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणम् ।
अनात्मत्वेन तस्माज्ज्ञो मुक्तः सर्वैर्विशेषणैः ॥ २ ॥
विशेषणमिदं सर्वं साध्वलंकरणं यथा ।
अविद्याध्यस्तमतः सर्वं ज्ञात आत्मन्यसद्भवेत् ॥ ३ ॥

हस्तच्छेदानन्तरं हस्तवानहमिति न विशिष्टप्रत्ययः क्रियते, एवमेव पादादिमान्मनुष्योऽहमित्यादिविशिष्टप्रत्ययो न कार्य इत्यर्थः ॥ १ ॥

देहद्वयसमवायिधर्माणामात्मनि व्यभिचारात्तैरात्मा विशिष्य न प्रत्येतव्य इत्युक्तमनूद्य फलितमाह—तस्मादिति ।

अनात्मत्वेन त्यक्तेन हस्तेनेति संबन्धः । विमतानि विशेषणानि नात्मस्वभावभूतानि, विशेषणत्वात्, छित्त्वा त्यक्तहस्तवदित्यर्थः । यस्मादेवं, तस्मात् ज्ञो ज्ञानवान्—विवेकज्ञानवान्—सर्वविशेषणैर्मुक्तश्चित्सदानन्दमात्रात्मक एवावशिष्यत इत्यर्थः ॥ २ ॥

उक्तन्यायेन विशेषणानामनात्मत्वेऽपि, नात्मनस्तद्वियोगोऽस्ति—आगमापायाभ्यां संबन्धनैरन्तर्यादित्याशङ्क्याह—विशेषणमिदं सर्वमिति ।

इदं सर्वं विशेषणं यथालंकरणमलंकार्यसंबन्धेऽपि न तत्तादात्म्यतद्धर्मत्वबुद्धिविषयः, तथा साधु शोभनं युक्तमिति यावत् । इतरथा आगमापायानुपपत्तेरित्यर्थः । तर्हि कुतो मनुष्योऽहमित्यादौ तादात्म्यावभासस्तत्राह—अविद्याध्यस्तमत इति । मोहादेव तथाऽवभास इत्यर्थः । यस्मादविद्याध्यस्तमेवात्मनीदं सर्वं विशेषणं, अतो ज्ञाते आत्मन्यविद्यानिवृत्तावसत् बाधितं कालत्रयेऽप्यविद्यमानं भवेत्तथा निश्चितं भवेदिति योजना ॥३॥

---

(१) अविद्याध्यासतः—पाठः । भुरिगनुष्टुबियम्—एकाक्षराधिक्यात् । तथा च पिङ्गलाचार्यः सर्वच्छन्दोविषयमाह—"न्यूनाधिकेनैकेन निचृद्भुरिजौ" इति—छन्दःसूत्रे ३. ५९.

ज्ञातैवात्मा सदा ग्राह्यो ज्ञेयमुत्सृज्य केवलः ।
अहमित्यपि यद्ग्राह्यं व्यपेताङ्गसमं हि तत् ॥ ४ ॥
यावान् स्यादिदमंशो यः स स्वतोऽन्यो विशेषणम् ।
विशेषप्रक्षयो यत्र सिद्धो ज्ञश्चित्रगुर्यथा ॥ ५ ॥

ज्ञात आत्मनीत्युक्ते ज्ञेयत्वमात्मन उक्तमिति शङ्का स्यात्, ज्ञेयत्वे च विशेषणादिवदनात्मत्वप्रसङ्ग इत्याशङ्क्याह—ज्ञातैवेति ।

ज्ञेयमुत्सृज्य दृश्यांशापोहं कृत्वा यो ज्ञाता सदा सर्वेभ्य, स एवात्मा न—ग्राह्यांश इति—ग्राह्योऽध्यवसेयः । किंलक्षणः ?—केवलो ज्ञातृत्वविशेषणेनापि रहित इत्यर्थः । ज्ञातृत्वाद्युपलक्षितं चिन्मात्रमलुप्तप्रकाशस्वभावतया सर्वानुस्यूतं वस्त्वात्मेति विवेकवतो निश्चितप्रत्ययो भवेदिति भावः । अहमित्यनुभूयमानत्वात्कथं ज्ञातैवात्मेत्युच्यत इत्यत आह—अहमित्यपीति । यदपि इदमहमिति ग्राह्यमात्मरूपं मन्यसे, तदपि व्यपेताङ्गसमं छिन्नहस्ततुल्यं हि एव तत्,—सुषुप्त्यादावात्मन्यवभासमानेऽप्यहमित्यनवभासनादहमो व्यभिचारित्वे सति, आत्मदृश्यतयात्मत्वायोगादित्यर्थः ॥ ४ ॥

आत्मनः—अहंप्रत्ययग्राह्यत्वाभावे—चक्षुरादेरप्यविषयस्य कुतः सिद्धिः ?—इति मुग्धशङ्कां दृष्टान्तेनापाकुर्वन्नात्मनोऽन्यनिरपेक्षां स्वतःसिद्धिं साधयति—यावानिति ।

अहमित्यत्र यावांश्चिदवभास्यत्वलक्षणेनेदमंशो योऽहंकारादिर्यत्र विशेषणं स्यात्—यस्मिन् स्वानुगतप्रतिभासे प्रत्यगात्मनि विशेषव्यवहारहेतुः स्यात्—स प्रत्यगात्माऽन्यो विशेषणत्वेनाभिमतात्तदहंकारादेः परः, विशेषप्रक्षयश्च सर्वेषां विशेषाणां प्रक्षयो व्यावृत्तिर्यस्मिन्निति व्युत्पत्तेर्निर्विशेषश्च एवंरूपः स्वतःसिद्धोऽन्यनिरपेक्ष एव सिद्धः स्फुरन् वर्तत इति पदयोजना । यथा देवदत्तो विशेषणभूतायाश्चित्रगोरन्यस्तत्संबन्धात्प्रागेव सिद्धो न चित्रगोः संबन्धं स्वसिद्धिं प्रत्यपेक्षते, तथाऽऽत्माप्यहंकारादिसंबन्धात्प्रागेव स्वम-

इदमंशोऽहमित्यत्र त्याज्यो नात्मेति पण्डितैः ।
अहं ब्रह्मेति शिष्टांशो भूतपूर्वगतेर्भवेत् ॥ ६ ॥

इति विशेषापोहप्रकरणम् ।

७ बुद्ध्यारूढप्रकरणम्

बुद्ध्यारूढं सदा सर्वं दृश्यते यत्र तत्र वा ।
मया तस्मात्परं ब्रह्म सर्वज्ञश्चास्मि सर्वगः ॥ १ ॥

हिम्ना सिद्धो नाहंकारादिकं स्वसिद्धावपेक्षते, इति दृष्टान्तदार्ष्टान्तिकसंगतोऽर्थः ॥ ५ ॥

नन्वहमोऽनात्मत्वे, कथमहं ब्रह्मेति तादात्म्यश्रुतिरुपपद्येतेत्याशङ्क्याऽध्यस्ताहंकारस्य मूलनिवृत्त्यर्था श्रुतिः, नाहंकारस्यात्मत्वप्रतिपत्त्यर्थेति परिहरति—इदमंशोऽहमिति ।

अहमित्यत्राहंकारावभासे य इदमंशः स नात्मा, दृश्यत्वादिति निश्चित्य पण्डितैस्त्याज्यः, तस्मिन्नात्माभिमानो न कार्य इत्यर्थः । तर्हि कथं श्रुतिनिर्देशः ? तत्राह—अहमिति । 'अहं ब्रह्म' इति वाक्यार्थनिष्ठायां योऽहंकारांश उल्लिख्यते, स भूतपूर्वगतेर्हेतोर्भवेत् । भूता संजाता पूर्वं गतिः प्राप्तिस्तस्या इति विग्रहः । अहंकारलक्ष्यं वस्तु तत्साक्षिरूपम् 'अहम्' इति श्रुत्योल्लिख्यत इत्यर्थः ॥ ६ ॥

इति षष्ठं विशेषापोहप्रकरणम् ॥ ६ ॥

---

एवं कृतान्वयव्यतिरेकस्य परिशोधितपदार्थतत्त्वस्य वाक्यादेव वाक्यार्थज्ञानमुपपद्यत इत्युपपत्त्या निर्धारितमर्थं स्वानुभवावष्टम्भेन स्पष्टीकर्तुं प्रकरणान्तरमारभते—बुद्ध्यारूढमित्यादिना ।

---

(१) शिष्टोंशो—पाठः (२) इति छित्त्वाप्रकरणमिति वा पाठः ।

यथात्मबुद्धिचाराणां साक्षी तद्वत् परेष्वपि ।
नैवापोढुं न चाऽऽदातुं शक्यस्तस्मात्परो ह्यहम् ॥ २ ॥

यस्मान्मया सर्वमध्यात्ममधिभूतमधिदैवमित्यादिलक्षणं यत्र तत्र वा जाग्रत्स्वप्नयोरिहलोकपरलोकयोर्वा स्थितं प्रत्यक्षादितः शास्त्रतो वा यदुपलभ्यमस्ति, तत्सर्वं बुद्ध्यारूढं बुद्धिवृत्तिक्रोडीकृतं सदा दृश्यते प्रकाश्यते; तस्मादहं सर्वदृश्यविलक्षणत्वात्परं प्रपञ्चातीतं ब्रह्मास्मि सर्वज्ञः सर्वार्थप्रकाशकः सर्वगोऽपरिच्छिन्नश्चास्मीत्यर्थः ॥ १ ॥

ननु कथमेतावता सर्वज्ञत्वं—पुरुषान्तरबुद्ध्यारूढेऽर्थे पुरुषान्तरस्यानुभवस्मरणयोरसंभवादेकस्यात्मनः सर्वार्थप्रकाशकत्वासिद्धेः ? इत्यत आह—यथात्मेति ।

आत्मनि सर्वव्यवहारप्रवर्तकतया आत्मसंबन्धिनी बुद्धिरात्मबुद्धिस्तस्याश्चारः प्रचारो येषु ते आत्मबुद्धिचारा आध्यात्माधिदैवस्थूलसूक्ष्मदेहात्मकाः, तेषां साक्षी स्फोरकोऽहं यथा, तद्वत्तथा परेषु परकीयबुद्धिचारेष्वप्यहं साक्षी, साक्षिभेदे प्रमाणाभावात् । 'मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्'[२] ॥ इत्यादिश्रुतेर्मय्येवैकस्मिन्नेकरसे आत्मनि सर्वप्रमातृतद्बुद्धितत्प्रचारगोचरस्य प्रपञ्चस्य कल्पितत्वावगमाच्च युक्तं मम सर्वज्ञत्वादीत्यर्थः । यस्मादेवमहं सर्वसाक्षित्वेन सर्वाधिष्ठानत्वेन च सर्वज्ञः सर्वगतश्च, तस्मादपोढुम्—अयमस्य द्रष्टा न भवति, अत्र स नास्तीति वा—निराकर्तुं नैव शक्यः केनचित्, न चैवादातुं ज्ञानेन क्रियया वा प्रकाशयितुमुत्पादयितुमारूढुं वा शक्यः । हि यस्मादहं ग्राह्यग्राहकादिप्रपञ्चविलक्षणः, तस्मात् परः परमात्मैवेत्युपसंहारः ॥ २ ॥

---

(१) वाऽऽदातु—पाठः (२) कै. उ. १९.

विकारित्वमशुद्धत्वं भौतिकत्वं न चात्मनः ।
अशेपबुद्धिसाक्षित्वाद्‌बुद्धिवन्नाल्पवेदना ॥ ३ ॥
मणौ प्रकाश्यते यद्वद्रक्ताद्याकारताऽऽतपे ।
मयि संदृश्यते सर्वमातपेनेव तन्मया ॥ ४ ॥

ननु बुद्ध्यारूढं चेत्सर्वं प्रकाश्यते क्षेत्रज्ञेन, तदा दर्शनक्रियायां कर्तृत्वाद्विकारित्वादिदोषप्राप्तेस्तस्यानात्मत्वप्रसङ्ग इति शङ्कां निरस्यति—विकारित्वमिति ।

आत्मनो न विकारित्वं बुद्धिवत्सावयत्वाभावात्, सर्वविकारसाक्षित्वाच्च; तत एव नात्मनोऽशुद्धत्वं क्रियागुणयोगित्वमस्ति, सकलगुणक्रियावद्वस्तुसाक्षित्वाच्च । नापि भौतिकत्वमात्मनो रूपादिहीनत्वात् । किंच नात्मनो बुद्धिवदल्पवेदना—यथा बुद्धेर्बुद्धितरसंसर्गादिविपया वेदनाऽस्ति, नैवमात्मनः—अशेपबुद्धिसाक्षित्वात्सर्वबुद्धिस्वरूपतद्विकारादिसाक्षित्वादित्यर्थः ॥ ३ ॥

यदि निर्विकार एवात्मा, कथं तर्हि स सर्वार्थप्रकाशक इत्युच्यत इत्याशङ्क्य लोकप्रसिद्धदृष्टान्तेन निर्विकारस्यैव प्रकाशकत्वमुपपादयति—मणाविति ।

मणौ स्फटिकादिलक्षणे जपाकुसुमादिरूपा रक्ताद्याकारता आतपे सूर्यालोके सत्येव प्रकाश्यते गृह्यते यद्वत्, तथा मयि क्षेत्रज्ञे आदित्यस्थानीये विद्यमान एव स्फटिकादिस्थानीयायां बुद्धौ जपाकुसुमादिरक्तत्वादिस्थानीयं सर्वं विषयजातं संदृश्यते । तत्स्मादातपेनेव निष्प्रकम्पेन मया सर्वं प्रकाश्यते । न बुद्धिवद्विकारवता । नापि बुद्धिरेव द्रष्ट्री । न चैवं सति बुद्धेरनुपयोग एव, चैतन्यस्य विषयविशेषाकारत्वापादनाय तदुपयोगादिति ॥ ४ ॥

---

(१) 'वन्नाल्प'—पाठः । (२) 'वता—इति सर्वत्र दृश्यते ।

बुद्धौ दृश्यं भवेद्बुद्धौ सत्यां, नास्ति विपर्यये ।
द्रष्टा यस्मात्सदा द्रष्टा तस्माद्द्वैतं न विद्यते ॥ ५ ॥
अविवेकात् पराभावं यथा बुद्धिरवैत्तथा ।
विवेकात्तु परादन्यः स्वयं चापि न विद्यते ॥ ६ ॥
इति बुद्ध्यारूढप्रकरणम् ।

इदानीं प्रत्यगात्मनोऽद्वितीयत्वमुपपादयंस्तस्य च शुद्धत्वं स्पष्टयति—बुद्धाविति ।

जाग्रदादौ बुद्धौ सत्यां स्वाभिव्यक्यायामस्तायां बुद्धौ समारूढं सदृश्यं द्वैतं भवेद्भवेत्, नास्ति विपर्यये—बुद्धावसत्यां स्वापादौ दृश्यं नास्ति, जडस्याज्ञातसत्त्वे प्रमाणाभावादित्यर्थः । द्रष्टा तु साक्षी सदा सर्वास्वप्यवस्थासु द्रष्टैव, न दृश्यवत्स्वसत्तां व्यभिचरति । यस्मादेवं सतः प्रकाशमानत्वाव्यभिचारः, तद्व्यभिचारिणश्च सत्त्वानुपपत्तिः, तस्माद्द्वैतं न विद्यत इति नित्यशुद्ध एव प्रत्यगात्मेत्यर्थः ॥ ५ ॥

यद्यपि द्वैतसंसर्गकृतमशुद्धत्वमात्मनो नास्ति, द्वैतस्याभावात्, तथापि विद्याऽविद्याभ्यां संबन्धादशुद्धिर्भविष्यतीत्याशङ्क्य बुद्धेरेव विद्याऽविद्ये, नात्मनस्तत्संसर्गः, इति शुद्ध एवात्मेत्याह—अविवेकादिति ।

न विद्यते विवेको भेदो भासमानतया यस्मिन् सोऽविवेकः—देहादावात्मबुद्धिः—विपर्ययज्ञानमिति यावत् । तस्मादविवेकात्परस्यासंसारिणः सर्वसाक्षितया विविक्तस्याभावमविद्यमानतां यथा बुद्धिरवैद्विदितवती—अत्र बुद्ध्यध्यासादेव चिदात्मनोऽपि भ्रान्तियोगात्साभासा बुद्धिरेवाज्ञानविपर्यासाश्रय इत्यङ्गीकृत्य यथा बुद्धिरवैदित्युक्तमिति द्रष्टव्यम्—तथा विवेकात्तु अनात्मापवादेनात्मनः स्वभावनिर्धारणं विवेकस्तस्माद्विवेकात्—ऊर्ध्वं परादसंसारिणः परमात्मनोऽन्यो जीवः संसारी न विद्यते, स्वयं

(१) 'वेत'—पाठः ।

## ८ मतिविलापनप्रकरणम्

चितिः[1] स्वरूपं स्वत एव मे मते
रसादियोगस्तव मोहकारितः ।
अतो न किंचित्तव चेष्टितेन मे
फलं भवेत्सर्वविशेषहानतः ॥ १ ॥

विमुच्य मायामयकार्यतामिह
प्रशान्तिमायाह्यसदीहितात् सदा ।
अहं परं ब्रह्म सदा विमुक्तवत्[2]
तथाऽजमेकं द्वयवर्जितं यतः ॥ २ ॥

चापि सोभासबुद्धिरपि सन्निदाना न विद्यते, तदा प्रत्यग्ब्रह्मभूतत्वात्सर्वे· स्येत्यर्थः । तथाच भ्रान्तिसम्यग्ज्ञानयोर्विद्याविद्यारूपयोरपि बुद्धित· न्त्रत्वान्नात्मनोऽशुद्धिगन्धोऽपीति भावः ॥ ६ ॥

इति सप्तमं बुद्ध्यारूढप्रकरणम् ॥ ७ ॥

---

ननु विद्याऽविद्ययोर्यदि बुद्धिगतत्वं, तर्हि सांख्यसिद्धान्तप्रसङ्गः । ते हि—बुद्धिरेव पुरुषस्यापवर्गार्थं भोगार्थं च ज्ञानाज्ञानरूपतामाचरति—इति वदन्तीत्याशङ्कामपनुदन् पूर्वं स्वानुभवानुरोधेन साधितमेव ब्रह्मात्मज्ञानमा· त्मनः संवादात्मकेन प्रकरणान्तरेण द्रढयति—चितिस्वरूप इति ।

रसादियोगो रागादिनिबन्धनो भोक्तृत्वादिसंबन्धः मोहोऽविवेकः । फलितमाह—अतो नेति ॥ १ ॥

यस्मात्सर्वविशेषराहित्यात्तव चेष्टितेन मे ममानाधेयातिशयस्य किमपि फलं नास्ति, तस्मात्तवोपशम एव युक्त इत्याह—विमुच्येति ।

---

(१) चितिस्वरूप—पाठः । (२) विमुक्तिमत्—पाठः । (३) स्वाभाव्य—पाठः ।

मायामयकार्यतां मिथ्याचेष्टितं विमुच्यासदीहितान्निरर्थकप्रयासात्प्रशान्ति प्रशममिह मयि प्रत्यगात्मन्यायाहि प्राप्नुहि। अत्र मायामयचेष्टितासदीहितशब्दाभ्यामविद्यानिबन्धनत्वस्य सूचितत्वात्सांख्यमतशङ्का निरवकाशीकृता वेदितव्या। ननु किमिति प्रत्यगात्मनि मनसो लय उच्यते, सत्यज्ञानादिलक्षणे ब्रह्मण्येव कस्मान्नोच्यते? इत्याशङ्क्याह—सदा अहं परं ब्रह्मेति। यतः सदैवाहं ब्रह्मैव, तथा सति सदा विमुक्तवन्मुक्त इवास्मि, न तु मे मुक्तिबन्धाभावादिति योजना। अजत्वविशेषणं जन्मादिसमस्तविकारप्रतिषेधार्थम्। अत एकं सदैकरूपमित्यर्थः। सजातीयभेदरहितमिति वा। द्वयवर्जितं विजातीयभेदहीनमित्यर्थः। अतो यन्मय्येकीभूतं ब्रह्मण्येव तदेकीभूतमिति स्थिते न 'परेऽव्यये सर्व एकीभवन्ति' इति श्रुतिविरोध इति भावः। अपरा योजना—हे मते, असत्सु स्वतःस्वरूपशून्येषु देहेन्द्रियविषयेषु यदीहितमभिलषितं—दृष्टमदृष्टं वा फलं,—तस्मादसदीहितात्सदा जाग्रद्दशायामपि प्रशान्ति प्रशममायाहि तदर्थं व्यापारं परित्यजेत्यर्थः। उपशान्तापि त्वं नैवात्मानं धारयेत्याह—विमुच्येति। कार्यतां बुद्धिरूपकार्यात्मतां विमुच्य विहाय मायां कारणरूपमाया अय गच्छ तदात्मिका भव। तर्हि तद्रूपेण स्थित्वा पुनरुद्भविष्यामीति चेत्, तत्राह—इहेति। इह मत्स्वरूप एवान्तरय प्रविश—कार्यकारणरूपतां विहाय तप्ताय.पीतोदकबिन्दुवन्मद्रूपग्रस्ता भवेत्यर्थः। कथमहं मुखान्तःकवलीकृतब्रह्माण्डकोटिभिर्येतस्ततश्चाल्यमानेन त्वया ग्रस्ता स्यामिति चेत्, नाहं कदापि चालयितुं त्वया शक्यः, त्वद्भ्रान्तिमात्रमेतदित्यभिप्रेत्याह—अहं परं ब्रह्मेति। यतोऽहं सदा परं ब्रह्म 'अयमात्मा ब्रह्म' इति श्रुतेरिति योज्यम्। विमुक्तवदिति ब्रह्मविशेषणम्। स्वार्थे तद्धितः। विमुक्तं नित्यमुक्तमेवेत्यर्थः। तथा यथा श्रुत्युक्तं तथेत्यर्थः। व्याख्यातमन्यत् ॥ २ ॥

---

(१) मुं. उ. ३. २. ७. (२) बृ. उ. २. ५. १९.

सदा च भूतेषु समोऽस्मि केवलो
यथा च खं सर्वगमक्षरं शिवम् ।
निरन्तरं निष्कलमक्रियं परं
ततो न मेऽस्तीह फलं तवेहितैः ॥ ३ ॥
अहं ममैको न मदन्यदिष्यते
तथा न कस्याप्यहमस्म्यसङ्गतः ।
असङ्गरूपोऽहमतो न मे त्वया
कृतेन कार्यं तव चाद्वयत्वतः ॥ ४ ॥

नन्वजत्वादिप्रतिपादकशास्त्राद्ब्रह्मणो निर्विशेषतया नित्यमुक्तत्वेऽपि, कथमात्मनो देहादिष्वन्वितस्य निर्विशेषतया ब्रह्मरूपतासंभव इत्यत आह—सदा च भूतेष्विति ।

चशब्दोऽवधारणार्थः । अहं केवलोऽविद्यातत्कार्यरूपविशेषणरहितः सर्वेषु भूतेषु सम एवास्मि, उपाधिपरामर्शमन्तरेण मयि विशेषोद्भवाभावादित्यर्थः । सर्वानुस्यूतस्याप्यसङ्गस्वभावतया निर्विशेषत्वे दृष्टान्तमाह—यथा च खमिति । आकाशस्यासङ्गत्वादेः प्रसिद्धत्वात्, न तस्मिन् शङ्का कार्येति चशब्दार्थः । सर्वगमित्यादीनि ब्रह्माकाशयोः समानि । यतः आकाशवत्केवलोऽहं सर्वभूतेषु समः, अत आकाशस्वभावोपमितं सर्वगमित्यादिविशेषणं परं ब्रह्मैवास्मीति योज्यम् । उपपादिते ब्रह्मात्मैक्ये फलितमाह—तत इति ॥ ३ ॥

ब्रह्मभूतस्य तव मदीहितैः फलाभावेऽपि, कथंचिन्मच्चेष्टया त्वत्संबन्धिनः—त्वां प्रति गुणभूतस्य, प्रधानभूतस्य वा—कस्यचिदर्थस्य कश्चिदुपयोगो भविष्यतीत्याशङ्क्य, सोऽपि मयि दुःसंपाद इत्याह—अहमिति ।

(१) तदन्य॑—पाठः ।

फले च हेतौ च जनो विषक्तवान्
इति प्रचिन्त्याहमतो विमोक्षणे।
जनस्य संवादमिमं प्रक्लृप्तवान्
स्वरूपतत्त्वार्थविबोधकारणम्॥ ५॥

एक एवाहं, चित्स्वरूपस्य मम परमार्थतः सजातीयविजातीयस्वगतभेदे मानाभावात्, ततो न मम गुणभूतं किंचिन्मत्तोऽन्यदिष्यते मृग्यते। तथा कस्यापि प्रधानभूतस्याहं गुणभूतो नास्मि। कुतः? असङ्गतः—अनिष्पादितातिशयत्वात्, अनाधेयातिशयत्वादित्यर्थः। यतोऽहमसङ्गरूपः, अतो न मे त्वया कृतेन किमपि प्रयोजनमस्ति। किंच—त्वमेव नासि, कुतस्तवेहितं तत्फलं वेत्याशयेनाह—तव चेति। मत्स्वरूपाज्ञानकल्पितायास्तवाधिष्ठानभूतमत्स्वरूपव्यतिरेकाभावात्, अभेदे चोपकार्योपकारकत्वासंभवात्, अलं विकल्पनया—प्रशान्तैव भवेत्यर्थः॥ ४॥

इदानीं कृतार्थस्याचार्यस्य स्वानुभवसिद्धार्थाविष्कारकप्रकरणनिर्माणप्रवृत्तौ निमित्तं दुःखिजनदर्शनसंजातकरुणैव न ख्यात्यादीत्यभिप्रेत्याह—फले चेति।

अयं जनो हेतुफलात्मके संसारे विशेषेणासक्तवानिति प्रचिन्त्य विमृश्य तादृग्जनस्य लोकस्यातः संसाराद्विमोक्षणे मोक्षार्थमहमिमं मत्यात्मसंवादरूपं ग्रन्थं प्रयुक्तवान् प्रणीतवानस्मि। किमनेन संवादग्रन्थेन जनस्य भवेदिति तदर्थं तं विशिनष्टि—स्वरूपेति। स्वस्यात्मनो रूपं नित्यचैतन्यस्वभावः, तस्य तत्त्वार्थो ब्रह्मत्वं, तस्य विस्पष्टबोधकारणमित्यर्थः॥ ५॥

---

(१) नै. सि. १. ६. (२) 'अध्यात्म', मत्यात्म'—पाठौ.

संवादमेतं यदि चिन्तयेन्नरो
विमुच्यतेऽज्ञानमहाभयागमात् ।
विमुक्तकामश्च तथा जनः सदा
चरत्यशोकः सम आत्मवित्सुखी ॥ ६ ॥

इति भतिविलापनप्रकरणम्

## ९ सूक्ष्मताव्यापिताप्रकरणम् ।

सूक्ष्मताव्यापिते ज्ञेये गन्धादेरुत्तरोत्तरम् ।
प्रत्यगात्मावसानेषु पूर्वपूर्वप्रहाणतः ॥ १ ॥

यत एवंविधोऽयं संवादः, तस्मात्साध्यसाधनपर्यावर्तलक्षणात्संसारान्मुमुक्षुभिरयमनुचिन्तनीय इत्यभिप्रेत्याह—संवादमेतमिति ।

अज्ञानकृतान्महाभयागमात्संसारादित्यर्थः । यद्वा महाभयस्यागमो यस्मात्तन्महाभयागममज्ञानं तस्मादिति विग्रहः । भयहेत्वज्ञानाद्विमुच्यत इत्यर्थः । कारणनिवृत्त्या कार्यनिवृत्तिमाह—विमुक्तकामश्चेत्यादि । चरति जीवन्नेव बन्धप्रतिभासरहितः सन् ब्रह्मण्येव विचरति, कृतकृत्यो भवतीत्यर्थः । सुगममन्यत् ॥ ६ ॥

इति अष्टम भतिविलापनप्रकरणम् ॥ ८ ॥

---

यस्य प्रत्यग्ब्रह्मणो वाक्योत्थज्ञानेनाज्ञाननिवृत्त्या मुक्तिरुक्ता, तस्य सर्वान्तरत्वेन निरतिशयसूक्ष्मत्वं व्यापित्वं च 'यथा चै खम्' इत्यत्र सूचितमुपपादयितुं प्रकरणान्तरमारभते—सूक्ष्मतेत्यादिना ।

गन्धशब्दः पृथिवीशब्दार्थः । पृथिव्यम्ब्वादिलक्षणात्कार्यात्पूर्वस्मात्पूर्वे-

---

(१) 'साधनविपर्या'—पाठः । (२) इति चितिस्वरूपप्रकरणमित्यन्यत्र पाठः । (३) ८.३.

स्मादुत्तरोत्तर कारणतया स्थितेषु प्रत्यगात्मावसानेषु सर्वान्तरात्मपर्यन्तेषु पदार्थेषु यथाक्रमं पूर्वपूर्वप्रहाणतः कार्याकारापोहेन सूक्ष्मता व्यापिता च विज्ञातव्या—कार्यकारणान्वयव्यतिरेकालोचनया संभावनीयेत्यर्थः। कार्येषु विद्यमानमपि कारणस्वरूपं तत्कार्याकारतिरोहिततया न स्वरूपेणावभासते, इति सूक्ष्ममुच्यते, न पुनः कार्यपरिमाणान्न्यूनपरिमाणयोगात्; तथा सकलस्वविकारानुगतस्यैवोपादानकारणत्वात्कार्यापेक्षयाधिकदेशवृत्तित्वेन व्यापित्वं च कारणस्य। तथाहि—चतुर्विधभूतग्रामोपादानरूपा पृथिवी तावन्न भूतग्रामेषु गृह्यमाणेषु गृह्यते, तत्र तच्छब्दप्रत्ययव्यवहारादर्शनाल्लोकस्य। अतस्तदपेक्षया सूक्ष्मा, तदव्याप्तदेशवर्तित्वाद्व्यापिका च। नच तत्तत्कार्योपादानभूताः पृथिव्यंशा भिन्ना इति नोपादानस्य व्यापकतेति वाच्यम्। कार्याकारभेदव्यतिरेकेण मृत्स्वरूपभेदे प्रमाणानिरूपणात्, अन्यथा तटाकान्तस्थमृन्निर्मितकुसूलस्य गृहाङ्गणदेशे मृदात्मना विलयाभावप्रसङ्गात्, उपादानादन्यत्र कार्यलयानुपपत्ते.। तस्मात्स्वकार्यापेक्षया पृथ्वी तावत्सूक्ष्मा व्यापिका च सिद्धा। तथाद्भिर्व्याप्ता पृथिवी 'तद्यदपा शर आसीत्तत्समहन्यत सा पृथिव्यभवत्' इतिश्रुतौ जलपरिणामविशेषस्य शरशब्दवाच्यस्य दधिमण्डाकारस्य पृथिव्यात्मत्वश्रवणात्, स्वेदप्रस्रवणादेः पर्वताग्रशिलायामन्तर्भूमौ च सर्वत्रोपलम्भात्, रसस्य च सलिलासाधारणगुणस्य पृथिव्या सर्वत्रोपलम्भात्, तस्यैकत्वेऽपि कटुतीक्ष्णत्वादिभेदः परिणामविशेषोपाधिनिबन्धन इति। तस्माज्जलव्याप्ता पृथिवी सपरिणामेति जल पृथिव्या व्यापक सूक्ष्मं च प्रागुक्तयुक्त्या सिद्धम्। तथा सपृथिवि जलं तेजसा स्वकारणेन व्याप्तं, सर्वत्रोष्मोपलम्भात्, तप्तायोगोलकादौ सूर्यकिरणेषु चोदकस्य लयदर्शनाच। तथा चैव तेजसो जलाद्व्यापकत्व सूक्ष्मत्वं च प्रसिद्धम्। तदपि वायुना ग्रस्त 'यतश्चोदेति सूर्योऽस्त यत्र च गच्छतीति

---

(१) तावद्भूतं'—पाठः। (२) 'कारेण भेद'—पाठ.। (३) बृ. उ. १.२.२.

शरीरा पृथिवी तावद्यावद्बाह्या प्रमाणतः ।
अम्ब्वादीनि च तत्त्वानि तावज्ज्ञेयानि कृत्स्नशः ॥ २ ॥

प्राणाद्वा एष उदेति प्राणेऽस्तमेति[२] इति श्रुतेः प्राणशब्दवाच्ये वायौ लयश्रवणाज्ज्वालारूपस्य च वह्नेर्वाय्वधीनप्रवृत्तिनिवृत्तिदर्शनाच्च । वायुश्चाकाशेन ग्रस्त इति प्रसिद्धमेवैतत् । सूक्ष्मत्वं तु व्याख्यातमेव सर्वत्र । एतत्सर्वं सत्तास्फूर्तिभ्यां व्याप्तमेवानुभूयत इति सचिन्मात्रं सर्वस्योपादानम् । तस्य चार्थान्तरेणाननुगमादर्शनान्निरुपादानत्वं सिद्धे, निरपेक्षव्यापकत्वं प्रागुक्तपरिपाट्या निरतिशयसूक्ष्मत्वं च सिद्धयति । तदनेन सचिन्मात्रेण सर्वस्य दृश्यराशेर्ग्रस्तत्वान्न ततः पृथक् किमपि वस्तु विद्यत इति तस्य परमसूक्ष्मत्वाव्यापित्वे निश्चित्य सोऽहमसद्गूढस्थाद्वयात्मेति सदा भावयेदिति तात्पर्यार्थः ॥ १ ॥

ननु नैतावतात्मन उक्तरूपत्वज्ञानसिद्धिरध्यात्माधिदैवतयोः पृथिव्यादेर्भेदेन प्रथमानत्वादित्यत आह—शारीरेति ।

यावद्बाह्या पृथिवी प्रमाणतः परिमाणवती भवति, तावत्तावत्प्रमाणा शारीरा पृथिवी ज्ञेयेति संबन्धः । तथाम्ब्वादीनि चत्वारि भूतानि कृत्स्नशो निरवशेषतया तावत्तावत्प्रमाणानि ज्ञेयानि यावच्छारीरा बाह्या च पृथिवीति योजना । एतदुक्तं भवति—अध्यात्माधिभूताधिदैवात्मना विभक्तानां पृथिव्यादीनामेकाज्ञानविजृम्भितत्वादेकप्रयत्नेन प्रविलापनोपपत्तेः, सर्वत्र प्रत्यक्स्वानुगमात्प्रत्यगात्मावसानमेवाध्यात्मादिरूपं तेन व्याप्तं, न ततः पृथगस्ति इति प्रत्यक्तत्त्वेऽवधार्यमाणे बाह्याध्यात्मिकादिभेदस्फूर्तेरनवकाशात्, प्रत्यगात्मप्रज्ञावान्मात्रमेव सर्वमवशिष्यत इति भवेदेव प्रागुक्तात्मतत्त्वज्ञानसिद्धिरिति ॥ २ ॥

(१) अवादी'—पाठ । (२) बृ. उ. १. ५. २३. (३) 'त्मना—पाठः ।
(४) 'प्रलयेन—पाठः ।

वाय्वादीनां यथोत्पत्तेः पूर्वं खं सर्वगं तथा ।
अहमेकः सदा शुद्धश्चिन्मात्रः सर्वगोऽद्वयः ॥ ३ ॥
ब्रह्माद्याः स्थावरान्ता ये प्राणिनो मम पूः स्मृताः ।
कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः ॥ ४ ॥
भूतदोषैः सदाऽस्पृष्टं सर्वभूतस्थमीश्वरम् ।
नीलं व्योम यथा वालो दुष्टं मां वीक्षते जनः ॥ ५ ॥

नन्वेवं परागर्थस्यासत्त्वे कथमात्मन. प्रत्यक्त्वं सर्वगतत्वमित्याद्युपपद्यते ? तस्य पराचीनविकारापेक्षत्वात् । अतः कथं पराचा प्रत्यगात्मावसानत्वमित्याशङ्क्य, चिन्मात्रस्वरूपस्यैवापूर्वादिलक्षणस्य प्रत्यगादिशब्दैर्लक्ष्यत्वाल्लक्ष्यमाणदशायामारोपितपरागर्थापेक्षायामपि स्वरूपस्यान्यानपेक्षत्वाद्युक्त सर्वस्य प्रत्यगात्मावसानत्वावधारणमिति दृष्टान्तेनोपपादयति—वाय्वादीनामिति ।

स्पष्टार्थः ॥ ३ ॥

ननु कथमाकाशवदेक एवात्मा सर्वात्मा भवेत् ? ब्रह्मादिभेदेनात्मनामनेकत्वस्य विभाव्यमानत्वात् । तथा चैतन्यमात्रत्व चानुपपन्न, रागादिदोषसंसर्गोपलब्धेरित्याशङ्क्याह—ब्रह्माद्या इति ।

ममैव चिदात्मनः सर्वे प्राणिन पू पुर शरीरभूताः स्मृता. निर्णीता इत्यर्थ । तथा कामक्रोधादयो दोषा आत्मनो मे न स्वाभाविकाः, व्यभिचारित्वात्, परतोऽपि ते न संभवन्तीत्याह—जायेरन्मे कुतोऽन्यत इति । अन्यस्याभावादित्यर्थः ॥ ४ ॥

प्रत्यगात्मनो निर्दोषत्वमसिद्धं संसारदोषस्य प्रत्यक्षत्वादित्याशङ्क्याकाशकार्ष्ण्यप्रत्यक्षवदात्मनि दोषदृष्टेर्भ्रमत्वान्नैवमित्याह—भूतदोषैरिति ।

---

(१) सर्व—पाठ ।(२) आपस्तंबीयाध्यात्मपटले ४. तुलय—गद्यप्र. ९. ४२. (३) बृ. उ. ४. ५. १९.

मच्चैतन्यावभास्यत्वात्सर्वप्राणिधियां सदा ।
पूर्मम प्राणिनः सर्वे सर्वज्ञस्य विपाप्मनः ॥ ६ ॥
जनिमज्ज्ञानविज्ञेयं स्वप्नज्ञानवदिष्यते ।
नित्यं निर्विषयं ज्ञानं तस्माद्द्वैतं न विद्यते ॥ ७ ॥

अदृष्टमिति छेदः । सर्वभूतेषु स्थितस्यापि तद्दोषैरस्पृष्टत्वमीश्वरत्वादिति इत्यर्थः विशेषणमीश्वरमिति । सर्वस्येशितारं कारणमिति यावत् । नहि कारणं कार्यधर्मैः संस्पृश्यत इत्यर्थः । स्पष्टमन्यत् ॥ ५ ॥

यदुक्तं ब्रह्माद्याः स्थावरान्ताः प्राणिन एकस्यात्मनः शरीरभूता इति तत्कथमित्यत आह—मच्चैतन्येति ।

सर्वज्ञस्य सर्वावभासकस्यात एव विपाप्मनो दृश्यदोषसंसर्गरहितस्य ममात्मनः सर्वे प्राणिनः पूः शरीरम् । कुत ? सर्वप्राणिधियां सदा मच्चैतन्यावभास्यत्वादिति योजना । ' योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ' इति श्रुतेर्बुद्ध्यन्तःसाक्षितया प्रकाशमानस्य चैतन्यज्योतिष एव सर्वं प्राणिष्वात्मत्वावगमात्, तस्य च बुद्धितत्स्थाभासभेदमन्तरेण स्वरूपतो भेदानिरूपणात्सवितुरिवोदकपात्रतत्स्थाभासव्यतिरेकेणेति सिद्धमेकस्यात्मनः सर्वाणि भूतानि शरीरमिति भावः । तथाच श्रुतिः ' यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ' इति ॥ ६ ॥

तर्हि भास्यप्राणितद्बुद्धीनां सत्त्वाद्द्वैतक्षतिरिति तत्राह—जनिमदिति ।

यज्जनिमद्यच्च ज्ञानविज्ञेयं यत्कार्यं जडं च तन्मिथ्येष्यते, यथा स्वप्नज्ञानं, तथा जाग्रदपि कार्यं दृश्यं चेति मिथ्येति । तत् द्वैतं न विद्यते यस्मात्, तस्माज्ज्ञेयस्यासत्त्वात् ज्ञानं नित्यं सदा निर्विषयं विषयनिरूप्य

(१) सस्पृश्यते—पाठः । (२) बृ उ. ४. ३ ७ (३) बृ उ ३ ७ १५

ज्ञातुर्ज्ञातिर्हि नित्योक्ता सुषुप्ते त्वन्यशून्यतः ॥
जाग्रज्ज्ञातिस्त्वविद्यातस्तद्ग्राह्यं चासदिष्यताम् ॥ ८ ॥

न भवति । यद्वा नित्यमविनाशि, सर्वविनाशसाक्षित्वादिति योजना । नह्यध्यारोपितेन द्वैतेन परमार्थमद्वैतं विहन्यते । न खल्वारोपितेन तोयादिना तदाधारभूम्यादि सद्वितीयं दृष्टमिति भावः ॥ ७ ॥

स्वरूपज्ञानस्य निर्विषयत्वं नित्यत्वं चोक्तं श्रुत्योपपादयति—ज्ञातुर्ज्ञातिरिति ।

सुषुप्ते त्वन्यस्य ज्ञेयस्यासत्त्वप्रदर्शनपूर्वकं ज्ञातुरात्मनो ज्ञातिः स्वरूपभूता ज्ञप्तिर्नित्येति श्रुत्योच्यते हीत्यर्थः । तथाच श्रुतिः—'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥' इत्यादिका । यद्यपि सुषुप्ते निर्विषयं ज्ञानं विषयाभावात्, स्वरूपतो नाशशीलत्वाभावाच्च नित्यं श्रुतिसिद्धं, तथाप्यवस्थान्तरे सविषयमुपलभ्यत इति ज्ञातुर्ज्ञातिरनित्या स्यादित्यत आह—जाग्रदिति । यतः श्रुतिसिद्धं नित्यं निर्विषयं ज्ञानं, अतः कारणात् जाग्रज्ज्ञातिर्विषयदर्शनात्मिकाऽविद्या भ्रान्तिरेवात्मनो निर्विकारतया ज्ञानकर्तृत्वायोगात्, अन्तःकरणस्य च जडत्वादेव ज्ञानाश्रयत्वानुपपत्तेरध्यस्तमेव सविषयं ज्ञानं, तद्ग्राह्यं च विषयजातमसदपरमार्थमिष्यतां स्वीक्रियतामित्यर्थः । जागरितादौ विषयाकारबुद्धिवृत्तीनां स्फुरणानुगुण्ठितत्वात्, सर्ववृत्त्युत्पत्तिस्थितिविनाशसाक्षितया स्फुरणस्यैकस्य नित्यस्यान्यस्यावश्यमाश्रयणीयत्वात्, जाग्रत्यप्यात्मचैतन्यं नित्यमेव । तथा विषयाणां वृत्तिसमकालमेव स्फुरणाद्विषयव्यभिचारेऽपि स्फुरणाव्यभिचारात्तस्य विषयानिरूप्यत्वान्निर्विषयत्वं च सिद्धमिति भावः ॥ ८ ॥

---

(१) सद्वितीय—पाठ. । (२) बृ. उ. ४. ३. २३.

रूपवत्त्वाद्यसत्त्वान्न दृष्ट्यादेः कर्मता यथा ।
एवं विज्ञानकर्मत्वं भूम्नो नास्तीति गम्यते ॥ ९ ॥

इति सूक्ष्मताव्यापिताप्रकरणम् ।

ननु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्यैवात्मनो दर्शनादिकर्मत्वोक्तेर्दृश्यत्वाद्रशनाभुजङ्गादिवदसत्त्वप्राप्तिरित्याशङ्क्य, 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्', 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' इत्यादिश्रुतिविरोधात्, रूपादिहीनस्य दर्शनाद्यविषयत्वात्, 'द्रष्टव्यः' इत्यादिश्रुतिरर्थेन तव्येन योगाद्दर्शनाद्यर्हत्वोपदेशमुखेनानात्मप्रवणतात्याजनार्थेत्याह—रूपवत्त्वादिति ।

यथा 'द्रष्टव्यः' इत्यादिवशान्न ज्ञानकर्मत्वं, एवं 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इत्यत्रापि प्रागुपन्यस्तश्रुतिविरोधात् 'यत्रान्यन्न पश्यत्यात्मानमेव पश्यति' इति स्वात्मदर्शनविधिपरत्वकल्पनायोगाद्भूम्नो ब्रह्मणो विज्ञानकर्मत्वं नास्तीति गम्यते निश्चीयत इत्यर्थः ॥ ९ ॥

इति नवमं सूक्ष्मताव्यापिताप्रकरणम् ॥ ९ ॥

---

(१) बृ. उ. २. ४. ५. (२) कठ. उ. ३. १५. (३) मुं. उ. ३. १. ८.
(४) छां. उ. ७. २४. १.

## १० दृशिस्वरूपपरमार्थदर्शनप्रकरणम् ।

दृशिस्वरूपं गगनोपमं परं
सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं
तदेव चाहं सततं विमुक्त ॐ ॥ १ ॥

दृशिस्तु शुद्धोऽहमविक्रियात्मको
न मेऽस्ति कश्चिद्विषयः स्वभावतः ।
पुरस्तिरश्चोर्ध्वमधश्च सर्वतः
संपूर्णभूमा त्वज आत्मनि स्थितः ॥ २ ॥

इदानीं पूर्वप्रकरणे युक्त्या व्यवस्थापितमात्मनो निर्विषयज्ञानस्वभावत्वं स्वानुभवाभिनयेन प्रकटयन्नविषयत्वेनैवात्मज्ञानं भवतीति द्रढयितुं प्रकरणान्तरमारभते—दृशिस्वरूपमिति ।

सकृद्विभातमेकदैव विस्फुरितम्, सदैव स्पष्टं भासमानमिति यावत् । यदेवंविधमक्षरं ब्रह्म, तदेवाहं सततं भवामि, अतो विमुक्तः । ॐ इत्यभ्यनुज्ञार्थं ॐकारः, उक्तस्वरूपमोंकारद्वारा मुमुक्षुबुद्ध्यभिव्यक्तं भवतीति सूचयितुं ॐकारनिर्देशः ॥ १ ॥

ननु नाकाशवदलेपकत्वं दृशेः संगच्छते—दृश्यसंबन्धात्, अशुद्धिविक्रियादिदोषसंभवात्—इत्याशङ्क्य दृशेरात्मस्वरूपत्वात्, तस्य च नित्यशुद्धत्वादेः श्रुत्यैव निर्धारणात्, नैवमित्यभिप्रेत्य श्रुतिसिद्धमर्थं प्रकटयति—दृशिस्तु शुद्ध इति ।

---

( १ ) तुलय—शिवगीता १ ७ ( २ ) सुपूर्ण'–पाठ । ' सुपूर्णभूमाहमितीह भावय '–मुक्ति॰ उ॰ २ ७४

अजोऽमरश्चैव तथाऽजरोऽमृतः
स्वयंप्रभः सर्वगतोऽहमद्वयः ।
न कारणं कार्यमतीव निर्मलः
सदैकतृप्तश्च ततो विमुक्त ॐ ॥ ३ ॥

अहं तु दृशिः ज्ञानस्वरूप इत्यन्वयः । अतः परमार्थतः शुद्धः, अशुद्ध्यादेरज्ञाननिबन्धनत्वात्, तस्य चाभासत्वादिति भावः । 'शुद्धमपापविद्धम्' इति मन्त्रवर्णात् । यतश्चाविक्रियात्मकः विक्रियात्मकात्प्राणादेरन्यः 'अप्राणो ह्यमनाः शुभ्रः', 'अस्थूलमनण्वह्रस्वमदीर्घम्', इत्यादिश्रुतेरतोऽपि शुद्ध इत्यर्थः । 'न तदश्नाति किंचन न तदश्नाति कश्चन' इति श्रुतेर्नात्मनो विषयसंसर्ग इत्याह—न मेऽस्तीति । स्वभावतः परमार्थतः । अनेन विक्रियाहेतुविषयाभावादप्यविक्रिय इत्युक्तं भवति । विषयाभावेनाद्वयात्मत्वे भूमवाक्यशेषमर्थतः पठति—पुरस्तिरश्चेति । 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नि' इति स्वरूपावस्थानमनन्याधीनमुपन्यस्य तदुपपादनायेदंकारास्पदं सर्वं पूर्वादिविभागेनाधरोत्तरादिविभेदेन चोपलभ्यमानं भूमैवेति प्रतिपाद्य, अहंकारास्पदस्य देहादिबुद्धिपर्यन्तस्य तर्हि भूम्नो भेद इति शङ्कायामहंबुद्धिमाह्यमपि भूमैवेति मध्ये निर्दिश्य, इदमनिदमात्मकस्य सर्वस्य भूम्नोऽन्यत्वाभावे भेदकाभावात्प्रत्यगात्मैव भूमेति 'आत्मैवेदं सर्वम्' इत्यन्तेन संपूर्णभूमा छान्दोग्ये दर्शित इत्यर्थः । अजोऽहमाविर्भाववर्जितो यत आत्मनि स्वे महिम्नि स्थितो नान्याधीन इत्यर्थः ॥ २ ॥

आत्मनो जन्मजरादिविक्रियाभावेन कूटस्थाद्वयस्वाभाव्यप्रतिपादनपराः श्रुतीः स्वरूपतोऽर्थतश्च पठति—अजोऽमर इति ।

---

(१) ई. उ. ८. (२) मु. उ. २. १. २. (३) बृ. उ. ३. ८. ८. (४) छां. उ. ७. २४. १. (५) छां. उ. ७. २५. २. (६) छां. उ. ७. २५. २.

सुषुप्तजाग्रत्स्वपतश्च दर्शनं
न मेऽस्ति किंचित्तु मतेर्हि मोहनम् ।
स्वतश्च तेषां परतोऽप्यसत्त्वत-
स्तुरीय एवास्मि सदादृगद्वयः ॥ ४ ॥

तथाच श्रुतयः–' अजो नित्यः शाश्वतोयं पुराणः ', ' स वा एष महानज आत्मा ', ' अजरोऽमरोऽमृतोऽभयो ब्रह्म ' इति । ' अत्रायं पुरुषः स्वयंज्योतिः ', ' तच्छुभ्रं ज्योतिषां ज्योतिः ', ' नित्यं विभुं सर्वगतं सुसूक्ष्मम् ', ' एको देवः ', ' एकमेवाद्वितीयम् ' इति । ' तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् ' इत्यादिश्रुत्यर्थमाह—न कारणं कार्यमिति । निर्मलः ' निरञ्जनः परमं साम्यमुपैति ' इतिश्रुतेः । एकतृप्तः एकेन निजानन्देनैव तृप्त इत्यर्थः । ' आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ', ' आनन्दरूपममृतं यद्विभाति ' इत्यादिश्रुतिभ्यः । ' विमुक्तश्च विमुच्यते ' इतिश्रुतिमाश्रित्याह—ततो विमुक्त इति । यत एवंलक्षणस्ततो विमुक्त एव । सदेतिपदं सर्वत्रानुषञ्जनीयम् । यदाचार्येणोक्तं मम स्वरूपं, तत्तथैवेति शिष्योऽनुमन्यत ओमितिपदेनेत्यर्थः ॥ ३ ॥

ननु स्थानत्रयेऽन्यथान्यथा प्रथमानस्य कथमविक्रियात्मकत्वमित्यत आह—सुषुप्तेति ।

सुषुप्तश्चासौ जाग्रच्च स चासौ स्वपंश्च सुषुप्तजाग्रत्स्वपन्, तस्य सुषुप्त-

---

(१) 'त्वमिवेह—पाठोऽयं टीकासंमतोऽपि क्लिष्ट एव । (२) कठ. उ. २. १८. (३) बृ. उ. ४. ४. २२. (४) बृ. उ. ४. ४. २५. (५) बृ. उ. ४. ३. ९. (६) मुं. उ. १. १. ६. (७) मुं. उ. २. २. ९. (८) श्वे. उ. ६. ११. (९) छां. उ. ६. २. १. (१०) बृ. उ. २. ५. १९. (११) मुं. उ. ३. १. ३. (१२) तै. उ. २. ९. (१३) मुं. उ. २. २. ७. (१४) कठ. उ. ५. १.

शरीरबुद्धीन्द्रियदुःखसंततिर्-
न मे न चाहं मम निर्विकारतः ।
असत्त्वहेतोश्च तथैव संतते-
रसत्त्वमस्याः स्वपतो हि दृश्यवत् ॥ ५ ॥

जाग्रत्स्वपतो मे मम स्वमिवात्मीयमिदं व्यवहारे किंचिद्दर्शनं नास्ति । स्वमिव स्वरूपभूतमिवेति वा । किंतु मोहनमविवेकाविद्याध्यारोपितं जाग्रदादिदर्शनमिति योजना । तत्र हेतुमाह—स्वतश्चेति । तेषां जाग्रत्स्वप्नसुषुप्तिदर्शनानां, जाग्रदाद्यवस्थारूपाणां वा स्वतश्च परतोऽप्यसत्त्वतोऽसत्त्वादित्यक्षरयोजना । नहि तेषां स्वतोऽन्यनिरपेक्षं सत्त्वं संभाव्यते, चकारात्स्फुरणं च, आगमापायित्वेन रज्जुसर्पवदारोपितत्वनिश्चयात् । तथा परतोऽपि न सत्त्वं स्फुरणं च संभाव्येते । परं चैतन्यं स्यात् । नहि तेनात्मना सत्त्वादिकमेषां संभवति, प्रत्यक्पराग्भावेन विरुद्धस्वभावयोस्तादात्म्यानुपपत्तेः, तत्कल्पनायाश्च भ्रान्तिमात्रत्वादित्यर्थः । प्राज्ञस्तैजसो विश्व इत्येते तत्तदवस्थावत्त्वेन भासमाना न मम स्वरूपमिति भावः । तर्हि किंस्वरूप आत्मेति तदाह—तुरीय एवास्मीति । विश्वादित्रयापेक्षया परतो गम्यमानत्वाच्चतुर्थ इत्यर्थः । तस्य लक्षणं—सदादृगिति । सर्वावस्थाद्रष्टेत्यर्थः । विश्वादीनां स्वस्वावस्थामात्रद्रष्टृत्वादयं ततो व्यतिरिक्तः । स्थूलसूक्ष्मक्रमेण विविच्यान्वेषणदशायां विश्वादिस्थानत्रयापोहेनावसीयमानत्वात्तुरीय इत्युच्यते, न पुनर्वस्तुतस्तुरीयत्वमस्तीति द्योतयति—अद्वय इति । निर्विशेष एव सदाऽहमस्मीत्यर्थः ॥ ४ ॥

कथमात्मनो निर्विशेषत्वं शरीरादिसंबन्धस्य प्रत्यक्षत्वात् ?—इत्यत आह—शरीरेति ।

---

(१) 'संततेर्न—पाठः ।

इदं तु सत्यं मम नास्ति विक्रिया
विकारहेतुर्न हि मेऽद्वयत्वतः ।
न पुण्यपापे न च मोक्षबन्धने
न चास्ति वर्णाश्रमताऽशरीरतः ॥ ६ ॥

शरीरादिसंततेर्न मदात्मत्वं मदीयत्वं वा परमार्थतोऽस्तीत्यर्थः । तत्र हेतुः—मम निर्विकारत इति । न ह्यविक्रियं वस्त्वागमापायिशरीराद्यात्मना परिणमते संसृज्यते वा, येन तत्स्वरूपता तद्धर्मता वा भवेदित्यर्थः । हेत्वन्तरमाह—असत्त्वहेतोश्च तथैव संततेरिति । कुतोऽसत्त्वमित्यत आह—असत्त्वमस्या इति । स्वपतः स्वप्नावस्थाया यथा दृश्यं मिथ्या, तथास्याः संततेर्दृश्यत्वादेवासत्त्वमित्यर्थः । हिशब्दः स्वप्नदृश्यस्य मिथ्यात्वप्रसिद्धिद्योतनार्थः ॥ ५ ॥

शरीरादिसंततेर्दृश्यत्वेन चेन्मिथ्यात्वं, तर्हि शुद्धत्वाविक्रियत्वादेरपि दृश्यत्वान्मिथ्यात्वं किं न स्यात् ?—इत्यत आह—इदं त्विति ।

मम विक्रिया नास्ति, न मे विकारहेतुरप्यस्ति, ततः पूर्वनिरूपिताद्द्वयात् द्वयाभावाद्धेतोः स्वतः परतो वा ममात्मनो विक्रिया नास्तीति यदिदं तत्सत्यमित्यर्थः । तुशब्दः शङ्काव्यावृत्त्यर्थः । अविक्रियत्वादिना विक्रियाभावाद्युपलक्षितस्वरूपस्याभिप्रेतत्वात्तस्मिंश्च हेत्वसिद्धेर्न शङ्कावकाश इत्यर्थः । कर्म वा, तत्फलं वा, तद्रसो वा, कर्मादिसाधनं वा विक्रियाहेतुर्भविष्यतीति कुतोऽद्वयत्वमित्याशङ्क्याह—न पुण्येति । पुण्यादि नेति प्रतिज्ञाया हेतुः—अशरीरत इति । अशरीरत्वं तु पूर्वश्लोके प्रतिपादितमेवेत्यर्थः ॥ ६ ॥

---

(१) विक्रियादिर्हे—पाठः ।

अनादितो निर्गुणतो न कर्म मे
फलं च तस्मात्परमोऽहमद्वयः ।
यथा नभः सर्वगतं न लिप्यते
तथा ह्यहं देहगतोऽपि सूक्ष्मतः ॥ ७ ॥

ननु यद्यपि शरीरोपादानत्वेन तद्धर्मकत्वेन चात्मनः शरीरत्वाभावः, तथापि शरीरेणास्ति संबन्ध उपलभ्योपलम्भकभावलक्षणः—इति कथमशरीरता, इत्याशंक्य, नैतावता सशरीरत्वेन कर्मादियोगिता, इत्यभिप्रेत्य पुण्यापुण्यादिसंबन्धवैधुर्यमुपपादयति—अनादित इति ।

यत् कर्मसमवायि तदादिमद्दृष्टं, यथा रथशरीरादि । नच परमाणुमनसोरनैकान्तः, मनस उत्पत्तिश्रवणात्, परपरिकल्पितपरमाण्वनङ्गीकाराच्च । तथो यत् कर्मसमवायि, तत्सगुणं दृष्टम्, यथोक्तमेवोदाहरणम् । तथा च सगुणत्वं सादित्वं च व्यापकं प्रत्यगात्मनो व्यावर्तमानं तस्य क्रियावत्त्वं स्वव्याप्यमादाय निवर्तत इति क्रियावत्त्वाभावात्तत्साध्यपुण्याद्यसंभव इति भावः । कर्म पुण्यादिलक्षणं, फलं—तत्साध्यं सुखदुःखादिरूपं फलं—च न मेऽस्तीत्यन्वयः । तस्मादहं परम उत्तमः संसारिभ्यो विलक्षणः, अद्वयो निर्विशेषः । क्रियावत्त्वाभावात्तत्साध्यपुण्याद्यसंभव इति विलक्षणत्वमुपपादयति—यथेति । देहगतो देहप्राप्तः, तत्रोपलभ्यमानोऽपीत्यर्थः । सूक्ष्मतोऽमूर्तत्वादित्यर्थः । तथा चाह भगवान्—

'अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते[1]' [2] ॥ इति ॥७॥

---

(१) यथा—इति पाठः सर्वत्रोपलभ्यते, किंतु 'तथा' इत्येव युक्ततरो भाति ।
(२) भ. गी. १३. ३१–३२.

सदा च भूतेषु समोऽस्मीश्वरः
क्षराक्षराभ्यां परमो ह्यथोत्तमः ।
परात्मतत्त्वं च तथाद्वयोऽपि सन्
विपर्ययेणाभिमतस्त्वविद्यया ॥ ८ ॥

ननूपलब्ध्यधिष्ठानानां देहादीनां वैषम्यदर्शनात्तत्रोपलभ्यमानस्यात्मनोऽपि तत्कृतवैषम्यसंभवात्, कुतः परमात्मत्वं परिपूर्णता च ?—इत्याशंक्य अयं तारतम्यप्रतिभासोऽविद्याविलसितः, न परमार्थत इत्याह—सदा चेति।
ईश्वर इत्यनेनोपाधिवश्यत्वाभावं सूचयति । अतो न मे देहादिकृतं वैषम्यमित्यर्थः । ईश्वर इत्युक्ते तस्येशितव्यापेक्षत्वात्सद्वयत्वशंका स्यादत आह—क्षराक्षराभ्यामिति । अथवेश्वरत्वमेव साधयति—क्षराक्षराभ्यामिति । हि यस्मात्क्षराक्षराभ्यां परमः, अथ तस्मादहमुत्तम इत्यन्वयः । क्षरति नश्यतीति क्षरः कार्यवर्गः, न क्षरतीत्यक्षरं कारणं मायाशबलितं चिद्वस्तु; ताभ्यां परमो व्यतिरिक्तः कार्यकारणादिभेदकल्पनाधिष्ठानभूत इत्यत उत्तमः पुरुषोत्तम इत्यर्थः । यत उत्तमोऽतः परेषामात्मना तत्त्वं स्वरूपमस्मिन्निति परमात्मतत्त्वश्च अहमेव सर्वात्मा चेत्यर्थः । एवंविधश्चेदात्मा, कथं तर्हि तत्र विपरीतस्वरूपप्रतिभास इत्यत आह—तथाद्वयोऽपि सन्निति । उक्तोत्तरमेतत् । अविद्याविलसित एव विपर्यय इत्यर्थः । तथा च भगवतोक्तम्—

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

(१) 'तत्त्वश्च—टीकाभिमतः पाठः । (२) 'मितस्त्व'—पाठः ।

अविद्यया भावनया च कर्मभि-
र्विविक्त आत्माऽव्यवधिः सुनिर्मलः ।
दृगादिशक्तिप्रचितोऽहमद्वयः
स्थितः स्वरूपे गगनं यथाऽचलम् ॥ ९ ॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥' इति ॥ ८ ॥

तर्हि किमविद्यासंबन्धो वर्तते ? नेत्याह—अविद्ययेति ।

अविद्या मूलाज्ञानं, भावना तत्कृतो देहाद्यभिमानः, कर्माणि तत्पूर्वकाणि पुण्यपापलक्षणानि, तैर्विविक्तस्तत्संस्पर्शशून्यः । कुतः ? यस्मादव्यवधिर्व्यवधानं वस्त्वन्तरकृतोऽवच्छेदस्तद्रहितोऽव्यवधिः । अयमाशयः—चित्प्रकाशस्तावदात्मेति श्रुतिस्मृतीतिहासपुराणन्यायसिद्धम्, अविद्या च जडाऽप्रकाशात्मिका । अतस्तयोर्विरुद्धस्वभावयोः परमार्थतः संबन्धो दुर्घट एव, इति स्थिते, अनवच्छिन्नचैतन्यमात्रं तावन्नाविद्याश्रय उपपद्यते, तथा सत्यणुमात्रस्यापि प्रकाशानुपपत्तिप्रसङ्गात्, नापि केनचिदवच्छिन्नभागविशेषम्, अविद्याव्यतिरिक्तस्य तस्य कल्पनाया अनिबन्धनत्वात् । तस्मादविद्यातिरिक्तव्यवधानाभावादव्यवधित्वे सति दिवान्धपरिकल्पितान्धकारवदात्मन्यविद्यादिकल्पनमिति । अत एव सुनिर्मलः सर्वाशङ्कितदोषरहित इत्यर्थः । एवंविधे आत्मनि कथं द्रष्टा श्रोता मन्ता बोद्धेत्यादिव्यवहारः ?—इत्याशङ्क्याऽविद्याध्यस्तान्तःकरणपरिणामरूपदृगादिशक्तिसंबन्धादेव द्रष्टृत्वाद्युपचयप्रतिभासः, न परमार्थत इत्याह—दृगादीति । स्पष्टमन्यत् ॥ ९ ॥

---

( १ ) भ. गी. १५ १६—१८. ( २ ) 'चयं प्रति'—पाठ । तुलय—१८.४४. टीकाम् ।

अहं परं ब्रह्म विनिश्चयात्मदृङ्
न जायते भूय इति श्रुतेर्वचः ।
न चैव बीजेऽप्यसति प्रजायते
फलं न जन्मास्ति ततो ह्यमोहता ॥ १० ॥
ममेदमित्थं च तथेदमीदृशं
तथाहमेवं न परो न चान्यथा ।
विमूढतैवं न जनस्य कल्पना
सदा समे ब्रह्मणि चाद्वये शिवे ॥ ११ ॥

एवंविधात्मतत्त्वपरिज्ञाने सति कैवल्यं फलतीत्याह—अहं परं ब्रह्मेति । अहं परं ब्रह्मेति निश्चयेनात्मनि दृक् ज्ञानं यस्य स तथोक्तः । स भूयः पुनर्न जायते शरीरवान्न भवति इति श्रुतेर्वचो विद्यत इति शेषः । तथा च श्रुतिः—'स तु तत्पदमाप्नोति यस्माद्भूयो न जायते'[३], 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः'[४], 'अथ सोऽभयं गतो भवति'[५], 'ब्रह्म वेद ब्रह्मैव भवति'[६], इति च । श्रुतिसिद्धेऽर्थे युक्तिमप्याह—न चैवेति । उक्तं सामान्यन्यायं प्रकृते योजयति—न जन्मास्तीति । हि यस्मादमोहता प्रागुक्तवर्त्मना मोहराहित्यं ततो हेतोर्न जन्मास्तीति योजना । मोहपदवाच्याऽविद्यामूलत्वाज्जन्मादिविकारस्य तदभावेऽभाव एवेत्यर्थः ॥ १० ॥

मोहकार्यत्वात्संसारस्य मोहनिवृत्त्या निवृत्तिरेवेत्युक्तम् । तत्र किमात्मकं मोहकार्यमित्यपेक्षायां तदाह—ममेदमिति ।

प्रथमं देहद्वयेऽहंकारः, ततस्तद्बाह्यार्थकल्पनमिदमिति । तत्र शोभनाद्यध्यास इत्थमिति । ततो ममेदं, तच्च ईदृशं, तथा न ममेदमित्यादिकल्पना ।

---

(१) 'जे त्वसति—पाठः । (२) 'चा'—पाठः । (३) कठ. उ. ३. ८. (४) कठ. उ. ३. ११. (५) तै. उ. २. ७. (६) बृ. उ. ३. २. ९.

यदद्वयं ज्ञानमतीवनिर्मलं
महात्मनां तत्र न शोकमोहता ।
तयोरभावे न हि जन्म कर्म वा
भवेदयं वेदविदां विनिश्चयः ॥ १२ ॥
सुषुप्तवज्जाग्रति यो न पश्यति
द्वयं तु पश्यन्नपि चाद्वयत्वतः ।
तथा च कुर्वन्नपि निष्क्रियश्च यः
स आत्मविन्नान्य इतीह निश्चयः ॥ १३ ॥

तथा परोऽप्येवं, नैवम्, अन्यथा वा, नास्ति वा, अस्ति वा इति । विमूढता मम परस्य वा, सुज्ञता च । तथा च—इत्येवं जनस्य जन्मादियोगिनोऽनाद्यज्ञानतिरोहितात्मस्वभावस्य या एवंविधा कल्पना सा सदा समे ब्रह्मण्यद्वये शिवे परमानन्दरूपे न च नास्त्येवेत्यर्थः ॥ ११ ॥

एवं विचित्रस्य संसारस्यात्मतत्त्वज्ञानेन तदज्ञाननिवृत्त्या निवृत्ति-मुक्त्वा स्तुवयति—यदद्वयमिति ।

अद्वयमद्वयात्माकारमतीवनिर्मलं असम्भावनाविपरीतभावनादिप्रतिबन्ध-रहितं यज्ज्ञानं तत्र तस्मिन्सति महात्मनां ब्रह्मभूतानां शोकमोहता संसा-रित्वं नास्त्येवेत्यर्थः । तथा च मन्त्रः—'तत्र को मोहः कः शोक एकत्वम-नुपश्यतः' इति । तयोः शोकमोहयोरभावे तदुपलक्षितस्य तत्कारणस्याज्ञा-नस्य निवृत्तौ बीजाभावे फलाभावन्यायेन जन्मादि पुनर्न हि भवेदिति वेदार्थविदां विनिश्चय इत्यर्थः । तथाच श्रुतिः—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे'॥ इति ॥ १२ ॥

एवमुक्तस्यात्मविदः स्वरूपमाह—सुषुप्तवदिति ।

---

( १ ) कर्म जन्म-इत्यपि पाठः । ( २ ) ई. उ. ७. ( ३ ) मुं. उ. २. २. ८.

इतीदमुक्तं परमार्थदर्शनं
मया हि वेदान्तविनिश्चितं परम् ।
विमुच्यतेऽस्मिन् यदि निश्चितो भवे-
न्नलिप्यते व्योमे[1] इवेह कर्मभिः ॥ १४ ॥

इति दृशिस्वरूपपरमार्थदर्शनप्रकरणम् ।

जाग्रति विश्वावस्थायां द्वयं द्वैतप्रपञ्चं प्राग्वासनावशात्स्फुरत्पश्यन्नपि विशेषतो न पश्यति । किंतु सुषुप्तवत्प्रविलीनप्रपञ्चप्रत्यगात्मस्वरूपेणैव पश्यतीति योजना । तत्र हेतुः—अद्वयत्वत इति । द्वैतस्य बाधितत्वादित्यर्थः । तथा च यथापूर्वं स्नानशौचभिक्षाटनादि कुर्वन्नपि निष्क्रियो निर्विकारोऽकर्त्रात्मस्वभावाविर्भावात् । य एवंविधः स आत्मविद्विक्षेपदशायामप्यप्रच्युतात्मयाथात्म्यदर्शनत्वाद्ब्रह्मविदामुत्तमोऽयमेव, नान्यः शास्त्रार्थज्ञोपि यो व्यवहारकाले ज्ञातृत्वकर्तृत्वाद्यभिमानवानित्यर्थः । इति इत्थमिह वेदान्तशास्त्रे विनिश्चयः ॥ १३ ॥

शास्त्रन्यायानुसारेण स्वानुभवं प्रदर्श्येदानीमस्मिन्दर्शने परिनिष्ठितस्य कृतकृत्यता भवतीति दर्शयन् परानुग्रहाय प्रकरणनिर्माणे प्रवृत्तिरिति सूचयति—इतीदमुक्तमिति ।

वेदान्तविनिश्चितमित्युक्तदर्शनस्य परमार्थविषयत्वे प्रमाणमुक्तम् । व्योम इवेति विसंधिर्वृत्तपूरणार्थः ॥ १४ ॥

इति दशमं दृशिस्वरूपपरमार्थदर्शनप्रकरणम् ॥ १० ॥

---

(१) व्योमवदेव—पाठः ।

## ११ ईक्षितृत्वप्रकरणम्

ईक्षितृत्वं स्वतःसिद्धं जन्तूनां च ततोऽन्यता ।
अज्ञानादित्यतोऽन्यत्वं सदसीति निवर्त्यते ॥ १ ॥
एतावद्ध्यमृतत्वं न किंचिदन्यत्सहायकम् ।
ज्ञानस्येति ब्रुवच्छास्त्रं सलिङ्गं कर्म बाधते ॥ २ ॥

ब्रह्मात्मैक्यज्ञानमात्रनिष्ठो मुच्यत इत्युक्तं, तन्नोपपद्यते कर्मसाध्यत्वान्मुक्तेः, कर्मसहितज्ञानसाध्यत्वाद्वा । तथा ज्ञानस्य वेदान्तविनिश्चयत्वमुक्तं, तदपि संदिग्धमनुमानादिनाप्युपपत्तेरितीमां शङ्कां परिहर्तुं प्रकरणान्तरमारभते—ईक्षितृत्वमित्यादिना ।

तत्रादौ ज्ञानादेव मुक्तिः, ज्ञानं च वेदान्तमहावाक्यादेव नानुमानादिनेत्येतत्साधयति—अन्यत्वं सदसीति निवर्त्यत इति । त्वं तत्सच्छब्दलक्षितं ब्रह्मैवासि, न संसारीति वाक्योपदेशेनैव सच्छब्दार्थाद्ब्रह्मणोऽन्यत्वं जीवस्य निवर्त्यत इत्यर्थः । संसारिणो जीवस्याशुद्धस्य कथं तद्विपरीतब्रह्मत्वं संभाव्यत इत्यत आह—ईक्षितृत्वमिति । सर्वेषामेव जन्तूनां प्राणिनां चिद्रूपत्वमेवेक्षितृत्वं, तत्स्वतःसिद्धं स्वाभाविकं रूपम् । चकारः शङ्कानिवृत्त्यर्थः । कर्तृत्वभोक्तृत्वादेरपि स्वाभाविकत्वशङ्का न कार्या, स्वरूपव्यभिचारादित्यर्थः । कुतो ज्ञानादेवान्यत्वनिवृत्तिरूपा मुक्तिरित्यत आह—अज्ञानादित्यत इति । इति यतोऽन्यतान्यत्वमज्ञाननिबन्धनं, न परमार्थत इत्यर्थः । अज्ञानकल्पितत्वाद्ब्रह्मविपरीतरूपत्वस्य, स्वतश्चिन्मात्रस्वभावत्वादज्ञाननिवृत्तिलक्षणत्वाच्च मोक्षस्य, तस्य च तत्त्वज्ञानमात्रापेक्षणात् । ज्ञानस्य च यथोक्तवाक्यादेवोत्पत्तेर्न मानान्तरं साधनान्तरं चात्र मृग्यत इति भावः ॥ १ ॥

कर्मणो मोक्षहेतुत्वकल्पनं ज्ञानसहायत्वेन नोपपद्यते, श्रुतियुक्तिविरोधादित्याह—एतावद्धीति ।

सर्वेषां मनसो वृत्तमविशेषेण पश्यतः ।
तस्य मे निर्विकारस्य विशेषः स्यात्कथंचन ॥ ३ ॥
मनोवृत्तं मनश्चैव स्वप्नवज्जाग्रतीक्षितुः ।
संप्रसादे द्वयासत्त्वाचिन्मात्रः सर्वगोऽव्ययः ॥ ४ ॥

'एतावदरे खल्वमृतत्वम्' इत्येतदमृतत्वसाधनमात्मज्ञानमेवेत्येतावच्छब्देनावधारयन्ती श्रुति शास्त्रमुच्यते । तज्ज्ञानस्य किंचिदन्यत्र सहायभूतमस्तीति ब्रुवत्सलिङ्ग ससाधन कर्म बाधत इति योजना । अद्वैतात्मज्ञानादूर्ध्वं कर्महेतुजात्याद्यभिमानाभावे, कुत कर्म यज्ज्ञानस्य मोक्षफले सहायभूतं भवेदिति भाव. ॥ २ ॥

इदानीं 'ईक्षितृत्वम्' इत्यत्रोक्त स्वाभाविकं चिद्रूपत्व प्रपञ्चयन् ज्ञानिन कर्म न घटत इत्येतदुपपादयति—सर्वेषामिति ।

विशेष. कर्तृत्वादिलक्षणो विहितकर्मसाधनजात्याद्यभिमानलक्षणश्चेत्यर्थ. । कथचनेत्याक्षेपार्थ —न कथंचन मे विकारः स्यादित्यर्थ । कुत इत्यत आह—अविशेषेणेति । अभिमानशून्यतया केवल साक्षिमात्रेण पश्यत इत्यर्थ. ॥ ३ ॥

कथ मनोवृत्त पश्यत्यविशेषेणात्मा ?—इत्यपेक्षाया दृष्टान्तपूर्वक तदुपपादयश्चिदेकरसत्वमात्मनो निगमयति—मनोवृत्तमिति ।

स्वप्नदशाया सवृत्तिक मन एव पश्यत्यात्मा यथा बाह्यविषयाभावात्, तथा जाग्रति जागरणदशाया मनोवृत्त मन-प्रचारं, मनश्च तदाश्रय पश्यत: कथ विशेष स्यादिति पूर्वश्लोकेनान्वयः । जाग्रद्दशायामपि विषयाकारवृत्तिमन्मनोव्यतिरेकेण नात्मना किमप्युपलभ्यत इति भाव । तर्ह्येवविधमनोदर्शनमेव स्वाभाविको विशेष इत्यत आह—संप्रसाद इति ।

---

(१) बृ. उ. ४ ५. १५. (२) 'भावात्—पाठ ।

स्वप्नः सत्यो यथाऽऽबोधाद्देहात्मत्वं तथैव च ।
प्रत्यक्षादेः प्रमाणत्वं जाग्रत्स्यादाऽऽत्मवेदनात् ॥ ५ ॥
व्योमवत्सर्वभूतस्थो भूतदोषैर्विवर्जितः ।
साक्षी चेताऽगुणः शुद्धो ब्रह्मैवास्मि स केवलः ॥ ६ ॥

संप्रसादे सुषुप्तिदशायां द्वयस्य सवृत्तिकस्य मनसोऽसत्त्वाच्च तद्दर्शनमपि स्वाभाविकम्, 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इति श्रुतेः । तथा चात्मा चिन्मात्रः सर्वगोऽपरिच्छिन्नोऽव्ययो नित्य इति सिद्धमित्यर्थः ॥ ४ ॥

ननु यद्येवं, तदा बाह्याभ्यन्तरद्वैतस्याभाव एवेति युक्तं स्यात् । तन्नोपपद्यते, प्रत्यक्षादिप्रमाणविरोधात्, लौकिकवैदिकव्यवहारविलोपप्रसङ्गाच्चेति चेन्नेत्याह—स्वप्न इति ।

यथा आबोधात् प्रबोधपर्यन्तं स्वप्नः सत्यो लौकिकवैदिकव्यवहारास्पदतयावभासते, तथैव जाग्रज्जाग्रदवस्थायामपि देहात्मत्वं प्रत्यक्षादेः प्रमाणत्वं च सर्वव्यवहाराङ्गं स्यात् । कियत्पर्यन्तमित्यत आह—*आत्मवेदनादिति* । *आ आत्मवेदनादिति पदच्छेदः । आत्मतत्त्वसाक्षात्कारात्प्रागेव सर्वो व्यवहारः, तस्मिन्सति व्यवहाराभाव इष्ट एवेति भावः* ॥ ५ ॥

अव्यवहार्यस्वरूपमाविष्करोति—व्योमवदिति द्वाभ्याम् ।

चेता चिद्रूपः । साक्षीति भूतदोषराहित्ये हेतुः । व्योमवत्सर्वभूतस्थ इत्यसङ्गत्वमुक्तम् । सर्वभूतेष्वहमाकारवृत्तावभिव्यक्त्यपेक्षया सर्वभूतस्थ इत्युच्यते । एतच्च 'अहं मनुरभवं सूर्यश्च' इति तत्सर्वात्मत्वाभिनयाभिप्राय इति द्रष्टव्यम् । शुद्धोऽज्ञानरहितः, केवलोऽवस्थात्रयरहितः, ब्रह्मैव पूर्ण एवास्मीत्यर्थः ॥ ६ ॥

---

(१) श्वे. उ. ६. ११. (२) 'वास्मीति के'—पाठः। (३) बृ. उ. ४. ३. २३. (४) बृ. उ. १.४.१०. (५) 'तिवत् सर्वात्मत्वाभिमानवामदेवाभिप्रायः—पाठः ।

नामरूपक्रियाभ्योऽन्यो नित्यमुक्तस्वरूपवान् ।
अहमात्मा परं ब्रह्म चिन्मात्रोऽहं सदाऽद्वयः ॥ ७ ॥
अहं ब्रह्मास्मि कर्ता च भोक्ता चास्मीति ये विदुः ।
ते नष्टा ज्ञानकर्मभ्यां नास्तिकाः स्युर्न संशयः ॥ ८ ॥
धर्माधर्मफलैर्योग इष्टोऽदृष्टो यथाऽऽत्मनः ।
शास्त्राद्ब्रह्मत्वमप्यस्य मोक्षो ज्ञानात्तथेष्यताम् ॥ ९ ॥

केवलत्वं व्यनक्ति—नामरूपेति ।

वाच्यवाचकतद्व्यापारात्मकप्रपञ्चविहीन इत्यर्थः । सुगममन्यत् ॥ ७ ॥

कथमद्वयत्वमात्मनः संगच्छते? अहं ब्रह्मास्मीतिवत्, अहं कर्तास्मीति चानुभवस्य प्रमाणमूलत्वादिति ज्ञानकर्मसमुच्चयवादिनो भेदाभेदमतानुसारिणः तान् कुत्सयन्नद्वैतात्ममतं द्रढयति—अहं ब्रह्मास्मीति ।

विरुद्धार्थप्रतिपादकत्वायोगाच्छास्त्रस्य, विरुद्धं तत्त्वमवगच्छतां कर्मकाण्डाज्ज्ञानकाण्डाच्च बहिर्मुखत्वान्नास्तिकत्वमेव तेषां फलिष्यतीत्यर्थः ॥ ८ ॥

ननु निन्दामात्रेण कथमद्वैतैकमतसिद्धिः?—तत्र प्रमाणस्यासंभवादित्यत आह—धर्माधर्मेति ।

आत्मनो धर्माधर्मफलैः सुखदुःखादिरूपैर्योगः संबन्धः प्रमाणान्तरैरदृष्टोऽपि यथा शास्त्रादेव 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इत्यादेरिष्टोऽङ्गीकृतः,—शास्त्रार्थविद्भिरिति शेषः—तथास्यात्मनो ब्रह्मत्वं, ज्ञानादेव मोक्षश्चेति 'ब्रह्म वेद ब्रह्मैव भवति', 'तमेव विदित्वातिमृत्युमेति

---

(१) पुण्यो पुण्येन—पाठः । ( बृ. उ. ४. ४. ५. ) ( २ ) मु. उ. ३. २. ९. ( ३ ) श्वे. उ. ३. ८.

**या माहारजनाद्यास्ता वासनाः स्वप्नदर्शिभिः ।**
**अनुभूयन्त एवेह ततोऽन्यः केवलो दृशिः ॥ १० ॥**

नान्यः पन्था विद्यतेऽयनाय'[1] इत्यादिशास्त्रादिष्यताम् । तथा च भेदकर्मणोर्निन्दितयोः शास्त्रतात्पर्यविषयत्वायोगाच्छास्त्रानुसारिभिर्यथाशास्त्रमर्थः प्रतिपत्तव्य इति भावः ॥ ९ ॥

नन्वात्मनो धर्माधर्मफलयोगः शास्त्रोक्तो मानान्तरविरोधाभावात्तथैवेति युज्यते, न तथात्मनो ब्रह्मत्वं, प्रत्यक्षदृष्टकर्तृत्वादिविरोधात्; अतः श्रुत्यनुभवयोरविरोधाय भेदाभेदावादरणीयाविति चेत्—नैवम्, कर्तृत्वादिप्रति भासस्यासत्त्वाच्छ्रुत्युक्ताद्वैतप्रतिपक्षत्वानुपपत्तेरिति सदृष्टान्तमाह—या माहारजनाद्या इति ।

'तस्य हैतस्य पुरुषस्य रूपं । यथा माहारजनं वासः' इत्यारभ्य 'यथा ऽसकृद्विद्युत्तम्'[2] इत्यन्तेन श्रुत्युक्ता या वासनास्ताः स्वप्नदर्शिभिरनुभूयन्त एव यथेत्यक्षरयोजना । महारजनं हरिद्रा तया रञ्जितं वस्त्रादि माहारजनम् । स्वप्नदशायां जाग्रद्वासनावासितस्य मनसो वातपित्तश्लेष्मदूषितरसपूर्णनाडीष्वनुगतस्यादृष्टादिसमुद्बोधितानेकवासनतया जाग्रद्दृष्टार्थाकारेण परिणममानस्य हरिद्रारञ्जितपटादिरूपसदृशतया भासमानस्य द्रष्टृदृश्यदर्शनतत्करणादिभावेन नित्यं स्वप्नद्रष्ट्रोपलभ्यमानत्वात् स्वप्नदृश्याभ्यो माहारजनादिसदृशवासनाभ्यो लिङ्गात्मसहिताभ्यो द्रष्टात्मा दृशिस्वभावो विलक्षणो लक्ष्यते । तथा कर्तृत्वादीनां दृश्यत्वादनात्मधर्मत्वमेवेति निश्चितमेवेह जाग्रदवस्थायामपि । ततः कर्तृत्वादिधर्मकाल्लिङ्गादन्यः केवलः शुद्धो दृशिरात्मेत्यर्थः ॥ १० ॥

---

(१) श्वे. उ. ३. ८; ६. १५. (२) बृ.उ.२. ३. ६. (३) 'कारण'—पाठः ।

कोशादिव विनिष्कृष्टः कार्यकारणवर्जितः ।
यथाऽसिर्दृश्यते स्वप्ने तद्वद्बोद्धा स्वयंप्रभः ॥ ११ ॥
आपेपात्प्रतिबुद्धस्य ज्ञस्य स्वाभाविकं पदम् ।
उक्तं नेत्यादिवाक्येन कल्पितस्यापनेतृणा ॥ १२ ॥

आत्मनः स्वप्नावस्थायां दृश्यविलक्षणत्वेन प्रतीतिमेव दृष्टान्तेन स्पष्टयति—कोशादिवेति ।

इवशब्दो यथाशब्दार्थे । असिरिवेति संबन्धः । यथाशब्दो यथावदित्यर्थे । यथाऽसिः खड्गः कोशात्पृथक्कृतः स्वरूपेण दृश्यते, तद्वदेवं बोद्धा आत्मा कार्यकारणवर्जितः कार्यकारणाकारमनसो लिङ्गात्पृथग्भूतः स्वप्ने यथावत् दृश्यते । दृश्यत इत्युक्ते विषयवद्दृश्यत्वान्मिथ्यात्वमित्याशङ्क्य विशिनष्टि—स्वयंप्रभ इति । स्वमहिम्नैव प्रथते, न विषयतयेत्यर्थः । यद्वा कथमवगम्यते स्वप्ने कार्यकारणविवर्जित[1] इति वीक्षाया 'अत्रायं पुरुषः स्वयंज्योतिः'[2] इति श्रुतिसामर्थ्यादित्याह—स्वयंप्रभ इति । स्वयंप्रकाश इति श्रुत्या निर्णीत इत्यर्थः । उपाधेः पृथक् स्वरूपेणावभासमात्रेऽसिदृष्टान्त इति न वैषम्यशङ्कावकाश इति द्रष्टव्यम् ॥ ११ ॥

आत्मनः कर्तृत्वादिप्रतिभासस्य स्वप्नप्रतिभासवन्मिथ्यात्वात्, शुद्ध एवात्मा ब्रह्मैवेति शास्त्रादविरोधेनैव प्रत्येतुं शक्यत्वात्, न भेदाभेदकल्पनया मनः खेदनीयमिति सिद्धेऽर्थे सोपक्रमं वाक्यं प्रमाणमाह—आपेपादिति ।

'तं पाणिना पेपं बोधयाचकार स होत्तस्थौ'[3] इति श्रुतौ सुप्तपुरुषः 'बृहत्पाण्डरवासः सोम राजन्' इत्यादिप्राणनामभिरामन्त्रितो नोत्थितः । पाणिना त्वापिष्यमाण उत्थित इति निर्धारितः, तेन प्राणेन्द्रियादिस्वरूप-

---

(१) 'विवर्जितः—पाठः । (२) बृ. उ. ४. ३. ९. (३) बृ. उ. २. १. १५.

महाराजादयो लोका मयि यद्वत्प्रकल्पिताः ।
स्वप्ने, तद्वद्द्वयं विद्याद्रूपं वासनया सह ॥ १३ ॥

लिङ्गसंघातविलक्षणः स्थूलसंघातादप्यन्य एवात्मेति प्रतिपन्नम् । अत एव जडविलक्षणत्वाज्ज्ञानस्वभावः । तस्यापेयात्प्रतिबुद्धस्य ज्ञस्य त्वंपदार्थस्य स्वाभाविकं पदं परब्रह्मलक्षणमुक्तम् । केन ? नेत्यादिवाक्येन । 'अथात आदेशो नेति नेति' इत्यारभ्य 'सत्यस्य सत्यमिति प्राणा वै सत्यं तेषा मेष सत्यम्' इत्यन्तेन वाक्येनेत्यर्थः । किंविषयेण वाक्येन ? कल्पितस्याध्यस्तस्य मूर्तामूर्ततद्वासनाश्रयरूपस्यापनेतृणा प्रतिषेधकेन—नेति नेतीति वीप्सया समस्तकारणकार्यात्मकोपाधिप्रतिषेधद्वाराऽखण्डे ब्रह्मणि पर्यवसितेनेत्यर्थः ॥ १२ ॥

'नेति नेति' इत्यादिशास्त्रेण निषिध्यमानस्य कल्पितत्वं श्रुत्यैवोपपादितमित्याह—महाराजादय इति ।

स्वप्ने स्वप्नावस्थायां महाराजादयो लोका यद्वन्मयि दृगात्मनि प्रकल्पिताः, तद्वदेव वासनया लिङ्गाश्रितया सह द्वयं रूपं मूर्तं चैवामूर्तं च मयि कल्पितं विद्यात् । तथा च श्रुतिः—'यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः' इत्युपक्रम्य 'स यत्रैतत्स्वप्नया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति' इति इवशब्देन महाराजत्वादेः स्वप्नदृश्यस्याभासतां मध्ये निर्दिश्य 'एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इत्युपसंहरन्ती शरीरमध्य एव प्राणशब्दवाच्यलिङ्गोपाधि महाराजाद्यात्मतया गृहीत्वा स्वप्नदृग्व्यवहरतीति दर्शयति । अतो न स्वप्नोपलब्धं परमार्थमित्यर्थः । तथा च वासनाश्रयलिङ्गशरीरसहितस्य मूर्तामूर्तरूपस्थूलस्यापि दृगात्मनि कल्पितत्वं तद्दृश्यत्वादुपपन्नमेवेति तात्पर्यार्थः ॥ १३ ॥

(१) बृ. उ. २. ३. ६. (२) बृ. उ. २. १. १८.

देहलिङ्गात्मना कार्या वासनारूपिणा क्रियाः ।
नेति नेत्यात्मरूपत्वान्न मे कार्या क्रिया क्वचित् ॥ १४ ॥
न ततोऽमृतताऽऽशास्ति कर्मणोऽज्ञानहेतुतः ।
मोक्षस्य ज्ञानहेतुत्वान्न तदन्यदपेक्षते ॥ १५ ॥

स्वप्नप्रपञ्चवज्जाग्रत्प्रपञ्चस्यापि प्रत्यगात्मनि कल्पितत्वे सिद्धे प्रत्यक्त्वाभिज्ञस्य कर्मासंभवः सिद्ध इत्याह—देहलिङ्गेति ।

क्रियाः कर्माणि देहलिङ्गात्मना स्थूलसूक्ष्मदेहरूपेण तदभिमानेन तदात्मतामापन्नेनात्मना कार्या अनुष्ठेयाः, न पुनस्तन्निरपेक्षेण तदभिमानहीनेन, असंभवादित्यर्थः । किंलक्षणेन ?—वासनारूपिणा, वासनाः रूपयितुं संचेतुं शीलमस्यास्तीति वासनारूपी तेन—पुनः पुनः कर्मप्रवृत्तिनिमित्तेनाविच्छिन्नेनेत्यर्थः । इदानीं मे मम नेतिनेत्यादिनोक्तात्मस्वरूपत्वाद्देहद्वयाभिमानाभावात्क्वचित्स्वप्ने वा, जागरे वा न क्रिया कार्या कर्तव्या स्वभावतो विधितो वेत्यर्थः ॥ १४ ॥

अज्ञानविलसितदेहाभिमानादेव कर्मेति तस्याज्ञानमूलत्वे सिद्धे न तेन मोक्षाशा कर्तव्येत्याह—न तत इति ।

ततस्तस्मात्कर्मणो हेतोरमृततया मोक्षभावस्याशा आशंसनं नास्ति। कुतः? अज्ञानहेतुतः—अज्ञानहेतुकत्वादविवेकपूर्वकत्वात्कर्मण इत्यर्थः । अज्ञयोर्ज्ञानकर्मणोर्विरोधाभावात्, नाज्ञाननिवृत्तिरूपे मोक्षे कर्माशा कार्या । ब्रह्मात्मनाऽवस्थानरूपस्य च परमानन्दाविर्भावलक्षणस्य मोक्षस्य चतुर्विधक्रियाफलविलक्षणत्वान्न तत्रापि कर्मापेक्षेति भाव. । कर्मणः स्वतो मोक्षहेतुत्वाभावेऽपि मोक्षहेतुज्ञानसहायतया तद्धेतुर्भविष्यतीत्याशङ्क्याज्ञाननिवृत्तौ

(१) पद्य—१७. ६०.

अमृतं चाभयं नार्तं नेतीत्यात्मा प्रियो मम ।
विपरीतमतोऽन्यद्यत् त्यजेत्तत्सक्रियं ततः ॥ १६ ॥

इति ईक्षितृत्वप्रकरणम् ।

ज्ञानमात्रस्य समर्थत्वान्न तत्र कर्मसहायताऽपेक्ष्यते । नापीतरत्र, तस्य स्वतःसिद्धत्वादित्यभिप्रेत्याह—मोक्षस्येति ॥ १५ ॥

यदि कर्मसाध्यममृतत्वं स्यात्, तर्हि स्वर्गादिवत्कृष्यादिफलवच्चानित्यं सभयं च स्यात्, तच्चानिष्टम् 'अभयं प्रतिष्ठां विन्दते' इत्यभयरूपत्वश्रुतिविरोधात्, 'अतोऽन्यदार्तम्' इति मोक्षस्वरूपादन्यस्यार्तत्वोक्त्या तस्यानार्तत्वपर्यवसानवचनविरोधाच्चेत्यभिप्रेत्याह—अमृतं चेति ।

च शब्दस्त्वर्थः । अमृतं त्वभयं नार्तमित्यर्थः । यद्यपि ब्रह्मस्वरूपममृतत्वमुक्तलक्षणमकर्मसाध्यं, तथापि जीवोऽन्यः, तत्कर्मणैव लभेतेत्याशङ्क्य जीवस्य ब्रह्मणोऽन्यत्वाभावान्नैवमित्याह—नेतीति । यः प्रियो जायादिः प्रीत्यास्पदतया विभाव्यते, स ममात्मा स्वरूपभूतः 'अनेन जीवेनात्मनानुप्रविश्य' इत्यादिश्रुतेः । स च नेतीत्यपोढाशेषविशेष इति मद्रूपत्वान्न तस्य कर्मप्राप्यममृतत्वमित्यर्थः । अत उक्तादात्मस्वभावाद्यदन्यद्भेदबुद्ध्या गृह्यमाणं विपरीतं दृश्यमनात्मभूतं तत्क्रियासहितं त्यजेत्तदभिमानं परित्यजेत् । ततः तस्मात्कारणादित्युपसंहारार्थः । न चायमात्मज्ञस्य विधिः, तस्याविनियोज्यत्वात् । तं प्रत्यनुवादमात्रम् । साधकस्य पुनरुपयुज्यते नियोग इतीह विधिप्रत्ययनिर्देश इति द्रष्टव्यम् ॥ १६ ॥

इति एकादशमीक्षितृत्वप्रकरणम् ॥ ११ ॥

---

(१) 'पेक्षेति—पाठः । (२) तै. उ. २. ७. (३) बृ. उ. ३. ४. २. (४) छां. उ. ६. ३. २. (५) ततस्तस्मात्—पाठः ।

## १२ प्रकाशप्रकरणम्

प्रकाशस्थं यथा देहं सालोकमभिमन्यते ।
द्रष्ट्राभासं तथा चित्तं द्रष्टाहमिति मन्यते ॥ १ ॥
यदेव दृश्यते लोके तेनाभिन्नत्वमात्मनः ।
प्रपद्यते ततो मूढस्तेनात्मानं न विन्दति ॥ २ ॥

ननु यदि भोक्ता प्रियशब्लोकः निर्विशेषब्रह्मस्वरूप एव, तर्हि सर्वो लोकोऽहमहमित्यात्मानमनुभवन्नपि ब्रह्माहमिति कथं नानुभवति ?—इत्याशङ्कायां पदार्थतत्त्वपरिशोधनाभावापराधादेव इति त्वपदार्थशोधनप्रधानं प्रकरणमारभमाणः साभासान्तःकरणाविवेकाद्याथात्म्येन स्वात्मानं न प्रत्येति सर्वो लोक इति प्रथमं सदृष्टान्तमाह—प्रकाशस्थमिति ।

यथाऽयं जनः स्फीतालोकमध्यगतं स्थूलं देहं ततो विलक्षणमपि तेनालोकेन व्याप्तत्वात्सालोकमालोकविशिष्टमभिमन्यते, तथा द्रष्ट्राभासं चित्तं साक्षिचैतन्यव्याप्तमन्तःकरणं सचेतनं मन्यमानोऽहं द्रष्टेति साभासं चित्तमेवात्मानं मन्यते, न तद्याथात्म्यं जानातीत्यर्थः । अयं भावः—यथाऽविशेषेण सर्वत्र प्रसृतमालोकं देहसंपर्कात्तदाकाराकारितमिव दृश्यमानं देहाभेदेन पश्यति लोकः, तथा सदा स्वरूपेणानवच्छिन्नप्रकाशस्वभावोऽप्यात्मा अन्तःकरणसंपर्कात्तदाकाराकारित इव भासते, इत्यहं कर्ता द्रष्टा भोक्तेत्येवमन्तःकरणस्वभावविशिष्टमेवात्मानमनुभवति लोकः, न शुद्धमिति ॥ १ ॥

एवमात्मनः साभासान्तःकरणाविवेकमुक्त्वा तद्द्वारेण देहपर्यन्तमविवेकं दर्शयन्नात्माप्रतिपत्तिमेव लोकस्य दृढयति—यदेवेति ।

यदेव साभासचित्ताविविक्ततयाहंकारास्पदं प्राणेन्द्रियस्थूलदेहपर्यन्त

---

(१) °कैः —पाठः ।

दशमस्य नवात्मत्वप्रतिपत्तिवदात्मनः ।
दृश्येषु तद्वदेवायं मूढो लोको न चान्यथा ॥ ३ ॥
त्वं कुरु त्वं तदेवेति प्रत्ययावैककालिकौ ।
एकनीडौ कथं स्यातां विरुद्धौ न्यायतो वद ॥ ४ ॥

दृश्यतेऽनुभूयते लोके व्यवहारभूमाविति यावत् । तेन प्राणादिदेहान्तेनात्मनोऽभिन्नत्वं तादात्म्यं प्रपद्यते । चित्तादिदेहपर्यन्तं चिदाभासप्रतीतेस्तदविवेकात्संघातमेवात्मानं मन्यत इत्यर्थः । यत एवं ततस्तस्मान्मूढो देहादेरात्मनश्चान्योन्यमध्यासकर्ता संस्तेन मौढ्येन हेतुनात्मानं ब्रह्मत्वेन न विन्दति न प्रत्येतीत्यर्थः ॥ २ ॥

उक्तमर्थं दृष्टान्तेन साधयति—दशमस्येति ।

*दश हि माणवकाः कश्चिन्नदीं तीर्त्वा पारं गताः सन्तो गणयामासुः—* कति वयं स्मः ? इति । तत्र गणयिता स्वात्मानं विहाय नवैव गणयति स्मेति प्रसिद्धिः । तत्र यद्वद्यथा दशमस्यात्मनो माणवकस्य गणयितुरविवेकान्नवात्मत्वप्रतिपत्तिः नवभ्योऽन्यमात्मानं न विन्दति, नवैव वयं दशमो नास्तीति भ्रान्तिरुपलभ्यत इत्यर्थः । तद्वत्तथैवायं लोको बुद्ध्यादिषु दृश्येष्वेवात्मतादात्म्यप्रतिपत्त्या मूढः शास्त्राचार्योपदेशहीनः स्वात्मानमन्यथा प्रतिपद्यते । न चान्यथा—वैपरीत्येन बुद्ध्याद्यपोहेन—ब्रह्मास्मीति स्वरूपयाथात्म्यं न वेत्तीत्यर्थः ॥ ३ ॥

ननु प्रत्यक्षानुभवस्य श्रुतेश्चाविरोधाय प्रत्यगात्मन एव कर्तृत्वादिधर्मवत्त्वं ब्रह्मरूपत्वं चास्तु, किमविवेककल्पनया मूढत्वमास्थीयत इत्यत आह—त्वं कुर्विति ।

यद्वा शास्त्राचार्योपदेशहीनो बुद्ध्यादिवैपरीत्येनात्मयाथात्म्यं न जाना-

(१) पञ्च—१८. १७४–१७६.; नै. सि. ३. ६४.

देहाभिमानिनो दुःखं नादेहस्य स्वभावतः ।
स्वापवत्तत्प्रहाणाय तत्त्वमित्युच्यते दृशेः ॥ ५ ॥

तीति तस्य पदार्थविवेकाभावान्मोक्षो नोपपद्यत इति सूचितम् । तत्र किं पदार्थविवेकेन कृत्यम् ? शास्त्राद्ब्रह्मत्वे प्रतिपन्ने सति ब्रह्माहमस्मीति प्रसंख्यानादेवात्मयाथात्म्यापरोक्ष्यान्मोक्ष उपपद्यत इति प्रसंख्यानविध्यवसरमाशङ्क्य परिहरति—त्वं कुर्विति, त्वं तदेवेति । एकनीडौ एकस्मिन् विषये विरुद्धौ प्रत्ययौ एककालिकावेकावस्थाभाजौ कथं स्यातामिति न्यायतो युक्तितो वदेत्यन्वयः । तथा चैकस्मिन्नात्मनि 'कुरु, तदेव त्वम्' इति कर्तृत्वाकर्तृत्वप्रकारकविरुद्धबुद्ध्योः समसमययोर्मध्ये वादृशशीतोष्णबुद्धिवदवश्यमन्यतरबुद्ध्या अन्यतरबाध एव युक्तः, नोभयोः प्रामाण्यमित्यभिप्रायः ॥ ४ ॥

तर्हि दुःखित्वादिभानेन प्रत्यक्षानुभवेन शाब्दस्य ज्ञानस्य बाध्यत्वोपपत्तेस्तदीयस्थैर्याय प्रसंख्यानविधिः स्यादत आह—देहेति ।

यदि दुःखित्वादिकमात्मनः स्वाभाविकं स्यात्, तदा तत्र ज्ञानाभ्यासशतेनापि निवर्तयितुं शक्यते, ज्ञानस्याज्ञानमात्रविरोधित्वात् । तथाच तद्विधिप्रकारोऽनर्थकः । यदा त्वविद्याप्रयुक्तदेहाद्यभिमाननिबन्धनं दुःखित्वादि, तदा अविद्यानिवृत्त्यैव तन्निवृत्तेः, अविद्यानिवृत्तेश्च ज्ञानमात्रायत्तत्वान्न कर्मविध्यवकाश इति श्लोकतात्पर्यार्थः । नादेहस्य देहाभिमानरहितस्येत्यर्थः । तत्र हेतुः—स्वभावत इति । अदेहत्वमात्मनः स्वाभाविकं रूपमित्यत्र नियामकमाह—स्वापवदिति । यद्वा—नादेहस्येत्यनेन देहाभिमानव्यतिरेकेण न दुःखमस्तीत्युक्तं, व्यतिरेकमाह—स्वापवदिति । सुषुप्ताविवेत्यर्थः । दृशेरात्मनस्तत्प्रहाणाय समूलाभिमाननिवृत्तये तत्त्वमिति श्रुत्योच्यते—ऐक्यमात्रं बोध्यते, न कर्मेत्यक्षरार्थः ॥ ५ ॥

---

(१) समासमयोः—पाठः ।

दृशेश्छाया यदारूढा मुखच्छायेव दर्शने ।
पश्यंस्तं प्रत्ययं योगी दृष्ट आत्मेति मन्यते ॥ ६ ॥
तं च मूढं च यद्यन्यं प्रत्ययं वेत्ति नो दृशेः ।
स एव योगिनां श्रेष्ठो[1] नेतरः स्यान्न संशयः ॥ ७ ॥

तत्त्वमस्यादिवाक्याद्देहादिव्यतिरिक्तमात्मानमवगच्छतोऽपि दुःख्यहमिति प्रतीतेरनुवृत्तेर्नाभिमाननिबन्धनं दुःखमित्याशङ्क्य तद्विशिष्टात्मदर्शनस्याभासत्वान्नैवमित्याह—दृशेरिति ।

दर्शयतीति दर्शनं दर्पणादि, तस्मिन्मुखच्छाया मुखाभासो मुखप्रतिबिम्बरूपा यथा आरूढा भवति, तद्वद्दृशेः प्रत्यगात्मनश्छाया आभासो यदारूढा यस्मिन्संक्रान्तैव भवति, तं प्रत्ययं—प्रत्याययतीति प्रत्ययोऽहंकारस्तं—साभासमन्तःकरणं पश्यन्नहमित्युपलभ्यमानो योगी अग्रहणाविद्यादियोगवान्पुमानात्मा दृष्ट इति मन्यते । यथा कश्चिद्दर्पणमुखस्वभावाविवेकाद्यथादृष्टं दर्पणदोषमालिन्याल्पत्वादिविशिष्टमेव स्वमुखं मन्यते, तथाऽयं महाजन उपाधिदोषैरास्कन्दितमिव तदविवेकादात्मानं पश्यन्नहं कर्ता दुःखीत्यभिमन्यत इत्यर्थः । तथा चाहमिति दर्शनस्य कल्पितात्मविषयत्वादुक्तदुःखित्वस्याविवेकाभिमाननिबन्धनत्वमिति न सम्यगात्मानं वाक्याद्वगच्छतो दुःखित्वाद्यनुवृत्तिरुपपद्यते, कदाचित्प्रतिभासस्य बाधितानुवृत्तिमात्रत्वादिति भावः ॥ ६ ॥

यदि साभासाहंकारमात्मानं पश्यन्नसम्यग्दर्शी, कस्तर्हि सम्यग्दर्शीत्यपेक्षायामाह—तं चेति ।

तमुपाधिभूतं प्रत्ययमहंकारं मूढं च मोहात्मकमविवेकमन्यं चोपाधिगतमाभासं दुःखादिकं वा यद्वि वेत्ति साक्ष्यमेवेदं सर्वमिति साक्ष्यत्वेनैव जानाति, नो दृशेरात्मनः साक्षिणः संबन्धीत्येवं न वेत्ति, य एवं विवेक-

(१) श्रेष्ठो—पाठः ।

विज्ञातेर्यस्तु विज्ञाता स त्वमित्युच्यते यतः ।
स स्यादनुभवस्तस्य ततोऽन्योऽनुभवो मृषा ॥ ८ ॥
दशिरूपे सदा नित्ये दर्शनादर्शने मयि ।
कथं स्यातां ततो नान्य इष्यतेऽनुभवस्ततः ॥ ९ ॥

मतिः स एव योगिनां—युज्यतेऽनेनेति योगस्तत्त्वज्ञानं तद्विद्यते येषां ते योगिनस्तेषां—प्रेष्ठः प्रियतमः सम्यग्दर्शीत्यर्थः । नेतरः पूर्वोक्तसाहंकारात्मदर्शी । न संशयः संशयोऽत्र न कर्तव्यः । 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति'[1] इति भगवद्वचनादित्यर्थः ॥ ७ ॥

सर्वस्य लोकस्यात्मत्वेन भासमानोऽप्यहंकारश्चेदनात्मत्वेन त्यज्यते, तदा तदन्यस्य त्वंपदार्थस्यादर्शनात्, तत्त्वमस्यादिवाक्यस्य निरालम्बनत्वापत्तिरित्याशङ्क्याहंकारादिविविक्तस्य त्वमर्थस्य श्रुत्यैवोपपादितत्वान्नैवमित्याह—विज्ञातेरिति ।

'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'[2], 'न विज्ञातेर्विज्ञातारं विजानीयाः'[3] इति श्रुतौ षष्ठ्यन्तशब्दनिर्दिष्टाया बुद्धिवृत्तिरूपाया विज्ञातेरनित्याया विज्ञातारं नित्यविज्ञप्तिरूपेण ज्ञातारं त्वं न विजानीया इति । यस्तु विज्ञातेर्विज्ञातृरूपोऽविषयभूतः सर्वसाक्षी प्रतिपन्नः स सर्वावभासक एव त्वमिति त्वंशब्देन तत्त्वमसिवाक्ये उच्यते, नाहंकारात्मतया यतो यस्मात्, ततस्तमत्रलम्ब्य तत्त्वमस्यादिवाक्यप्रवृत्तेर्न निरालम्बनत्वशङ्कावकाश इति शेषः । तस्य त्वंपदार्थस्य स एव श्रुत्युक्तप्रकारोऽनुभवः सम्यगनुभवः स्यात् । ततोऽन्यो बुद्धितत्स्थाभासविशिष्टरूपतयानुभवो मृषा मिथ्याध्यास इत्यर्थः ॥ ८ ॥

नन्वविषयश्चेदात्मा श्रुत्या निवेद्यते, कथं तर्हि तस्यानुभवः ? अनुभव-

(१) भ. गी. ४. ४०. (२) बृ. उ. ४. ३. ३०. (३) बृ. उ. ३. ४. २.

यत्स्थस्तापो रवेर्देहे दृशेः स विषयो यथा ।
सत्त्वस्थस्तद्वदेवेह दृशेः स विषयस्तथा ॥ १० ॥

रूपत्वात्तस्य नानुभवापेक्षेति चेन्न—अन्यत्रानुभाव्यानुभवयोर्भेददर्शनादित्याशङ्क्य जडाजडत्वाभ्यां विशेषोपपत्तेर्मैवमित्याह—दृशिरूपे इति ।

यस्य त्वसत्तयो प्रकाशव्यभिचारस्तस्यागन्तुकज्ञानसापेक्षत्वात्त्वान्यज्ञानागमापायनिबन्धने दर्शनादर्शने स्याताम् । सदा दृशिरूपे ज्ञानस्वरूपे मयि सत्ये नित्येऽन्यनिरपेक्षसत्ताके—स्वरूपतो ज्ञानवश्च नित्ये इति यावत्—दर्शनादर्शने कथं स्याताम् ? न कथमपित्यर्थः । ततस्तस्मात्कारणात्ततः स्वरूपादन्योऽनुभवो नेष्यत इति योजना ॥ ९ ॥

उक्तमेव नित्यदृग्रूपत्वमात्मनः स्फुटयति—यत्स्थस्ताप इति ।

यद्वा—सुखदुःखादियुक्तत्वेनात्मनो भानान्न नित्यदृशिमात्रत्वमित्याशङ्क्याह—यत्स्थस्ताप इति । रवेस्तापो देहे भवन् यत्स्थो यत्प्रदेशस्थितो भवति स तापो यथा स्वाश्रयप्रदेशविशिष्ट एव दृशेरात्मनो विषयः, तद्वदेवेह व्यवहारकाले सत्त्वस्थोऽन्तःकरणस्थ एव भवति सुखदुःखादिरूपस्तापस्तथा स्वाश्रयान्तःकरणसहित एव दृशेर्विषयः, न दृगात्मसमवेत इत्यर्थः । अतस्तापस्यान्यधर्मत्वेनैवानुभवादात्मा नित्यः चैतन्यमात्रस्वभाव एवेति भावः । अथवा—देहे भवन् रवेस्तापो यत्स्थो यस्मिन्देहदेशे स्थितः स देह एव तापविशिष्टः तप्तोऽहमिति मन्यमानस्य दृशेर्लौकिकस्यात्मनो विषयो यथा, तद्वदेव विषयसंपर्कजनितः सुखदुःखादितापः सत्त्वस्थोऽन्तःकरणस्थ इति सोऽन्तःकरणाख्यः सुखादितापविशिष्टस्तथैव दृशः साक्षिणो विषय इत्यर्थः । तथाच सुख्यहमित्याद्यभिमानस्य, देहतापेन तदध्यासाच्चतप्तोऽहमित्यभिमानवत्, स्वदृश्यान्तःकरणाध्यासनिबन्धनत्वाद्विवेकिनो दुःखादिमत्तयाऽऽत्मा कदाऽपि न भासत इति भावः ॥ १० ॥

---

(१) स्वसत्ताया—पाठः । (२) स्वदृश्यन्तः—पाठः ।

प्रतिपिद्धेदमंशो ज्ञः खमिवैकरसोऽद्वयः ।
नित्यमुक्तः सदा शुद्धः सोऽहं ब्रह्मास्मि केवलः ॥ ११॥
विज्ञातुर्नैव विज्ञाता परोऽन्यः संभवत्यतः ।
विज्ञाताऽहं परो मुक्तः सर्वभूतेषु सर्वदा ॥ १२ ॥
यो वेदालुप्तदृष्टित्वमात्मनोऽकर्तृता तथा ।
ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः ॥ १३ ॥
ज्ञातैवाहमविज्ञेयः शुद्धो मुक्तः सदेत्यपि ।
विवेकी मत्ययो बुद्धेर्दृश्यत्वान्नाशवान्यतः ॥ १४ ॥

आत्मन सुखादियुक्तान्तःकरणसम्बन्धाभाव स्फुटयन् विविक्तस्वरूपमनुसधत्ते—प्रतिपिद्धेति । स्पष्टार्थ ॥ ११ ॥

यस्मादेव विचार्यमाणे अह ब्रह्मैव, तस्मान्न साक्षिरूपस्य मम क्वापि स्वरूपभेदोऽस्तीत्यद्वयात्मतत्त्वमाविष्करोति—विज्ञातुरिति ।

सर्वविज्ञातृरूपादात्मनोऽन्यो यत परो व्यापको विज्ञाता नैव सभवति, अतोऽहमेव परो विज्ञाता सर्वभूतेषु स्थावरजगमेषु सदा सर्वदा, एव सर्वविज्ञेयतद्धर्मरहितत्वान्मुक्तश्चेत्यर्थ ॥ १२ ॥

एव श्रुत्युपदेशात्सर्वत्र सर्वदाद्वयमात्मानमनुसदधानस्यापि ब्रह्मविदहमस्मीत्यभिमानात् स्यात्सविशेषत्वमित्यत आह—यो वेदेति ।

ब्रह्मवित्त्व मुक्त्वा ब्रह्मविदहमस्मीत्यभिमान त्यक्त्वा यथा श्रुत्युक्त तथात्मनोऽलुप्तचिन्मात्रतया द्रष्टृत्व तथाऽकर्तृता च वेद, स आत्मज्ञ आत्मतत्त्वब्रह्मवित्, न चेतरो योऽभिमानलेशमपि भजत इत्यर्थ ॥ १३ ॥

ननु ब्रह्मात्मज्ञानस्यात्मनि विद्यमानत्वात् कथ ब्रह्मवित्त्वाभिमानत्याग ? अतो नात्यन्त निर्विशेष आत्मेत्यत आह—ज्ञातैवेति ।

(१) तथा शुद्ध —पाठ । (२) विचार्यमाणो—पाठ । (३) °त्मत्व°—पाठ ।

अलुप्ता त्वात्मनो दृष्टिर्नोत्पाद्या कारकैर्यतः ।
दृश्यया चान्यया दृष्ट्या जन्यतास्याः प्रकल्पिता ॥ १५ ॥
देहात्मबुद्ध्यपेक्षत्वादात्मनः कर्तृता मृषा ।
नैव किंचित्करोमीति सत्या बुद्धिः प्रमाणजा ॥ १६ ॥

ज्ञातैवाहमित्यादिरूपो यो विवेकी विवेकवान्—विविक्तात्मनिष्ठ इति यावत् । प्रत्ययो बुद्धेर्बोधेद्धो यो वृत्तिरूपः स दृश्यत्वात्साक्षिभास्यत्वान्नाशवान्नश्यत्येव यत यस्मात्, तस्मान्नास्ति ब्रह्मविदोऽभिमानलेशस्याप्यवकाश इत्यर्थः । यथा कतकबीजं रजःकलुषिते जले प्रक्षिप्तं जलगतसकलरजो विलापयत्स्वयमपि विलीयमानं सलिलमनाविलं करोति, तथा यथोक्तविवेकबुद्धिवृत्तिरपि परे प्रत्यगात्मनि संसिद्धा तद्गतसकलविशेषमुन्मूलयन्ती स्वयमप्युन्मूलिता प्रत्यगात्मानं निरस्तसमस्तविशेषमनाविलमापादयतीति भावः ॥ १४ ॥

ननु, आत्मचैतन्यप्रतिभासोऽपि नाशवान्, आत्मप्रकाशत्वात्, प्रकृतबुद्धिप्रत्ययवत्—इति चेत्, नैवम्, कारकाधीनात्मलाभत्वस्योपाधित्वादित्याह—अलुप्तेति ।

उपाधेः साधनव्यापकत्वमाशङ्क्य प्रत्याह—दृश्यया चेति । अस्या आत्मस्वरूपाया दृष्टेर्जन्यता तु दृश्ययान्यया बुद्धिवृत्तिरूपया स्वरूपदृष्टेर्विशेषाकाराभिव्यक्त्युपाधिभूतया प्रकल्पिता आरोपिता, घटजन्मना घटाकाशजन्मवत्, इति नास्ति (अतः ?) साधनव्यापकत्वमित्यर्थः ॥ १५ ॥

तदेवमात्मन्यव्यभिचाराचित्प्रकाशस्य नित्यत्वात् 'यो वेदालुप्तदृष्टित्वम्' (१२) इत्यत्रोक्तं नित्यदृष्टिरूपत्वमुपपाद्य 'अकर्तृतां तथा' इत्युक्तं निर्विकारत्वमुपपादयति—देहात्मबुद्धीति द्वाभ्याम् ।

---

(१) तुलय—१५. २१; १६. ७. (२) साक्षिभास्यत्वात्—पाठः ।

कर्तृत्वं कारकापेक्षमकर्तृत्वं स्वभावतः ।
कर्ता भोक्तेति विज्ञानं मृषैवेति सुनिश्चितम् ॥ १७ ॥
एवं शास्त्रानुमानाभ्यां स्वरूपेऽवगते सति ।
नियोज्योऽहमिति ह्येषा सत्या बुद्धिः कथं भवेत् ॥ १८ ॥
यथा सर्वान्तरं व्योम व्योम्नोऽप्याभ्यन्तरो ह्यहम् ।
निर्विकारोऽचलः शुद्धोऽजरो मुक्तः सदाऽद्वयः ॥ १९ ॥

इति प्रकाशप्रकरणम् ।

देहात्मबुद्धिर्मिथ्याबुद्धिस्तत्पूर्वकत्वात्कर्तृत्वादिरात्मनो मृषा । नैव किंचित्करोमीत्यकर्त्रात्मबुद्धिः 'निष्कलं निष्क्रियं शान्तम्' इत्यादिप्रमाणजा, अतः सत्या—देहात्मबुद्धेरप्रमाणजाया बाधिकेत्यर्थः ॥ १६ ॥

इतोऽपि कर्तृत्वमात्मनो न परमार्थमित्याह—कर्तृत्वं कारकापेक्षमिति । असङ्गे निरवयवे आत्मनि कारकसंसर्गस्य परमार्थतोऽनुपपत्तेः, अकर्तृत्वस्य स्वाभाविकत्वात्, कर्ता भोक्तात्मेति विज्ञानं मृषैव, न परमार्थ इति सुनिश्चितम् । नित्यनिर्मल एवात्मेत्यर्थः ॥ १७ ॥

तदेवं परिशोधितपदार्थतत्त्वस्य वाक्यादेवाहं ब्रह्मास्मीति निरपवादे विज्ञाने जाते सति, नियोज्योऽहमिति बुद्धेरुन्मूलितत्वात्, न प्रसंख्यानविध्यवकाश इत्याह—एवं शास्त्रानुमानाभ्यामिति ।

शास्त्रं 'विज्ञातर्यस्तु विज्ञाता स त्वमित्युच्यते यतः' इत्यत्र दर्शितं, 'यत्त्वस्तापो स्वेदेहे' इत्यत्रोक्तमनुमानं, ताभ्यामित्यर्थः ॥ १८ ॥

ब्रह्मविदो नियोज्यत्वादिबुद्धिर्नैव भवतीत्यत्र निर्विकारत्वादिकं हेतुं वदन् प्रकरणार्थमुपसंहरति—यथा सर्वान्तरमिति । स्पष्टम् ॥ १९ ॥

इति द्वादशं प्रकाशप्रकरणम् ॥ १२ ॥

---

(१) 'प्यभ्यन्तरो—पाठः (२) श्वे. उ. ६.१९. (३) १२. ८. (४) १२. १०.

## १३ अचक्षुष्ट्वप्रकरणम् ।

अचक्षुष्ट्वान्न दृष्टिर्मे तथाऽश्रोत्रस्य का श्रुतिः ।
अवाक्त्वान्न तु वक्तिः स्यादमनस्त्वान्मतिः कुतः ॥ १ ॥
अप्राणस्य न कर्मास्ति बुद्ध्यभावे न वेदिता ।
विद्याविद्ये ततो न स्तश्चिन्मात्रज्योतिषो मम ॥ २ ॥

तदेवं पदार्थतत्त्वपरिचयाभावादेव वाक्यार्थाप्रतिपत्तिर्जनस्येति तत्परिचयमात्रादेव वाक्याद्वाक्यार्थयाथात्म्यावभाससंभवे प्रसंख्यानादिविधिरनर्थकोऽनुपपन्नश्चेत्युक्तम् । इदानीं पूर्वप्रकरणान्ते 'निर्विकारोऽचलः शुद्धः' इति यदुक्तमात्मनः शुद्धत्वमचलत्वं च, तत्स्फुटीकर्तुं प्रकरणान्तरं प्रस्तौति—अचक्षुष्ट्वादिति ।

दृष्टिशब्देन चक्षुरिन्द्रियद्वारकबुद्धिवृत्तिर्बहिःप्रसृता रूपादिविषयोपरक्तिता ज्ञानाभिक्रियात्मिकोच्यते, सा दृष्टिर्न मेऽस्ति—मद्विकारतया मद्धर्मभूता सा न भवतीत्यर्थः । तत्र हेतुः—अचक्षुष्ट्वादिति । चक्षुर्हि देहदेशाश्रितं भौतिकं करणं, न मदाश्रितमित्यन्वयव्यतिरेकाभ्यां निश्चितमिति न हेत्वसिद्धिशङ्का । एवं का श्रुतिरित्यादिषु योज्यम् । तथाच तत्तदिन्द्रियद्वारकबुद्धिवृत्तिरूपदृष्ट्यादिक्रियाहीनत्वात् सिद्धमात्मनोऽचलत्वं, शुद्धत्वं चेति भावः ॥ १ ॥

तथा कर्तृत्वज्ञातृत्वविकारहेतुप्राणबुद्ध्योरभावादपि शुद्ध इत्याह—अप्राणस्येति ।

चिन्मात्रज्योतिषः सदाप्रकाशमानचिदेकरसस्य विद्याविद्ये ज्ञानवदभावौ, ज्ञानक्रिये वा, न स्तः, तयोरपि बुद्ध्यवस्थाविशेषत्वात्, आत्मनश्च बुद्ध्यभावात्—इति सिद्धा शुद्धतेत्यर्थः ॥ २ ॥

---

(१) बृ. उ. ३. ८. ८. (२) शुद्धत्वरहितोऽपि पाठः ।

नित्यमुक्तस्य शुद्धस्य कूटस्थस्याविचालिनः ।
अमृतस्याक्षरस्यैवमशरीरस्य सर्वदा ॥ ३ ॥
जिघत्सा वा पिपासा वा शोकमोहौ जरामृती ।
न विद्यन्तेऽशरीरत्वाद्व्योमवद्व्यापिनो मम ॥ ४ ॥
अस्पर्शत्वान्न मे स्पृष्टिर्नाजिह्वत्वाद्रसज्ञता ।
नित्यविज्ञानरूपस्य ज्ञानाज्ञाने न मे सदा ॥ ५ ॥

उक्तधर्मजातस्यात्मन्यभावेन शुद्धत्वादिसिद्धावशरीरत्वमेव हेतुरित्यभिप्रेत्य चिन्मात्रज्योतिःस्वरूपं विशेषणैर्विशदयति—नित्यमुक्तस्येति ।

विद्याविद्ये न त्व इति पूर्वेणान्वयः । शुद्धत्वान्नित्यमुक्तत्वम्, अविचालित्वात्कूटस्थत्वम्, अक्षरत्वादमृतत्वमिति विशेषणानां योजना । त्रिष्वपि हेतुः—अशरीरस्येति । नहि शरीरसंबन्धमन्तरेणाऽमनोऽशुद्धिचलनक्षरणानि निरूपणपथमवतरन्ति । अतः सर्वदैवाशरीरत्वात्सर्वदा शुद्ध इत्यादि योज्यम् ॥ ३ ॥

आत्मनः षडूर्मिसंबन्धाभावादपि सिद्धा शुद्धतेत्याह—जिघत्सेति ।

खादितुमिच्छा जिघत्सा, पातुमिच्छा पिपासा, अन्यत्प्रसिद्धम् । अशरीरत्वादित्युपलक्षणम्—अप्राणत्वादमनस्त्वाच्चेत्यर्थः । तथा चोक्तम्—

'प्राणस्य क्षुत्पिपासे द्वे मनसः शोकमोहकौ ।
जरामृत्यू शरीरस्य षडूर्मिरहितः शिवः ॥' इति ॥ ४ ॥

इदानीमनुक्तसकलेन्द्रियवृत्तिप्रतिषेधोपलक्षणतया स्पर्शरसनसंबन्धं प्रतिषिध्याविर्भावतिरोभावहीनतया विशुद्धचिद्रूपत्वमुक्तमुपसंहरति—अस्पर्शत्वादिति ।

स्पर्शनेन्द्रियरहितत्वादित्यर्थः ॥ ५ ॥

---

या तु स्यान्मानसी वृत्तिश्चाक्षुष्का रूपरञ्जना ।
नित्यमेवात्मनो दृष्ट्या नित्यया दृश्यते हि सा ॥ ६ ॥
तथाऽन्येन्द्रिययुक्ता या वृत्तयो विषयाञ्जनाः ।
स्मृती रागादिरूपा च केवलाऽन्तर्मनस्यपि ॥ ७ ॥
मानस्यस्तद्वदन्यस्य दृश्यन्ते स्वप्नवृत्तयः ।
द्रष्टुर्दृष्टिस्ततो नित्या शुद्धाऽनन्ता च केवला ॥ ८ ॥

आत्मनो दृष्ट्यादयो न सन्तीत्युक्तेऽर्थे उपपत्तिमाह—या तु स्यादिति ।

चाक्षुष्का चक्षुर्द्वारजनिता रूपरञ्जना रूपाकाराकारिता या तु मानसी वृत्तिः स्यात्—स्याच्छब्दो भवतीत्यर्थे । एवंविधा वृत्तिरस्ति—सा आत्मरूपया नित्यया दृष्ट्या चैतन्यप्रकाशलक्षणया नित्यमेव दृश्यते प्रकाश्यते । हि प्रसिद्धमनुभवसिद्धमेवैतदित्यर्थः ॥ ६ ॥

तथा च [ न ] दृष्ट्यादयश्चिदात्मीयाः, तद्दृश्यत्वात्, यो येन दृश्यते न स तदीयः, यथा रूपादिः—इति सिद्धमात्मनो दृष्ट्यादिराहित्येन शुद्धत्वादीत्यभिप्रेत्य चक्षुर्द्वारकवृत्तावुक्तन्यायं वृत्त्यन्तरेष्वतिदिशति—तथेति ।

विषयाञ्जना विषयोपाधिकाः विषयाकारा इति यावत् । या च केवला चक्षुरादिद्वारनिरपेक्षा अन्तर्मनसि शरीरान्तर्वर्तिनि चित्ते स्मृतिः रागादिरूपा साऽपि पूर्वोक्तयात्मदृष्ट्या दृश्यत इत्यन्वयः ॥ ७ ॥

किंच स्वप्नावस्थाया विद्यमाना मनःपरिणामरूपा विषयाकारा वृत्तयस्ततो व्यतिरिक्तस्यैव द्रष्टुर्दृश्या यथा संप्रतिपन्नाः, तथा जाग्रद्दृश्या अपि दृश्यत्वात्स्वव्यतिरिक्तस्यैव द्रष्टुर्दृश्या इत्याह—मानस्य इति ।

मानस्यः स्वप्नवृत्तयोऽन्यस्य साक्षिणो दृश्यन्ते दृश्यत्वेन विपरिवर्तन्त इत्यर्थः । तद्वज्जाग्रद्वृत्तय इति शेषः । सर्वदृष्टीनां कूटस्थदृष्टिभास्यत्वे सिद्धे फलितमाह—द्रष्टुरिति ॥ ८ ॥

अनित्या साऽविशुद्धेति गृह्यतेऽत्राविवेकतः ।
सुखी दुःखी तथा चाहं दृश्ययोपाधिभूतया ॥ ९ ॥
मूढया मूढ इत्येवं शुद्धया शुद्ध इत्यपि ।
मन्यते सर्वलोकोऽयं येन संसारमृच्छति ॥ १० ॥
अचक्षुष्कादिशास्त्रोक्तं सबाह्याभ्यन्तरं त्वजम् ।
नित्यमुक्तमिहात्मानं मुमुक्षुश्चेत्सदा स्मरेत् ॥ ११ ॥
अचक्षुष्कादिशास्त्राच्च नेन्द्रियाणि सदा मम ।
अप्राणो ह्यमनाः शुभ्र इति चाथर्वणं वचः ॥ १२ ॥

कूटस्था चेदात्मदृष्टिरिष्टा, कथं तत्रान्यथा प्रथा [१]—इत्याशङ्क्य वृत्ति-मदन्तःकरणाविवेकाद्वेत्याह—अनित्येति ।

अविशुद्धेति छेदः । उपाधिभूतया दृश्यया दृष्ट्या सहाविवेकतो विवे-काभावादत्र व्यवहारभूमौ सा नित्या शुद्धा चात्मदृष्टिरनित्याऽविशुद्धेति च गृह्यत इति योजना । तथाहं सुखी दुःखीति च मन्यत इत्युत्तरश्लोकगते-नान्वयः ॥ ९ ॥

अविवेकनिबन्धनात् मिथ्याभिमानादेव संसारप्राप्तिरित्युक्तमेव स्फुट-यति—मूढयेति ।

स्पष्टम् ॥ १० ॥

कथं तर्हि संसारनिवृत्तिरित्यपेक्षायां तदुपायं पुनर्मुमुक्षुं शिक्षयति—अचक्षुष्कादीति ।

इह प्राणिनां मध्ये कश्चिन्मुमुक्षुश्चेत्स्यात्, स तर्हि स्वात्मानमुक्तरूपं सदा स्मरेत्—श्रुत्याचार्योपदिष्टमनवरतमनुसदधीतेति योजना ॥ ११ ॥

यदात्मनश्चक्षुरादिराहित्यं प्राक् सिद्धवदुक्तं तत्र प्रमाणमाह—अचक्षु-ष्कादिशास्त्राच्चेति ।

(१) मु उ॰ २.१ २॰ (२) °थर्वणेवं°—पाठ । (३) °निरन्धना मि°—पाठ ।

शब्दादीनामभावश्च श्रूयते मम काठके ।
अप्राणो ह्यमना यस्मादविकारी सदा ह्यहम् ॥ १३ ॥
विक्षेपो नास्ति तस्मान्मे न समाधिस्ततो मम ।
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ १४ ॥
अमनस्कस्य शुद्धस्य कथं तत्स्याद्द्वयं मम ।
अमनस्त्वाविकारित्वे विदेहव्यापिनो मम ॥ १५ ॥

'अचक्षुष्कमश्रोत्रमवागमनः' इत्यादिना बृहदारण्यके यथात्मरूपमुक्तं, तथा मुण्डकेऽप्युक्तमित्याह—अप्राण इति ॥ १२ ॥

आत्मनो निर्विशेषत्वे श्रुत्यन्तरमुदाहरति—शब्दादीनामिति ।

'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' ॥'

इति काठके श्रूयत इत्यर्थः। उक्तं प्रमाणमनूद्य फलितमाह—अप्राण इति। एतदचक्षुष्कादेरप्युपलक्षणम् ॥ १३ ॥

अविकारित्वनिश्चयफलमाह—विक्षेप इति ।

तस्मात्—अविकारित्वादित्यर्थः । ततो विक्षेपाभावादित्यर्थः । विक्षेपनिवृत्तिरूपत्वात्समाधेस्तदभावे तदभावः । कस्य तर्हि समाधिविक्षेपावित्यपेक्षायां विकारवत एवेति वदन् अविकारिणस्तदभावं द्रढयति—विक्षेपो वेति ॥ १४ ॥

मनोवद्विकारित्वाद्वा विकारिमनस्तादात्म्याद्वा विक्षेपसमाधी आत्मनि संभाव्येताम्, तदुभयाभावात्तौ न स्त इत्याह—अमनस्कस्येति ।

शुद्धस्य—अविकारिण इत्यर्थः । कथममनस्कत्वमविकारित्वं चेत्यत

---

( १ ) बृ. उ. ३. ८. ८. ( २ ) मुं. उ. २.१.२. ( ३ ) काठ. उ. १.३.१५.

इत्येतद्यावदज्ञानं तावत्कार्यं ममाभवत् ।
नित्यमुक्तस्य शुद्धस्य बुद्धस्य च सदा मम ॥ १६ ॥
समाधिर्वाऽसमाधिर्वा कार्यं चान्यत्कुतो भवेत् ।
मां हि ध्यात्वा च बुद्ध्वा च मन्यन्ते कृतकृत्यताम् ॥१७॥

आह—अमनस्त्वाविकारित्वे इति। विदेहश्चासौ व्यापी चेति विदेहव्यापी तस्येति विग्रहः । विदेहत्वादमनस्कत्वं, व्यापित्वादविकारित्वं चेत्यर्थः॥१५॥

कथं तर्हि जिज्ञासावस्थायां समाध्यादिकं कर्तव्यमिति ते बुद्धिरासी-दिति तत्राह—इत्येतदिति ।

सदा नित्यमुक्तबुद्धशुद्धस्यापि[1] मम यावत्पर्यन्तमेतन्नित्यशुद्धत्वादिविष-यमज्ञानमासीत्, तावत् मम कार्यं समाधानादि कर्तव्यमभवत्, नेदानीं तज्ज्ञानतः कृत्यमस्तीत्यर्थः ॥ १६ ॥

इदानीं कस्मात्समाधानादि न कर्तव्यमित्यपेक्षायां तद्धेत्वभावादित्याह—समाधिर्वेति ।

कुतो भवेन्ममेति शेषः । कुतो न भवेदित्यत्र हेतुमाह—मां हीति । यस्मान्मां प्रत्यगेकरसं ब्रह्म ध्यात्वा विचार्य, बुद्ध्वा साक्षात्कृत्य, कृतकृत्यतां मन्यन्ते मुमुक्षव इति शेषः । तथा च श्रुतिः—

'एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान्[2]'—इति ।

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते[3]' ॥

इति स्मृतेश्च । तस्मादज्ञानाभावान्नास्तीदानीं किमपि कर्तव्यमित्यर्थः ॥१७॥

---

(१) शुद्धरहितः पाठः (२) बृ. उ. ४.४.२३ (माध्यन्दिन.) (३) भ. गी. ३.१७.

अहं ब्रह्मास्मि सर्वोऽस्मि शुद्धो बुद्धोऽस्म्यतः सदा ।
अजः सर्वत एवाहमजरश्चाक्षयोऽमृतः ॥ १८ ॥
मदन्यः सर्वभूतेषु बोद्धा कश्चिन्न विद्यते ।
कर्माध्यक्षश्च साक्षी च चेता नित्योऽगुणोऽद्वयः ॥ १९ ॥

ननु यद्यपि यथोक्तात्मविदः समाध्यादि कर्तव्यं नास्ति, तथाप्यात्मनो ब्रह्मत्वं संपाद्य प्रपञ्चस्य विलयः कर्तव्योऽवशिष्यत इत्याशङ्क्य ब्रह्मरूपत्वस्य नित्यसिद्धत्वात्, प्रपञ्चस्य चाज्ञानमात्रविलसितस्य तन्निवृत्तिसमय एव चाधिष्ठानात्मना विलीनत्वात्, न तदनुष्ठेयमवशिष्यत इत्यभिप्रेत्याह—अहं ब्रह्मास्मीति ।

सदेति ब्रह्मास्मीत्यादिषु सर्वेषु विशेषणेषु योज्यम् । अतस्ततो बन्धहीनः। सर्वत इति च पदमजोऽक्षय इत्यु- यत्र योज्यम् । जन्मक्षयहेतुरहित इत्यर्थः ॥ १८ ॥

ननु प्रतिदेहं चेतनभेदे भासमाने कथं ब्रह्मास्मीति प्रतीचः पूर्णतानुभव इत्यत आह—मदन्य इति ।

उक्तेऽर्थे प्रमाणमाह—कर्माध्यक्ष इति ।

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' ॥

इति श्रुतावेकस्यैव सर्वभूतान्तरात्मत्वोपपादनात्, भेदप्रतिभानस्याकाशभेदभानवदुपाधिनिबन्धनत्वात्, नात्मान्तराशङ्केति युक्तं पूर्णब्रह्मात्मानुभवनमित्यर्थः ॥ १९ ॥

---

(१) श्वे. उ. ६. ११. अस्याः श्रुतेः प्रतिपदमखिलार्थं विद्योतयन्ती शास्त्रप्रकाशिकाख्यसम्बन्धवार्तिकटीका ३५६ श्लोकस्य द्रष्टव्या ।

न सच्चाहं न चासच्च नोभयं केवलः शिवः ।
न मे संध्या न रात्रिर्वा नाहर्वा सर्वदा दृशेः ॥ २० ॥
सर्वमूर्तिवियुक्तं यद्यथा खं सूक्ष्ममद्वयम् ।
तेनाप्यस्मि विना भूतं ब्रह्मैवाहं तथाऽद्वयम् ॥ २१ ॥

अहं ब्रह्मास्मीत्यत्रोक्तमात्मनो ब्रह्मत्वमुपपादितं, सर्वोऽस्मीत्युक्तं तु यागायां सामानाधिकरण्याभिप्रायमित्युपपादयति—न सच्चाहमिति ।

सत् प्रत्यक्षयोग्यं पृथिव्यप्तेजोरूपं भूतत्रयम् । असत् प्रत्यक्षायोग्यं स्यच्छब्दनिर्दिष्टं वाय्वाकाशात्मकं भूतद्वयम् । उभयं पञ्चभूतपरिणामात्मकं शरीरसंस्थानम् । तत्सर्वं नाहमित्युक्ते नेति नेतीति मय्येवारोप्य निषिद्धत्वान्मदन्यत्र मयि चासत्त्वादहमेवेदं सर्वमिति युक्तमेवोक्तमित्यर्थः । केवलः सर्वविशेषशून्यः । शिवो निस्त्रैगुण्यः । संध्यादिकालविशेषयोगात्कथं केवलत्वमित्यत आह—न मे संध्येति । तत्र हेतुः—सर्वदा दृशेरिति । अलुप्तप्रकाशात्मत्वादित्यर्थः । यद्वा—संध्यादिशब्दैः क्रमेण स्वप्नसुषुप्तिजागरणान्युच्यन्ते; सदैवैकरूपेण प्रकाशमानस्य स्वरूपावरणविक्षेपरूपावस्थाः कुतस्त्या इत्यर्थः ॥ २० ॥

तस्माद्विदेकतानस्यात्मनो निर्विशेषस्य युक्तं ब्रह्मरूपेण पूर्णत्वमिति सदृष्टान्तमाह—सर्वमूर्तीति ।

यथाकाशं सर्वस्मात्परिच्छिन्नाकाराद्विलक्षणमिति सूक्ष्ममालक्ष्यते, तथेदं ब्रह्म परिपूर्णमत्यन्तसूक्ष्मं द्वैताभावोपलक्षितमिष्यते । तस्माद्ब्रह्मणोऽद्वितीयत्वादात्मनश्च तदनन्यत्वाद्ब्रह्मैवास्मीत्यर्थः । तर्हि ब्रह्माकाशयोरुपमानोपमेयभावेन भेदात्कथं ब्रह्माद्वितीयमित्यत आह—तेनापीति । तेनाकाशेनापि विना भूतं सिद्धं ब्रह्मास्मि, व्यवहारदृष्ट्योपमानादिभेदेऽपि परमार्थ-

---

(१) निर्विषयस्य—पाठः ।

ममात्मास्य त आत्मेति भेदो व्योम्नो यथा भवेत् ।
एकस्य सुषिभेदेन तथा मम विकल्पितः ॥ २२ ॥
भेदोऽभेदस्तथा चैको नाना चेति विकल्पितः ।
ज्ञेयं ज्ञाता गतिर्गन्ता मय्येकस्मिन्कुतो भवेत् ॥ २३ ॥
न मे हेयं न चादेयमविकारी यतो ह्यहम् ।
सदा मुक्तस्तथा शुद्धः सदा बुद्धोऽगुणोऽद्वयः ॥ २४ ॥

तत्तदभावान्नाद्वैतक्षतिरित्यर्थः । एकमद्वयपदमाकाशेन सम्बध्यते, द्वितीयं ब्रह्मणेत्यपौनरुक्त्यम् ॥ २१ ॥

पूर्वमाकाशदृष्टान्तेन पूर्णत्वनिरूपणात्परमार्थतः परिच्छेदाशङ्का निराकृता । इदानीं तेनैव दृष्टान्तेन भेदपरिच्छेदप्रतीतेर्गतिमाह—ममात्मेति ।

मम ज्ञातुरात्मा स्वरूपं ब्रह्मेति स्वतः स्वस्यात्मेति च योऽयमात्मात्मीयभावेन भेदप्रतिभासः स एकस्य ममान्तःकरणाद्युपाधिकृतभेदपरिच्छेदापेक्षया विकल्पित आरोपितो भवेत्, यथैकस्य व्योम्नः सुषिभेदेन छिद्रभेदेनाशाशिभावरूपो भेदो विकल्पितो भवति तद्वदित्यर्थः ॥ २२ ॥

तस्मादविद्यादशायां भेदव्यवहारोऽपीदानीमवगतात्मतत्त्वस्य सोऽपि नास्तीति सिद्धमित्याह—भेदोऽभेद इति ।

मय्येवैकस्मिन्पूर्वं भेदोऽभेदश्च विकल्पितो व्यवहृतः । तथा एको नाना चेति चाहमेव विकल्पितः । ज्ञेयं, ज्ञाता, गतिः फलं, गन्ता फलप्राप्तिकर्ता भोक्तेति चाहं विकल्पित इति योजना । एतत्सर्वं कुतो भवेत् ?—विचार्यमाणं न भवेदवेत्यर्थः ॥ २३ ॥

ननु तथाऽपि संसारित्वं हेयं, ब्रह्मत्वं चोपादेयमिति न निर्विशेषत्वमात्मन इति चेत्तत्राह—न मे हेयमिति ।

---

(१) 'मा स्वतः'—पाठः टीकासम्मतः ।

इत्येवं सर्वदाऽऽत्मानं विद्यात्सर्वं समाहितः ।
विदित्वा मा स्वदेहस्थमृषिर्मुक्तो ध्रुवो भवेत् ॥ २५ ॥
कृतकृत्यश्च सिद्धश्च योगी ब्राह्मण एव च ।
य एवं वेद तत्त्वार्थमन्यथा ह्यात्महा भवेत् ॥ २६ ॥

तत्र हेतुमाह—अविकारीति । यतो यस्मादहमविकारी । कुतोऽविकारीत्यपेक्षायां तत्र प्रमाणं हिशब्देन सूच्यते—'अविकार्योऽयमुच्यते' इति स्मृतिरित्यर्थः । फलितमाह—सदा मुक्त इति । सदैव बन्धसंसर्गशून्य इत्यर्थः । तथा शुद्धस्तद्धेत्वविद्यासम्बन्धरहितः । यत सदा शुद्ध, तर्हि किं बोधगुण ? नेत्याह—अगुणः बोधरूप एवेत्यर्थः । तर्हि बोध्यं किंचिदन्यदस्ति ? नेत्याह—अद्वय इति ॥ २४ ॥

तदेवमुक्तलक्षणमात्मतत्त्वं शास्त्राचार्यप्रसादाच्छ्रवणमनननिदिध्यासननिष्ठां प्राप्तः सन् सदा मुमुक्षुरहं ब्रह्मास्मीत्यनुसदध्यादिति मुमुक्षुं प्रोत्साहयति—इत्येवमिति ।

सर्वं पूर्वमुक्तं वदन्फलमाह—विदित्वेति । ऋषिः सर्वदर्शी ॥ २५ ॥

उक्ततत्त्वविद उक्तां मुक्तिं प्रपञ्चयति—कृतकृत्यश्चेति ।

'स ब्राह्मणः' इति श्रुतेर्मुख्यो ब्राह्मण एव च भवेदिति संबन्धः । एवं निष्ठाहीनस्य प्रत्यवायमाह—अन्यथेति । उक्तं श्रीभागवते भगवता—

'नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ।
मयाऽनुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा ॥'

इति ॥ २६ ॥

---

(१) भ. गी. २ २५ (२) 'नेनात्म'—पाठ । (३) यदेव—पाठ । (४) बृ. उ. ३ ८ १० (५) ११ २०. १७

वेदार्थो निश्चितो ह्येष समासेन मयोदितः ।
संन्यासिभ्यः प्रवक्तव्यः शान्तेभ्यः शिष्टबुद्धिना ॥ २७ ॥

इति अचक्षुष्ट्वप्रकरणम् ।

१४ स्वप्नस्मृतिप्रकरणम्

स्वप्नस्मृत्योर्घटादेर्हि रूपाभासः प्रदृश्यते ।
पुरा नूनं तदाकारा धीर्दृष्टेत्यनुमीयते ॥ १ ॥

उक्तस्य प्रकरणार्थस्य प्रामाणिकत्वं दर्शयन् प्रतिपत्तिसौकर्यमाह— वेदार्थ इति ।

अस्य ग्रहणे मुख्याधिकारिणो दर्शयति—संन्यासिभ्य इति । न केवलं प्राप्तसंन्यासाश्रममात्रेभ्यः, किंतु शान्तेभ्यः—शमादिसाधनसंपन्नेभ्य इत्यर्थः। उपदेष्टारं विशिनष्टि—शिष्टबुद्धिनेति । शास्त्राचार्यानुशिष्टबुद्धिनेत्यर्थः २७

इति त्रयोदशं अचक्षुष्ट्वप्रकरणम् ॥ १३ ॥

---

पूर्वस्मिन् प्रकरणेऽन्तःकरणाविवेकादात्मनि संसारित्वप्रतीतिः, न स्वत इति शास्त्रप्रामाण्याद्बाधिताज्ञानतत्कार्यो ब्रह्मरूप एवात्मेति निर्धारितम् । इदानीमन्तःकरणस्य परोक्षत्वात्, संसारप्रतिभासस्य चापरोक्षत्वान्न तत्प्रतिभासो बुद्ध्यविवेककृत इत्याशङ्क्यान्तःकरणस्यापरोक्षत्वप्रतिपादनपूर्वकं पूर्वोक्तशास्त्रार्थे युक्तिप्रदर्शनपरं प्रकरणं प्रक्रमते—स्वप्नस्मृत्योरिति ।

हि यस्मात्स्वप्ने स्मृतौ च घटादेर्विषयजातस्य रूपाभास आकारावभासो दृश्यतेऽनुभूयते, तस्मात्पुरा पूर्वं जाग्रदवस्थायामनुभवावस्थायामपि नूनमवश्यं तदाकारा घटाद्याकारा धीरन्तःकरणवृत्तिर्दृष्टा साक्षादनुभूतेत्यनुमीयत इत्यर्थः । स्वप्नस्मृत्योर्दृष्टार्थविषयत्वनियमात्पूर्वदृष्टस्य बाह्यार्थस्य चात्राभावात्

(१) 'स्य तत्रा'—पाठ. ।

भिक्षामटन्यथा स्वप्ने दृष्टो देहो न स स्वयम् ।
जाग्रद्दृश्यात्तथा देहाद्द्रष्टृत्वादन्य एव सः ॥ २ ॥
मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।
रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥ ३ ॥

स्वप्नस्मृत्योरुपलभ्यमानो विषयोऽर्थाकारवृत्तिमदन्तःकरणमेवेति जाग्रत्पूर्वानुभवयोरप्यन्तःकरणमेवार्थाकारवृत्तिमदपरोक्षमनुभूतमिति कल्प्यते । तस्मात्सर्वास्वप्यवस्थासु वृत्तिमदन्तःकरणस्यापरोक्षत्वात्तद्गतचिदाभासाविवेकादात्मनः संसारित्वावभासोऽपरोक्षो युक्त इति भावः ॥ १ ॥

एवमन्तःकरणस्यापरोक्षत्वे निरूपिते किमायातमात्मन इत्यपेक्षायां दृश्यादन्तःकरणादिसंघाताद्विवेकसिद्धिरायातेति सदृष्टान्तमाह—भिक्षामिति ।

सुप्तस्य यतः स्वप्ने भिक्षामटन् दृष्टो यो देहः स स्वयं द्रष्टा न भवति—यथा तद्देहात्मत्वमभिमन्यमानोऽपि तदात्मको न भवति, तथा जाग्रद्दृश्यादपि देहात्स आत्माऽन्य एव द्रष्टृत्वादित्यर्थः । देहपदमुपलक्षणमिन्द्रियान्तःकरणयोरपि । तथाच प्रयोगः—विमतो देहादिर्नात्मा, दृश्यत्वात्, स्वप्नदृश्यदेहादिवदिति ॥ २ ॥

बुद्धिरेव सर्वावस्थास्वर्थाकारा दृश्यत इत्युक्तमर्थं दृष्टान्तेन स्पष्टयति—मूषेति ।

मूषा अन्तःसुषिरा मृत्प्रतिमा । यथाग्निसंपर्काद्द्रवीभूतं ताम्रं मूषायां निषिक्तं निक्षिप्तं सत्तन्निभं जायते तत्समानाकृति भवति, तथा चित्तमपि रूपादीन् विषयान् व्याप्नुवत्तन्निभं दृश्यते, तदाकारं जायत इत्यर्थः ॥ ३ ॥

---

( १ ) अनुवर्तयत्—पाठः

व्यञ्जको वा यथाऽऽलोको व्यङ्ग्यस्याकारतामियात् ।
सर्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥ ४ ॥
धीरेवार्थस्वरूपा हि पुंसा दृष्टा पुराऽपि च ।
न चेत्स्वप्ने कथं पश्येत्स्मरतो वाऽऽकृतिः कुतः ॥ ५ ॥
व्यञ्जकत्वं तदेवास्या रूपाद्याकारदृश्यता ।
द्रष्टृत्वं च दृशेस्तद्वद्व्याप्तिः स्याद्धिय उद्भवे ॥ ६ ॥

ननु मूषासिक्तताम्रस्य कठिनमूषाभिघातेन शैत्यापत्तौ तदाकारापत्तिरिति युज्यते, चित्तस्य त्वमूर्तत्वाद्विषयव्याप्तावपि कथं तदाकारापत्तिसंभव इत्याशङ्क्य दृष्टान्तान्तरमाह—व्यञ्जको वेति ।

व्यञ्जकोऽग्न्यादिरयःपिण्डादेः, आलोको वा घटादेः । स्पष्टार्थः ॥४॥

बुद्धेरन्वयमुखेन 'स्वप्नस्मृत्योः'[1] इत्यत्रोपपादितमपरोक्षत्वमनूद्य व्यतिरेकमुखेनोपपादयति—धीरेवेति ।

स्पष्टम् ॥ ५ ॥

आलोकादिवद्व्यञ्जकत्वाद्बुद्धेर्व्यङ्ग्याकारत्वमुक्तं स्पष्टयति—व्यञ्जकत्वमिति ।

अस्या बुद्धेर्या रूपाद्याकारेण दृश्यता दर्शनयोग्यतापत्तिः, तदेव विषयव्यञ्जकत्वमित्यर्थः । चैतन्यं हि विषयावभासः, विषयश्च न बुद्धेरन्यत्र स्वातन्त्र्येण स्फुरति । तथाच बुद्धेर्विषयाकारत्वाभावे, चैतन्यस्य विषयात्मना स्फूर्तिरनुपपन्नेति विषयाभिव्यक्त्यर्थतया तदाकारापत्तिरेव बुद्धेर्व्यञ्जकत्वमित्यभिप्रायः । यथा रूपाद्याकारेणावभासमानत्वमेव धियो रूपादिव्यञ्जकत्वं, तथा दृशेरात्मनो धिय उद्भवे धर्माधर्मवशादुत्पत्तौ सत्यां तद्व्याप्तिस्तदात्मना स्फुरणमेव द्रष्टृत्वं, न परिणाम इत्याह—द्रष्टृत्वं चेति ।

---

(१) १४-१.

चिन्मात्रज्योतिषा सर्वाः सर्वदेहेषु बुद्धयः ।
मया यस्मात्प्रकाश्यन्ते सर्वस्यात्मा ततो ह्यहम् ॥ ७ ॥
करणं कर्म कर्ता च क्रिया स्वप्ने फलं च धीः ।
जाग्रत्येवं यतो दृष्टा द्रष्टा तस्मादतोऽन्यथा ॥ ८ ॥

यद्यपि धियो विषयव्याप्तिः परिणाममन्तरेण न भवति विषयदेशे तस्याः प्रागेवासत्त्वात्, तथापि चैतन्यात्मनो धीवृत्तिव्याप्तौ न परिणामापेक्षा चिदात्मन्येव तत्प्रकाशकवलिताया एव धियः सदोत्पत्तेरिति भावः ॥ ६ ॥

बुद्धितद्वृत्तिसाक्षित्वेन चिदात्मनः परिणामाभावेऽपि न तस्य ब्रह्मरूपतयैकत्वं युक्तं, प्रतिदेहं तत्तद्बुद्धिसाक्षिभेदादित्याशङ्क्य, प्रमाणाभावान्नैवमित्याह—चिन्मात्रेति ।

यथैकस्मिञ्छरीरे बुद्ध्यवभासोऽविकृतचिद्व्याप्तिमात्रः, तथा सर्वशरीरगतबुद्ध्यवभास इति भास्यबुद्धिभेदेऽपि न तदवभासस्वरूपभेदः प्रमाणपथमवतरति । भेदस्यापि साक्ष्यत्वेन साक्षिधर्मत्वाभावान्न साक्षिभेदाशङ्कावकाश इत्यर्थः ॥ ७ ॥

चैतन्यस्य सर्वत्रैकत्वेऽपि दृश्यस्य बुद्ध्यादेरनेकत्वान्नाद्वयब्रह्मात्मतासिद्धिरित्याशङ्क्य सकलदृश्यस्यानाद्यनिर्वाच्याविद्याविलासबुद्धिमात्रत्वाच्चैतन्यस्याद्वयब्रह्मत्वमविरुद्धमित्युपपादयति—करणमिति ।

यथा क्रियाकारकफलानि स्वप्ने धीरेव, बाह्यार्थस्य तदा तत्राभावादिति निश्चितं; एवमेव जाग्रति जाग्रदवस्थायां च यतो धीरेव क्रियाकारकफलरूपा दृष्टा तथैव बहिःपदार्थसत्त्वमवगतम्, तथाऽसति सुषुप्तावपि तदाकारविशेषस्फुरणं कदाचित्स्यात् । तस्माद्विषयैः सहैवात्मनि बुद्धेरध्यस्तत्वात्, तस्याश्चाऽऽद्यन्तवत्त्वेन मिथ्यात्वात्, दृष्टात्मा ततो बुद्धेरन्यथा—अन्यादृशः—सत्योऽखण्डैकरस इत्यर्थः ॥ ८ ॥

बुद्ध्यादीनामनात्मत्वं हेयोपादेयरूपतः ।
हानोपादानकर्तात्मा न त्याज्यो न च गृह्यते ॥ ९ ॥
सबाह्याभ्यन्तरे शुद्धे प्रज्ञानैकरसे घने ।
बाह्यमाभ्यन्तरं चान्यत्कथं हेयं प्रकल्प्यते ॥ १० ॥
य आत्मा नेति नेतीति परापोहेन शेषितः ।
स चेद्ब्रह्मविदात्मेष्टो यतेतातः परं कथम् ॥ ११ ॥

अन्यथेत्युक्तं स्फुटयति—बुद्ध्यादीनामिति ।

बुद्ध्यादयोऽनात्मस्वरूपधर्मा आगमापायित्वाद्घटादिवदित्युक्ते चिदात्मनि व्यभिचारमाशङ्क्य परिहरति—हानोपादानेति । बुद्ध्यादेर्हानोपादानयोर्लयविक्षेपयो कर्तात्मा—तदधिष्ठानमात्रेण कर्तेत्युच्यते । स न केनचित्त्याज्यो न विलाप्य, न च गृह्यते न विक्षिप्यते, आत्मन सर्वाधिष्ठानत्वात्, तस्य चाधिष्ठानान्तराभावादित्यर्थ ॥ ९ ॥

आत्मन स्वरूपेणाहेयानुपादेयत्वेऽपि तत्सबन्धित्वेन प्राप्तस्य बाह्यस्य वस्त्राभरणादेरान्तरस्य च पापादेर्हेयत्वमान्तरस्य च योगध्यानादेरुपादेयत्व च भविष्यतीति न विशुद्धिरात्मन इत्याशङ्क्याह—सबाह्येति ।

बाह्याभ्यन्तरसहिते—बाह्यमाभ्यन्तर चात्मैव, न तत पृथगित्यर्थ । यत शुद्ध केवलोऽतो बाह्याभाव, यतश्च प्रज्ञानैकरसोऽतो नान्तरमपि पृथगस्ति। एकरसत्व स्पष्टयति—घन इति। सैन्धवघनवद्विज्ञानघन इत्यर्थ। हेयमित्युपलक्षणम् । एवभूते आत्मनि कथ हेयमुपादेय वा कल्प्यत इत्यर्थ । सत्तास्फूर्त्यनालिङ्गितस्य बाह्यस्याभ्यन्तरस्य चोल्लिखितुमशक्यत्वात्, तयोश्चात्मस्वरूपत्वात्, न ततो बहिरन्तर्वा किमप्यस्ति परमार्थतो यदुपादेय हेय वा भवेदिति नात्मनो विशुद्धिसकोचावकाश इति भाव ॥ १० ॥

वस्तुस्वभावानुसारेण विचार्यमाणे नात्मनि हेयाद्यस्तीत्युक्तम्, इदानीं विद्वदनुभवेनाप्ययमर्थोऽवगम्यत इत्याह—य आत्मेति ।

अशनायाद्यतिक्रान्तं ब्रह्मैवास्मि निरन्तरम् ।
कार्यवान् स्यां कथं चाहं विमृशेदेवमञ्जसा ॥ १२ ॥
पारगस्तु यथा नद्यास्तत्स्थः पारं यियासति ।
आत्मज्ञश्चेत्तथा कार्यं कर्तुमन्यदिहेच्छति ॥ १३ ॥
आत्मज्ञस्यापि यस्य स्याद्धानोपादानता यदि ।
न मोक्षार्हः स विज्ञेयो वान्तोऽसौ ब्रह्मणा ध्रुवम् ॥ १४ ॥
सादित्यं हि जगत्प्राणस्तस्मान्नाहर्निशैव वा ।
प्राणज्ञस्यापि न स्यातां कुतो ब्रह्मविदोऽद्वये ॥ १५ ॥

ब्रह्मविदो ज्ञानिनः आत्मा स्वरूपम् । कथं यतेत कृतकृत्यत्वादित्यर्थः ११॥

एवंविधमात्मतत्त्वं न परानुभवगम्यमिति स्वयमेवात्मविदा शास्त्राचार्योपदेशानुसारेण विवेक्तव्यमित्याह—अशनायादीति ।

षड्डूर्मिरहितमित्यर्थः ॥ १२ ॥

एवं विमर्शे प्राप्तं प्रापणीयमिति कर्तव्यबुद्धिरेव न भवेदिति दृष्टान्तेनाह—पारग इति ।

नद्याः पारं परतीरं गतो यथा तत्स्थः परतीरस्थ एव तमेव पारं यियासति यातुं प्राप्तुमिच्छति चेदित्यन्वयः । तथा यथोक्तात्मज्ञोऽन्यत्कार्यं कर्तुमिह श्रेयोमार्गे इच्छतीति योजना । नैव यियासति, नैवेच्छति चेत्यर्थः १३

यः पुनरात्मज्ञोऽपि कार्यवान् स्यात्, स न सम्यग्दर्शीति तं निन्दति—आत्मज्ञस्यापीति ।

स्पष्टार्थः ॥ १४ ॥

'अनागतां तु ये पूर्वामनस्तां तु पश्चिमाम् ।
संध्यां नोपासते विप्रास्ते कथं ब्राह्मणाः स्मृताः ।' ॥

(१) बृ. उ. ३. ५. १. (२) १३. ४. (२) ?

न स्मरत्यात्मनो ह्यात्मा विस्मरेद्वाऽप्यलुप्तचित् ।
मनोऽपि स्मरतीत्येतज्ज्ञानमज्ञानहेतुजम् ॥ १६ ॥

इति स्मृतेर्ब्रह्मविदोऽपि विप्रस्य संध्यावन्दनमस्ति कार्यमित्याशङ्क्य कैमुतिकन्यायेन निराकरोति—सादित्यमिति ।

आदित्यः सूर्यस्तत्सहितमिदं जगत्सर्वं हि यस्मात्प्राणो हिरण्यगर्भः, तस्मात् प्राणज्ञस्यापि प्राणोऽहमस्मीति प्राणात्मभावमापन्नस्याप्युपासकस्येति यावत् । अहर्निशैव वा न स्याताम्—उदयास्तमयरहितसूर्यरूपत्वात्तस्याहोरात्रे न स्यातामित्यर्थः । तथा च श्रुतिः—'न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति' इति । तथा च प्राणज्ञस्यापि प्राणविदोऽपि भेददर्शिनो यद्यहर्निशे न स्यातां, तदास्य ब्रह्मविदो मुख्यब्रह्मभूतस्याद्वये सर्वद्वैताभासरहिते स्वरूपे कुतः स्याताम्? न कुतोऽपीति कालभेददर्शनाभावादेव तन्निमित्तकर्तव्याभाव इत्यर्थः ॥ १५ ॥

ब्रह्मविदो बाह्यक्रियाभावेऽपि 'संध्यं समाधावात्मन्याचरेत्' इति श्रुतेः स्वात्मनि विस्मृतिं परित्यज्य मोक्षाय स्मृतिः कर्तव्येत्यत आह—न स्मरतीति ।

स्मरतियोगात्षष्ठी द्वितीयार्थे । स्मरणविस्मरणयोरभावे हेतुः—अलुप्तचिदिति । यद्यशक्यत्वादात्मनः स्वस्मरणं विधातुं न युक्तं, तर्हि तत्त्वज्ञानादूर्ध्वमाविर्भावतिरोभावादिविकारशान्तये मन एवात्मानं स्मरेदिति विधिः स्यादित्यत आह—मनोऽपीति । मनसोऽचेतनत्वात्स्मर्तृत्वानुपपत्तेर्मनः स्मरतीति ज्ञानमप्यज्ञानहेतुजमविवेकविलसितमित्यर्थः । तथा चासम्यग्ब्रह्मविद आत्मव्यतिरेकेण मनः पश्यतः 'संध्यं समाधौ' इति विधिः, न सम्यग्ब्रह्मविद इति भावः ॥ १६ ॥

---

(१) 'द्रान'—पाठः (२) छां. उ. ३. ११. ३. (३) आरुणिक-उ. २. संधि—पाठः (४) स्वरहितः पाठः ।

ज्ञातुर्ज्ञेयः परो ह्यात्मा सोऽविद्याकल्पितः स्मृतः ।
अपोढे विद्यया तस्मिन् रज्ज्वां सर्प इवाद्वयः ॥ १७ ॥
कर्तृकर्मफलाभावात्सबाह्याभ्यन्तरं ह्यजम् ।
ममाहं चेति[1] यो भावस्तस्मिन्कस्य कुतो भवेत् ॥ १८ ॥
आत्मा ह्यात्मीय इत्येष भावोऽविद्याप्रकल्पितः ।
आत्मैकत्वे ह्यसौ नास्ति बीजाभावे कुतः फलम् ॥ १९ ॥

यद्यप्यात्माऽलुप्तचिद्रूपत्वान्नात्मानं स्मरति, तथापि परमात्मानं स्मरेदेवे-त्याशङ्क्याह—ज्ञातुरिति ।

यदि पर आत्मा ज्ञातुर्ज्ञेयो विषयः स्यात्, तदा सोऽविद्याकल्पितः स्वाज्ञानकल्पितो हि निश्चितं स्मृतो ज्ञातो विद्वद्भिः । ज्ञानविषयस्य रज्जु-सर्पवदविद्याकल्पितत्वनियमात्स आत्मैव न भवतीत्यर्थः । तथाच तस्मि-न्नात्मनः परत्वज्ञेयत्वादिके विद्यया आत्मविद्ययाऽपोढे बाधिते सति ज्ञातृ-ज्ञेयविभागाभावादद्वय एवात्मा भवतीत्यर्थः । तत्र दृष्टान्तो रज्ज्वा सर्प इवेति । यथा रज्जुविद्यया सर्पे बाधिते रज्जुरेवावशिष्यते तद्वदित्यर्थः ॥१७॥

प्रत्यगात्मनो वस्तुतोऽद्वितीयत्वेऽपि तस्मिन्ममाहमित्यादिसंसारप्रति-भासात्तन्निवृत्तये किमपि कर्तव्यं भविष्यतीत्यत आह—कर्तृकर्मेति ।

कर्तृकर्मफलभेदाभावात्सबाह्याभ्यन्तरमजमेवात्मस्वरूपं हि यतः तस्मि-न्नात्मनि ममाहमित्यादिरूपो यो भावः प्रतिभासः स कस्य भवेत्, कुतो वा हेतोर्भवेत्? न भवेदेवेति योजना । तस्मात्तज्ज्ञानोत्पत्तेः प्रागेव सर्व-कर्तव्यता, नोर्ध्वमिति भावः ॥ १८ ॥

आत्मविदो देहादावहङ्कारममकाराभावे हेतुमाह—आत्मा ह्यात्मीय इति । आत्मैकत्वे ज्ञाते सतीति शेषः ॥ १९ ॥

---

(१) चेति, वेति—पाठौ (२) अतस्मिन्—पाठः

द्रष्टृ श्रोतृ तथा मन्तृ विज्ञात्रेव तदक्षरम् ।
द्रष्ट्राद्यन्यन्न तद्यस्मात्तस्माद्द्रष्टाऽहमक्षरम् ॥ २० ॥
स्थावरं जंगमं चैव द्रष्टृत्वादिक्रियायुतम् ।
सर्वमक्षरमेवातः सर्वस्याऽऽत्माऽक्षरं त्वहम् ॥ २१ ॥
अकार्यशेषमात्मानमक्रियात्मक्रियाफलम् ।
निर्ममं निरहंकारं यः पश्यति स पश्यति ॥ २२ ॥

केन प्रमाणेन तदात्मैकत्वं ज्ञातुं शक्यमित्यपेक्षाया वेदान्तवाक्यप्रमाणबलादित्याह—द्रष्टृ श्रोत्रिति द्वाभ्याम् ।

यद्द्रष्टृ श्रोतृ मन्तृ विज्ञातृ प्रसिद्धं प्रत्यग्रूपं तदक्षरमेव सर्वाधिष्ठानं ब्रह्मैवेति योजना । तथाच श्रुतिरक्षरं प्रकृत्य 'अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ' इति । तथा 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति विज्ञातृ' इत्युत्तरवाक्यार्थमाह—द्रष्ट्रादीति । तत् द्रष्ट्रादिप्रत्यक्स्वरूपं तस्मादक्षरादन्यन्न भवतीत्यर्थः । यस्मादेवमविषयभूतमेवाद्वयमात्मतत्त्वं श्रुतिसिद्धं तस्माद्द्रष्टाहमक्षरमित्युपसंहारः ॥ २० ॥

प्रत्यगात्मनोऽक्षरब्रह्मात्मत्वेऽपि कथमद्वयात्मत्वसिद्धिरित्याशङ्क्य 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति श्रुत्यर्थं वदन्नद्वयात्मत्वं साधयति—स्थावरमिति ।

उपाधिः, उपहितं, उपाध्याधारश्चेति सर्वमक्षरमेव, अतोऽहमक्षरं सर्वस्यात्मा स्वरूपं, न मदन्यत्किमप्यस्तीत्यर्थः ॥ २१ ॥

स्थावरादिसर्वमक्षरमित्युक्ते सप्रपञ्चमेवाक्षरमात्मेति प्रतिभासशङ्का वारयन्नागमिकमात्मज्ञानं स्फुटयति—अकार्यशेषमिति ।

---

(१) द्रष्टृ नान्यदतस्तस्माद्यस्माद्द्रष्टाहमक्षरम्—पाठः (२) तदात्मकत्व—पाठः
(३) बृ. उ. ३. ८. ११.

ममाहंकारयत्नेच्छाः शून्या एव स्वभावतः ।
आत्मनीति यदि ज्ञातमाध्वं स्वस्थाः किमीहितैः॥ २३ ॥
योऽहंकर्तारमात्मानं तथा वेत्तारमेव च ।
वेत्त्यानात्मज्ञ एवासौ योऽन्यथाज्ञः स आत्मवित्॥ २४ ॥
यथान्यत्वेऽपि तादात्म्यं देहादिष्वात्मनो मतम् ।
तथाऽकर्तुरविज्ञानात्फलकर्मात्मताऽऽत्मनः ॥ २५ ॥

अकार्यशेषत्वमकर्तृत्वम् । तत्र हेतु—अक्रियात्मेति । क्रियास्वरूपतत्फलविलक्षणमित्यर्थ । क्रियातत्फलसंसर्गशून्यमिति वा । कुत ? यतो निर्ममम् । तदपि कुत ? यतो निरहंकारम् । एवंविधमात्मान य सम्यक्पश्यति, स एव तत्त्वदर्शीत्यर्थ ॥ २२ ॥

आत्मविदोऽहंकाराद्यभावादकर्मशेषत्वमुक्त प्रपञ्चयंस्तस्य कृतकृत्यतामाह—ममाहंकारेति ।

आत्मनि स्वभावत शून्या एव—अविद्याप्रयुक्तदेहाद्यभिमान विना न सन्तीत्यर्थ । हे मुमुक्षव , यद्येव ज्ञात, तर्हि स्वस्था निर्व्यग्रा सन्त आध्व तिष्ठत । किमीहितै कर्मभि कृत्यम् ? ज्ञानेनैव कृतकृत्यत्वात् , कर्मणा चानधिकृतकृताना विफलत्वाच्चेत्यर्थ ॥ २३ ॥

देहाद्यतिरिक्तात्मज्ञानवत सर्वेषु पारलौकिककर्मस्वधिकाराभ्युपगमाद्वस्त्यात्मविदोऽपि सफल कर्मेत्याशङ्क्य तस्यात्मतत्त्ववित्त्वमेव नास्तीत्याह—योऽहंकर्तारमिति ।

कस्तर्ह्यात्मविदित्यत आह—योऽन्यथाज्ञ इति । योऽकर्तारमज्ञातारमभोक्तार चात्मान जानाति, स आत्मतत्त्वविदित्यर्थ ॥ २४ ॥

किमिति कर्तात्मेति जानतो नात्मवित्त्वमात्मन्येव कर्तृत्वादिप्रतिभासा-

---

( १ ) वेत्ति नात्मज्ञ —पाठ ( २ ) स्वा —पाठ

दृष्टिः श्रुतिर्मतिर्ज्ञातिः स्वप्ने दृष्टा जनैः सदा ।
तासामात्मस्वरूपत्वादतः प्रत्यक्षताऽऽत्मनः ॥ २६ ॥
परलोकभयं यस्य नास्ति मृत्युभयं तथा ।
तस्यात्मज्ञस्य शोच्याः स्युः सब्रह्मेन्द्रा अपीश्वराः ॥२७॥

वित्याशङ्क्य, कर्त्रविवेकनिबन्धनोऽयं भ्रम इत्यभिप्रेत्याह—यथान्यत्वेऽपीति ।

यथा परमार्थतो देहादिभ्योऽन्यत्वेऽप्यात्मनस्तेषु तादात्म्यमाध्यासिक मतमिष्टं, तथाऽकर्तुर्भोक्तुरविज्ञानादात्मन फलकर्मात्मता मता । यथा स्थूलदेहात्मनोरभेदाध्यासान्मनुष्यत्वाद्यभिमान, तथाऽहंकारप्रधानलिङ्गदेहाविवेकात्कर्तृत्वाद्यभिमानो मिथ्याबुद्धिरित्यर्थ ॥ २५ ॥

नन्वहंकारस्यैवात्मत्वात्कथमहंकारात्मनोरविवेक इत्युच्यत इत्यत आह—दृष्टिरिति ।

दृक्श्रादिशब्दैश्चक्षुरादिद्वारकान्त करणवृत्तयो निर्दिश्यन्ते । तास्तु सदैव स्वप्ने जनैर्दृष्टा । सवृत्तिकस्यान्त करणस्य स्वप्ने वेद्याकारत्वात्, तद्वेदितान्य साक्षी सिद्ध इत्यभिप्राय । किंच तासा दृक्श्यादीनामात्मस्वरूपत्वादिति । अयमर्थ —सुषुप्ते सवृत्तिकस्यान्त करणस्याऽविद्यामात्रतयात्मन्यस्तमयात्, आत्मनश्चानस्तमयात्, स्वतस्तस्याद्वितीयापरोक्षचिन्मात्रतया वभासमानत्वात्, युक्ता अन्त करणादहंकारादिरूपादात्मनो व्यतिरेकसिद्धिरिति । यत एवमत आत्मन प्रत्यक्षता साक्षिमात्रेण स्वयं प्रकाशमानतया नित्यापरोक्षब्रह्मरूपता सिद्धेत्यर्थ ॥ २६ ॥

एवमशेषप्रमातृसाक्षिभूततया प्रत्यगात्मनो ब्रह्मत्वापादने लाभ दर्शयन्

---

(१) भोक्तृकर्मात्मता—अधिक पाठ (२) ॰भाने—पाठ

ईश्वरत्वेन किं तस्य ब्रह्मेन्द्रत्वेन वा पुनः ।
तृष्णा चेत्सर्वतश्छिन्ना सर्वदैन्योद्भवाऽशुभा ॥ २८ ॥
अहमित्यात्मधीर्या च ममेत्यात्मीयधीरपि ।
अर्थशून्ये यदा यस्य स आत्मज्ञो भवेत्तदा ॥ २९ ॥

'योऽन्यथाज्ञः स आत्मवित्' इत्यत्रोक्तमात्मवित्त्वं स्पष्टीकरोति—परलोकभयमिति ।

यस्य परलोकभयं परलोकनिमित्तं भयं 'किमहं साधु नाकरवम् । किमहं पापमकरवम्' इत्यादिरूपं नास्ति, 'नैनं कृताकृते तपतः' इति श्रुतेः । तथा यस्य मृत्युभयं मरणभयं नास्ति, 'न जीवो म्रियते' इति श्रुतेः । आत्मव्यतिरिक्तस्य द्वितीयस्यादर्शनात्—द्वितीयदर्शननिमित्तं हि भयं 'द्वितीयाद्वै भयं भवति' इति श्रुतेः । तस्यात्मज्ञस्य ब्रह्मेन्द्राद्या अपि ज्ञानैश्वर्यसंपन्नतया ईश्वरा अपि शोच्याः शोचनीयाः स्युः—अहो एते ऐश्वर्यासक्ततया व्यग्राः कथं स्वस्थाः स्युरिति । तस्माद्यः परलोकमरणनिमित्तव्यग्रताहेत्वहंकारादिशून्यतया ब्रह्मनिष्ठः स एवात्मवित्, न विपरीत इति सिद्धम् ॥ २७ ॥

ब्रह्मेन्द्रादिभावस्य सर्वैः प्रार्थ्यमानत्वात्कथं शोच्यतेत्याशङ्क्य ब्रह्मात्मज्ञानादूर्ध्वं न किमपि प्रार्थ्यमस्तीत्याशयेनाह—ईश्वरत्वेनेति ।

सर्वत्र दैन्यस्योद्भवो यस्याः सा तथा; अत एवाशुभा पापप्रवृत्तिद्वारत्वात् सा तृष्णा चेत्सर्वतः सर्वात्मना सह मूलेन छिन्नेत्यर्थः । तथाच श्रुतिः—

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' इति ॥ २८ ॥

'निर्ममं निरहंकारं यः पश्यति स पश्यति' इत्युक्तं स्पष्टयन्नात्मज्ञस्य लक्षणमाह—अहमितीति ।

(१) १४. २४. (२) तै. उ. २. ९. (३) बृ. उ. ४. ४. २२. (४) छां उ. ६. ११. ६. (५) बृ. उ. १. ४. २. (६) बृ उ. ४. ४. ७. (७) १४. २२.

बुद्धयादौ सत्युपाधौ च तथाऽसत्यविशेषता ।
यस्य चेदात्मनो ज्ञाता तस्य कार्यं कथं भवेत् ॥ ३० ॥
प्रसन्ने विमले व्योम्नि प्रज्ञानैकरसेऽद्वये ।
उत्पन्नात्मधियो ब्रूत किमन्यत्कार्यमिष्यते ॥ ३१ ॥

यस्य शास्त्राचार्यानुगृहीतस्य पदार्थद्वयविवेकवतोऽहंममेति चात्मात्मीयविषयधियावर्थशून्ये प्रयोजनशून्ये यदा स्याताम्—तत्प्रयुक्तव्यवहारहीनः पुमान् यदा स्यादित्यर्थः—तदा स आत्मविद्भवेत्, देहादौ तदनुबन्धे च व्यवहारकालेऽपि पूर्ववद्वस्तुत्वोल्लेखरहिततया आत्ममात्रदर्शी सम्यगात्मविदित्यर्थः ॥ २९ ॥

यदैवमात्मज्ञानं वाक्याद्भवति, तदा कृतकृत्यत्वान्न तस्य कार्यशेषता संभवतीति प्रागुक्तमकार्यशेषत्वं प्रपञ्चयति—बुद्धयादाविति ।

जाग्रत्स्वप्नयोर्बुद्धयादावुपाधौ सति तथा सुषुप्तावसति च यस्यात्मनोऽविशेषता चेज्ज्ञाता । चेच्छब्दोऽसंदेहेऽपि संदेहवचनः 'वेदाश्चेत्प्रमाणम्' इतिवत् । तस्याविशेषात्मज्ञस्य कार्यं कथं भवेत् ? न कथंचिदित्यर्थः ॥३०॥

आत्मविदो नास्ति कार्यमित्यत्र हेत्वन्तरमाह—प्रसन्न इति ।

व्योम्नि व्योमसदृशे प्रसन्ने स्वतो दोषरहिते विमले आगन्तुकमलवर्जिते । उक्तविशेषणद्वयसाधकं क्रमेण विशेषणद्वयं 'प्रज्ञानैकरसेऽद्वये' इति । एतस्मिन् ब्रह्मण्युत्पन्ना आत्मधीरात्मेति मतिः—एवंविधं ब्रह्मैवात्मेति बुद्धिः—यस्य, तस्यात्मस्वरूपज्ञानादन्यत्किं कार्यमिष्यते तद्ब्रूत । न किमपीत्यर्थः ॥ ३१ ॥

---

( १ ) तथा सत्यं—पाठः ( २ ) १४. २२, २३.

आत्मानं सर्वभूतस्थममित्रं चात्मनोऽपि यः ।
पश्यन्निच्छत्यसौ नूनं शीतीकर्तुं विभावसुम् ॥ ३२ ॥
प्रज्ञाप्राणानुकार्यात्मा छायेवाक्षादिगोचरः ।
ध्यायतीवेति चोक्तो हि शुद्धो मुक्तः स्वतो हि सः॥३३॥

ननु शास्त्राचार्यप्रसादादेव तत्त्वेऽवगम्यमानेऽपि श्रेयोमार्गप्राप्तिप्रतिबन्धकस्य शत्रोः संभवात्, तत्परिहारार्थं किमप्यनुष्ठेयं स्यादिति चेन्नेत्याह— आत्मानमिति ।

यथोष्णस्वभावस्य विभावसोः शीतस्वभावतापादनं न संभाव्यते, तथा सर्वभूतात्मभूतस्य शत्रुमित्रादिसंभावना दुःसंपादेति नानुष्ठेयकल्पनावसर इत्यर्थः ॥ ३२ ॥

आत्मनः कर्मशेषत्वं किं सोपाधिकस्येष्यते, निरुपाधिकस्य वेति विकल्प्य, आद्यमङ्गीकृत्य, द्वितीयं दूषयति—प्रज्ञेति ।

प्रज्ञा बुद्धिः । प्रज्ञाप्राणावनुकर्तुं शीलमस्यास्तीति प्रज्ञाप्राणानुकारी— प्रज्ञाप्राणोपाधिक इत्यर्थः । छायेव सूर्यादिप्रतिबिम्बमिव जलेष्वक्षादिगोचरः इन्द्रियव्यवहारकवृत्तिषु प्रतिबिम्बित आत्मा तदविवेकात्करोतीवेति 'ध्यायतीव लेलायतीव' इति श्रुत्योक्तस्तया दशाया कर्मशेषत्वमश्नुवानोऽपि स्वतः शुद्धो मुक्तश्च हि स आत्मा भवति । उदकानुगतत्वेन सूर्यस्य कम्पादिमत्तया भासमानत्वेऽपि न परमार्थतः सूर्यः कम्पादिमान् भवति । तथा चोपाधिविगमे भेदविपर्यासादिविगमाद्व्यवहारहीनं कर्म आत्मतत्त्वविदं न ढौकत इत्यर्थः ॥ ३३ ॥

(१) कार्यशे—पाठः (२) बृ. उ. ४. ३. ७.

अप्राणस्याऽमनस्कस्य तथाऽसंसर्गिणो दृशेः ।
व्योमवद्व्यापिनो ह्यस्य कथं कार्यं भवेन्मम ॥ ३४ ॥
असमाधिं न पश्यामि निर्विकारस्य सर्वदा ।
ब्रह्मणो मे विशुद्धस्य शोध्यं नान्यद्विपाप्मनः ॥ ३५ ॥
गन्तव्यं च तथा नैव सर्वगस्याऽचलस्य च ।
नोर्ध्वं नाधस्तिरो वापि निष्कलस्यागुणत्वतः ॥ ३६ ॥

निरुपाधिकस्यात्मनो न कर्मशेषत्वमित्युक्तमुपपादयन् 'प्राणायामान्षडाचरेत्[1]' इत्यादियतिधर्मविधिशेषतापि नास्यास्तीत्याह—अप्राणस्येति ।

क्रियाशक्तिप्राणहीनस्य ज्ञानशक्तिमनोहीनस्य स्वभावतोऽसंसर्गिणोऽसङ्गस्य व्योमवदपरिच्छिन्नस्य—स्वतश्चलनशक्तिरहितस्येति यावत्—दृशेश्चिदेकरसस्यास्यैवंविधस्य मम कथं कार्यं भवेत्? न कथमपीत्यर्थः॥ ३४ ॥

'तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये[2]' ॥

इत्यादिभगवद्वचनान्मनःसमाधानानुष्ठानेनात्मशुद्धिः संपाद्या अवशिष्यत इत्याशङ्क्य, तस्याः प्रागेव सिद्धत्वान्नेदानीमस्त्यवसर इत्यभिप्रेत्याह—असमाधिमिति ।

विकारो[3] ह्यसमाधिर्नाम । तद्धेतूपाधिशून्यतया सदा निर्विकारस्य तन्न पश्यामि । ब्रह्मभूतस्यात एव सर्वदा विशुद्धस्य प्रागेव विपाप्मनो नित्यनिवृत्तकल्मषस्य शोध्यं चान्यन्न पश्यामीत्यर्थः ॥ ३५ ॥

नन्वन्यन्न पश्यामीत्ययुक्तं, गन्तव्यत्रह्मलोकादेर्गमनसाधनस्यार्चिरादिमार्गस्य च ब्रह्मविदोऽपि ज्ञातव्यत्वादित्याशङ्क्य, सगुणब्रह्मविदस्तत्सत्त्वेऽपि न निर्गुणब्रह्मविदस्तथात्वमिति सहेतुकमाह—गन्तव्यमिति ।

(१) मनुस्मृ. ६. ६९. (२) भ. गी. ६. १२. (३) विकारे—पाठः

चिन्मात्रज्योतिषो नित्यं तमस्तस्मिन्न विद्यते ।
कथं कार्यं ममैवाद्य नित्यमुक्तस्य शिष्यते ॥ ३७ ॥
अमनस्कस्य का चिन्ता क्रिया वाऽनिन्द्रियस्य का ।
'अप्राणो ह्यमनाः शुभ्र' इति सत्यं श्रुतेर्वचः ॥ ३८ ॥

गन्तव्यमिति भावकर्मणोस्तन्त्रेण ग्रहणम् । तथाच सर्वगत्वेन चलनासामर्थ्याद्गन्तव्यं नैव पश्यामि—गमनधात्वर्थं नैव पश्यामीत्यर्थः । तथा गन्तव्यं गत्या प्राप्यं देशं स्थानविशेषं न पश्यामि । कुत इत्यत आह—नोर्ध्वमिति । तिर इति पुरस्तात्पश्चाद्दक्षिणं चोत्तरं च नैव पश्यामीत्यनुषङ्गः । कुतो देशभेदाभाव इत्यत आह—निष्कलस्येति । पूर्णस्येत्यर्थः । कुतो निष्कलत्वं ज्ञानसुखादिगुणात्मकावयवयोगात् ? इत्यत आह—अगुणत्वत इति । ज्ञानसुखयोः स्वरूपत्वात्, संसर्गिगुणस्य चासङ्गे मय्यसंभवात्, गुणतोऽपि विभागशून्यस्य न गन्तव्यं प्राप्यं, गतिः प्राप्तिर्वा विद्यत इति न तत्साधननिष्पादनविधानावकाश इत्यर्थः ॥ ३६ ॥

किंचाज्ञानोपाधिं विनात्मनि नित्यमुक्ते कस्यापि विशेषस्योत्प्रेक्षितुमशक्यत्वात्, अज्ञानस्य च ज्ञानस्वभावे वस्तुतोऽसंभाव्यमानत्वात्, न कदाप्यात्मनः क्रियायोग्यतेति स्थिते, कुत इदानीमज्ञानप्रतिभासस्याप्यभावे कर्मविधिशेषता स्यादित्यभिप्रेत्याह—चिन्मात्रेति ।

तस्मिन्नात्मनि तम स्वरूपतः प्रतिभासतोऽपि न विद्यते । कुतः ? चिन्मात्रज्योतिषः । ज्योतिष्ट्व इति भावप्रधानो निर्देशः । सुगममन्यत् ३७

किंचाज्ञानाभावे बाह्यान्तःकरण एतत्संसर्गाभावात्तं विना प्रवृत्त्यभावान्न मे कर्मावसर इत्याह—अमनस्कस्येति ।

---

(१) मुं. उ. २. १. २. (२) 'ग्वाद्यो'—पाठः

अकालत्वाददेशत्वाददिक्त्वादनिमित्ततः ।
आत्मनो नैव कालादेरपेक्षा ध्यायतः सदा ॥ ३९ ॥
यस्मिन्देवाश्च वेदाश्च पवित्रं कृत्स्नमेकताम् ।
व्रजेत्तन्मानसं तीर्थं यस्मिन्स्नात्वाऽमृतो भवेत् ॥ ४० ॥

प्राणमनोविहीनत्वे प्रमाणमाह—अप्राणो हीति । श्रुतेर्वचः 'सत्यं सत्यार्थं, निर्दोषतया—स्वतःप्रमाणत्वादित्यर्थः ॥ ३८ ॥

अपररात्रादिकालस्य विविक्तपूतादिदेशस्य प्राच्यादिदिग्विशेषस्य मनोविक्षेपरहितस्य राहूपरागादिनिमित्तस्य च प्रतीक्षाया आत्मचिन्तने कर्तव्यत्वात्कथं कार्याभावः इत्याशङ्क्याह—अकालत्वादिति ।

सदात्मानं ध्यायतो यतेर्नैव कालादेरपेक्षास्तीति योजना । तत्र हेतुरात्मनोऽकालत्वादित्यादिः । आत्मस्वरूपस्य कालाद्यनिबन्धनत्वान्न तद्ध्याने तदपेक्षेत्यर्थः । तथा चाऽऽह भगवान् सूत्रकारः 'यत्रैकाग्रता तत्राविशेषात्'[1] इति ॥ ३९ ॥

ब्रह्मविदो देशकालादिसव्यपेक्षे कर्मण्यपेक्षाभावेऽपि प्रयागादितीर्थे स्यादपेक्षा 'गङ्गातीरे वसेन्नित्यं भिक्षुर्मोक्षपरायणः'[2] इत्यादिस्मृतिविहितत्वादित्याशङ्क्य, ब्रह्मात्मज्ञानरूपे तीर्थे साक्षान्मुक्तिहेतौ स्नातस्यात्मविदो न तीर्थान्तरापेक्षास्तीत्याह—यस्मिन्निति ।

यस्मिन् ब्रह्मात्मस्फूर्तिरूपे देवास्तत्तत्तीर्थस्थानविशेषाधिष्ठातारो माधवविश्वेश्वररामेश्वरत्रिविक्रमादयः पूजादर्शनस्पर्शनस्मरणादिभिर्भक्तपावनाः प्रसिद्धाः, तथा वेदाश्च ऋग्यजुःसामाथर्वाख्या अध्ययनब्रह्मयज्ञपाठानुष्ठानादिभिः पावयन्ति । तथा कृत्स्नं पवित्रं पावनं तीर्थविशेषं हरिहरनामोच्चारणादि एतत्सर्वमेकत्वं व्रजेत्—यस्मिन्सरित इव सागरेऽन्तर्भवन्ती

(१) ब्र. सू. ४. १. ११. (२) ?

न चास्ति शब्दादिरनन्यवेदनः
परस्परेणापि न चैव दृश्यते ।
परेण दृश्यास्तु यथा रसादयः
तथैव दृश्यत्वत एव दैहिकाः ॥ ४१ ॥

स्यर्थः । सर्वात्मकब्रह्माविर्भावरूपत्वादिति परमो हेतुरत्रानुसंधेयः । तन्मानसं मनसि वेदान्तमहावाक्यजनितान्तःकरणवृत्तिरूपे समुल्लसितं मानसं तीर्थं संसारपापमूलाविद्याघातकम् । तीर्थत्वं स्पष्टयति—यस्मिन्निति । यस्मिन्स्नात्वा निमज्ज्योदकराशौ निक्षिप्तोदकबिन्दुवत्तदेकतां प्राप्य इत्येतत्, अमृतो भवन्निर्विशेषनित्यात्मस्वरूप एव भवेत् । तस्मिंस्तीर्थे नित्यं निमग्नस्य न तीर्थान्तरापेक्षेति भावः । तथा च श्रुतिः 'शतं शुक्राणि यत्रैकं भवन्ति । सर्वे वेदा यत्रैकं भवन्ति । सर्वे होतारो यत्रैकं भवन्ति । स मानसीन आत्मा जनानाम् ॥'[1] इति । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ॥'[2] इति च ॥ ४० ॥

एवं कृतार्थत्वापादकं ज्ञानतीर्थं केनोपायेन प्राप्यमित्यपेक्षाया पूर्वोक्तपदार्थविवेक एव तल्लाभोपाय इति वक्तुं प्रथमं स्थूलदेहान्यत्वमात्मनो विशदयति—न चास्तीति ।

शब्दादिर्गन्धान्तो विषयोऽनन्यवेदनो न चास्ति, स्वयंप्रकाशतावन्नास्तीत्यर्थः । तथा परस्परेणापि—शब्देन स्पर्शः, स्पर्शेन शब्द इत्येवं परस्परेणापि न चैव दृश्यते प्रकाश्यते, जडत्वादेवेत्यर्थः । दर्शनमन्तरेण व्यवहारानुपपत्तेः, दर्शनस्य स्वतः परस्परतश्चाभावे परिशेषात्परेण स्वविलक्षणेनाजडेन प्रकाश्या एव । तुशब्दोऽवधारणार्थः । तथाच दैहिका अपि रसादयः परेण दृश्याः, दृश्यत्वात्, यथा बाह्यरसादयः, तथैवेमे, तस्मात्तथेत्यक्षरार्थः ॥४१॥

(१) तै. आ. ३. ११. (२) कठ. उ. ४. १५. (३) प्राप्य च अ°.—पाठः

अहंममेत्येपणयत्नविक्रिया
सुखादयस्तद्वदिह प्रदृश्यतः ।
दृश्यत्वयोगाच्च परस्परेण ते
न दृश्यतां यान्ति ततः परो भवान् ॥ ४२ ॥
अहंक्रियाद्या हि समस्तविक्रिया
सकर्तृका कर्मफलेन संहृता ॥
चितिस्वरूपेण समन्ततोऽर्कवत्
प्रकाश्यमानाऽसितताऽऽत्मनो ह्यतः ॥ ४३ ॥

तदेवं पञ्चभूतात्मकात्स्थूलाद्देहात्तद्द्रष्टारमात्मानं विविच्य, सूक्ष्मादपि देहात्तं विविनक्ति—अहंममेति ।

अहमहंकारः, एपणयत्नविक्रियासुखादयः कामप्रयत्नकर्तृत्वभोक्तृत्वसुखदुःखमोहद्वेषादयो ममेति निर्दिश्यमाना मनोवृत्तयस्तद्वच्छब्दादिवन्नात्मवेदनाः । कुतः ? इह व्यवहारभूमौ प्रदृश्यतो दर्शनकर्मत्वात् । ते परस्परेणापि दृश्यतां न यान्ति न प्राप्नुवन्ति । दृश्यत्वयोगादेव परिशेषात्तेषां द्रष्टा ततस्तेभ्योऽहंकारादिभ्यः—तत्संघातरूपाल्लिङ्गदेहादिति यावत्—भवानात्मा परोऽन्य इति योजना ॥ ४२ ॥

यद्यप्येवं देहद्वयग्राहकत्वात्तद्व्यतिरिक्त एवात्मा, तथापि तत्संबन्धप्रतीतेस्तस्य न नित्यमुक्तरूपतेत्याशङ्क्याह—अहंक्रियेति ।

अहंक्रियाहंकरणमहंममेत्येवमाद्या समस्तविक्रिया चितिस्वरूपेण चैतन्यप्रकाशात्मनाऽर्कवदर्केणेव समन्ततः प्रकाश्यमाना हि यतः, अत आत्मनोऽसितताऽनद्धता सिद्धा—विक्रियासंबन्धस्यापि दृश्यत्वाद्दृग्धर्मत्वानुपपत्तेर्न मुक्तिविरोध इत्यर्थः ॥ ४३ ॥

---

(१) भवेत्—पाठः सरलः ।

दृशिस्वरूपेण हि सर्वदेहिना
वियद्यथा व्याप्य मनास्यवस्थितः।
अतो न तस्मादपरोऽस्ति वेदिता
परोऽपि तस्मादत एक ईश्वरः॥ ४४ ॥

शरीरबुध्योर्यदि चान्यदृश्यता
निरात्मवादाः सुनिराकृता मया।
परश्च शुद्धो ह्यविशुद्धिकर्मतः
सुनिर्मलः सर्वगतोऽसितोऽद्वयः ॥ ४५ ॥

एव देहद्वयविविक्तस्याप्यात्मन प्रतिदेह परिच्छिन्नत्वान्न ब्रह्मात्मना पूर्णता सिद्ध्येदित्याशङ्क्याह—दृशिस्वरूपेण हीति।

हि यत आत्मा सर्वदेहिना मनासि दृशिस्वरूपेणैव व्याप्य घटादीनि वियदिवावस्थित, न परिच्छिन्नरूपेण। अतस्तस्मादात्मनश्चितिस्वरूपादपरो जीवो वेदिता नास्ति। तथा पर ईश्वरोऽपि तस्मादन्यो वेदिता नास्ति, चितिस्वभावत्वाविशेषत्वात्। तस्मादेक एवात्मेत्यर्थ। आत्मा न स्वरूपभेदवान्, उपाधिपरामर्शमन्तरेणाविभाव्यमानभेदत्वात्, आकाशवदिति भाव ॥४४॥

देहद्वयसाक्षी ब्रह्मस्वभावश्चेदात्मा, कथ तर्हि तस्य नास्तिताशङ्का केषाचिदित्याशङ्क्य स्वदोषवशादेवेत्यभिप्रेत्याह—शरीरेति।

शरीरबुद्ध्यो स्थूलसूक्ष्मदेहयोर्यद्यन्येन नित्यसद्रूपेण दृश्यता पूर्वोक्तन्यायेन सिद्धा, तदा निरात्मवादा शून्यक्षणिकाद्यात्मवादा मया निराकृता एवेत्यर्थ। तथा च अविशुद्धिकरात्कर्मतो धर्माधर्मादिलक्षणात्कर्मण[1] परो व्यतिरिक्तस्तत्साक्षित्वात्, अतश्च शुद्धोऽकर्ता तथा च सुनिर्मल

---

(१) °र्ताऽतश्च—पाठ।

घटादिरूपं यदि ते न गृह्यते मनः प्रवृत्तं बहुधा स्ववृत्तिभिः ।
अशुद्धयचिद्रूपविकारदोषता मतेर्यथा वारयितुं न पार्यते ॥ ४६ ॥
यथा विशुद्धं गगनं निरन्तरं न सज्जते नापि च लिप्यते तथा ।
समस्तभूतेषु सदैवतेष्वयं समः सदात्मा ह्यजरोऽमरोऽभयः ॥४७॥

कर्मफलभोगमललेशेनापि रहितः, सर्वगतोऽपरिच्छिन्नः, अत एवासितो बन्धनशून्यश्चेत्यर्थः ॥ ४५ ॥

भवेदेतदेवं, यदि शरीरबुद्धयोरात्मदृश्यता सिद्धयेत् । सा तु न संप्रतिपन्नेत्याशङ्कय तयोरात्मदृश्यत्वाभावे बाधकमाह—घटादीति ।

यदि ते तव मते स्ववृत्तिभिर्बहुधा प्रवृत्तं घटादिरूपं विषयाकारं मनोऽन्येनात्मना न गृह्यते न प्रकाश्यते, तदात्मनो मनोन्यत्वासिद्धावशुद्धयचिद्रूपविकारदोषदुष्टता यथा मतेर्बुद्धेः, तथा वारयितुं न शक्यते । तस्य साक्षित्वानभ्युपगमे सति मतिदोषाणां तस्मिन्नवश्यंभावात् । तथा चानिर्मोक्षप्रसङ्ग इत्यर्थः । अथवा—यद्यपि शरीरद्वयग्राहकतया तदन्य आत्मा नित्यसद्रूपः, तथापि दृश्यसंसर्गकृतदोषो न परिहर्तुं शक्यते । स्वचैतन्याभेदेन हि दृश्यमवभासयन् द्रष्टा भवति । अन्यथा दृश्यस्यापरोक्षानुपपत्तेः । अतो विशुद्धत्वाद्यनुपपन्नमिति शङ्कते—घटादिरूपमिति । स्ववृत्तिभिर्बहुधा प्रवृत्तं घटाद्याकारं मनो यदि तेन चेतनात्मना गृह्यते, तदा तस्य दृश्यसंबन्धादशुद्धयादिदोषता वारयितुं न पार्यते । यथा मतेश्चैतन्यसंसर्गाच्चिच्छायतो वारयितुं न पार्यते तद्वदित्यर्थः ॥ ४६ ॥

स्यादेतदेवं, यदि मतिवत् सावयवं परिच्छिन्नं परिणामि चात्मस्वरूपं स्यात्, नैवमात्मस्वरूपम्, अतो नास्याशुद्धयादिशङ्कावकाश इति दृष्टान्तेनोपपादयन्नुत्तरमाह—यथा विशुद्धमिति ।

(१) 'च्छायतां—पाठः ।

**अमूर्तमूर्तानि च कर्मवासना दृशिस्वरूपस्य बहिः प्रकल्पिता ।**
**अविद्यया ह्यात्मनि मूढदृष्टिभिरपोह्य नेतीत्यवशेषितो दृशिः ॥ ४८ ॥**

विशुद्धं परिणामविक्रियामलरहितं निरन्तरमपरिच्छिन्नं, अत एव निरवयवं चेति द्रष्टव्यम् । एवंविधं यथा गगनं न सज्जते काष्ठेन जतुवन्न संलग्नं भवति, नापि लिप्यते भल्लातकरसेनेव वस्त्रादि । तथाऽऽत्माऽपि विशुद्धो निरन्तरो निरवयवश्च शास्त्रान्निश्चितो न बुद्ध्यादिषु सज्जते, नापि तद्दोषेण लिप्यत इत्यर्थः । अत्र शास्त्रप्रसिद्धिं हिशब्देन द्योतयन् हेतुमाह—समस्तभूतेष्विति । तत्तदभिमानिदेवतासहितेष्वपि समस्तभूतेषु अयमात्मा सदा समो हि यस्मात्, तस्मादजरोऽमरोऽभयो नित्यशुद्ध इत्यर्थः । तथाच शास्त्रं 'यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' इति ।

'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति' ॥
'न लिप्यते लोकदुःखेन बाह्यः'—इत्यादि ॥ ४७ ॥

किंच दृश्यस्य बाधितत्वादपि न तत्कृतदोषसंबन्ध आत्मनः संभाव्यते । नहि मिथ्यार्थेन सत्यं वस्तु संसृज्यते । कथं बाधितत्वमिति चेत्, प्रतिपन्नोपाधौ[4] निषिध्यमानत्वात्, रज्जुसर्पादिवदित्यभिप्रेत्याह—अमूर्तेति ।

---

(१) बृ. उ. ३. ७. १५. (२) भ. गी. १३. २७. (३) कठ. उ. ५. ११
(४) प्रतिपन्नपदस्य स्वसंबंधितया ज्ञात, उपाधिपदस्य च अधिकरणमर्थः—उप समीपवर्तिनि स्वधर्ममादधाति संक्रामयति इति व्युत्पत्तेरिति भावः । संक्रमो न गमनं, किंतु ज्ञानम् । प्रथमस्य=मिथ्यात्वेनाभिमतम् । प्रतिपन्नस्य आरोपितस्य जगतः उपाधिः अधिष्ठानं ब्रह्म तस्मिन् ।

प्रबोधरूपं मनसोऽर्थयोगजं
स्मृतौ च सुप्तस्य च दृश्यतेऽर्थवत् ।
तथैव देहप्रतिमानतः पृथग्
दृशेः शरीरं च मनश्च दृश्यतः ॥ ४९ ॥

अमूर्तं च मूर्तानि च अमूर्तमूर्तानि पञ्चमहाभूतात्मकानि स्थूलानि 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' इति श्रुतौ दृशिस्वरूपस्य ब्रह्मणः संबन्धीनि श्रुतानि च अपरं कर्मवासनाश्रयं लिङ्गमिति यावत् । तदपि 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः' इत्यत्रोक्तं, एतत्सर्वं सकारणं मूढबुद्धिभिरविद्यया मोहरूपया आत्मनि दृशिस्वरूपे प्रत्यगात्मनि ब्रह्मणि प्रकल्पितं,—वासना प्रकल्पिता, अमूर्तमूर्तानि प्रकल्पितानीति योजना। हि यस्मादविद्याध्यस्तमात्मनि सप्रपञ्चत्वं, तस्मान्नेति नेतीति वीप्सया तत्सर्वमात्मनो बहिरपोह्यात्मविशेषणतारूपं बाधित्वा केवलं दृशिश्चिन्मात्र एवावशेषितः 'सत्यस्य सत्यम्' इति श्रुत्येति योजना। 'यदा प्रकल्पिताः' इति विसर्गान्तपाठस्तदैवं योजना—अविद्यया मूढदृष्टिभिरात्मनि प्रत्यग्रूपे प्रकल्पिता आरोपिताः कर्मवासना अमूर्तमूर्तानि च भूतानि दृशिस्वरूपस्य प्रत्यक्स्वरूपस्य ब्रह्मणो बहिर्नेति नेतीत्यपोह्य दृशिरेवावशेषितो निषेधावधिभूतः श्रुत्या हि यस्मात्, तस्मान्नास्यात्मनि दोषसंसर्ग इति ॥ ४८ ॥

स्थूलसूक्ष्मप्रपञ्चस्य श्रुत्या बाधमुक्त्वा दृश्यत्वादिति युक्त्यापि बाधमाह—प्रबोधेति ।

---

(१) दृश्यतोऽर्थ'—टीकासंमतः पाठः। (२) बृ. उ. २. ३. १. (३) बृ. उ. २. ३. ६. (४) 'अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः'। सूत–सं० ८. २. ८. यथा शुक्तावारोपितस्य रजतस्याधिष्ठानशुक्तियाथात्म्यज्ञानेन निवृत्तौ सत्या–

स्वभावशुद्धे गगने घनादिके
मलेऽपयाते सति चाविशेषता ।
यथा च तद्वच्छ्रुतिवारितद्वये
सदाऽविशेषो गगनोपमे दृशौ ॥ ५० ॥

इति स्वप्नस्मृतिप्रकरणम् ।

अर्थयोगाद्विषयसंबन्धाज्जातं मनसः प्रबोधरूपं विषयाकारवृत्तिरूपं यत्, तत्स्मृतौ स्मृत्यवस्थायां सुप्तस्य पुंसः स्वप्नावस्थायां चार्थवदर्थाकारमेव दृश्यते । तद्यथा स्वप्नस्मृत्योरर्थाभावेऽप्यर्थाकारं दृश्यमानमात्मनः पृथगेव, नात्मविशेषणं, तद्दृश्यत्वात्, तथैव दृश्यतो दृश्यत्वहेतोः शरीरं मनश्च देहप्रतिमानतो देहप्रतिमानं च । तसेः सार्वविभक्तिकत्वाङ्गीकाराद्यमार्थः, स इह गृह्यते । देहद्वयवासनारूपं च दृशेरात्मनः पृथक्, न दृशिविशेषणमिति योजना । अत आत्मन्येव दृश्यस्य, आत्मनि निषेधात्, मिथ्यात्वं शुक्तिरूप्यादिवत्सिद्धमिति भावः ॥ ४९ ॥

ननु श्रुत्या यद्यध्यस्तनिषेधेनात्मा प्रतिपाद्यते, तदा निवृत्तसंसारत्वविशेषयोगवृद्धिक्रियावत्त्वेनानित्यत्वादिदोषप्रसङ्ग इति चेन्नेत्याह—स्वभावेति ।

यथा स्वभावशुद्धे शुद्धस्वभावे गगने अधिष्ठाने घनादिके मले सति, तस्मिन्नपयाते वा, अविशेषता न विशेषः कश्चिदस्ति—अविक्रियमेव सदा गगनमित्यर्थः । तद्वद्दृशावात्मन्यधिष्ठाने गगनोपमे स्वभावशुद्धे श्रुत्या वारितं बाधितं द्वयं यस्मिंस्तस्मिन्सदैवाविशेषः कूटस्थतेति योजना । तथा

---

मधिष्ठानभूता शुक्तिरेव केवलमवशिष्यते, न त्वन्यद्रजतं तदभावलक्षणं किमपि । तद्वदेव सकलजगदधिष्ठानब्रह्मस्वरूपयाथात्म्यज्ञानेन समारोपितजगन्निवृत्तावधिष्ठानमात्रावशेषोऽवगन्तव्य इत्यर्थः ।

## १५ नान्यदन्यत्प्रकरणम् ।

नान्यदन्यद्भवेद्यस्मान्नान्यत्किंचिद्विचिन्तयेत् ।
अन्यस्यान्यात्मभावे हि नाशस्तस्य ध्रुवो भवेत् ॥ १ ॥

च संसारनिवृत्तेर्मिथ्यार्थप्रतियोगिकाया अधिष्ठानदृगात्मव्यतिरेकेणानिरूपणान्न कोऽपि विशेष इति भाव. ॥ ५० ॥

इति चतुर्दशं स्वप्नस्मृतिप्रकरणम् ॥ १४ ॥

---

ननु [न] स्वभावशुद्ध आत्मा, तथा सति साधनवैयर्थ्यात् । किंतु संसारिस्वभाव एव सन् ज्ञानध्यानादिसाधनानुष्ठानेन स्वभावशुद्धब्रह्मस्वरूपो भविष्यतीति केचिदेकदेशीयाः प्रतिपेदिरे, तन्न श्रद्धेयं मुमुक्षुभि., तस्य श्रुतियुक्तिबाधितत्वादित्याह—नान्यदिति ।

जीवब्रह्मणोरत्यन्त भेद इष्यते, किंवा भेदाभेदौ ? नाद्यं, विरुद्धस्वभावतया ब्रह्माहमित्येकरूपध्यानज्ञानयोरसंभवात्, तदसंभवे चासंसारिब्रह्मभावफलानिष्पत्तेरिति मनसि निधायाद्ये दोषमाह—नान्यदन्यद्भवेद्यस्मादिति । यस्मादन्यज्जीवरूपं स्थित सदन्यद्ब्रह्म न भवेत्तद्रूपस्थितिविरोधात् । तथा तदेव ब्रह्मणोऽन्यज्जीवरूप वस्तु नष्ट सदन्यद्ब्रह्म न भवेत्, नष्टत्वादेव तस्य ब्रह्मभाव प्रामुरभावादिति योजना । 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतिविरोध' स्फुट एवेति नात्रोदाहृतः । यस्मादेव श्रुतियुक्तिविरुद्धमिद मत, तस्मात्किंचिदीप्स्मात्रमप्यन्यद्ब्रह्मेति न विचिन्तयेन्मुमुक्षुरिति शेप । किं तु 'अहमेव ब्रह्म', 'ब्रह्मैवाहम्' इति भेदोपमर्देनैकरूपमेवात्मवस्तु चिन्तयेदित्यर्थः । नन्वन्यस्याप्यन्यात्मता दृष्टा साधनविशेषसाध्या, यथो-

---

( १ ) 'न्यत्व'—पाठः ( २ ) नान्त्यौ—पाठ ( ३ ) तै. आ. २. २.

स्मरतो दृश्यते दृष्टं पटे चित्रमिवार्पितम् ।
यत्र येन च तौ ज्ञेयौ सत्त्वक्षेत्रज्ञसंज्ञकौ ॥ २ ॥

पत्रविशेषयोगात्ताम्रादेरपि सुवर्णात्मता, तद्वदिहापि स्यादित्याशङ्कयाह—अन्यस्येति । जीवस्य स्वविरुद्धस्वभावस्यान्यब्रह्मण्येकीभावे तप्तायोगोल्कप्रविष्टोदकबिन्दुवत्तस्य नाशो ध्रुवो भवेत् । तथा च न ब्रह्मभावः पुरुषार्थः, किंत्वनर्थोऽपि स्यादित्यर्थः । दृष्टान्तोऽसम्प्रतिपन्न—वस्त्ररूपाभिभावकनील्यादिवत्, रसविशेषस्य ताम्ररूपाभिभावकमात्रत्वात्कालान्तरे सुवर्णाकारतापगमदर्शनाच्च ताम्रादेः । तत्र भ्रममात्रं तदित्यभिप्रायः ॥ १ ॥

ननु यद्येवमन्यत्र ध्येयं, स्वात्मनि च ध्यानं न सम्भवत्येकस्मिन् ध्यातृध्येयभावायोगात् । कथं तर्हि निदिध्यासनविधिरिति चेत्, अन्यथैवोपपत्तेर्न तदर्थं भेद आस्थेय इत्याह—स्मरत इति ।

दृष्टं नीलपीतादि स्मरतः पुंसो यत्रान्तःकरणे तद्वासनारूपं पटेऽर्पितं चित्रमिव दृश्यते, येन च चैतन्यात्मना दृश्यते उपलभ्यते—तौ सत्त्वक्षेत्रज्ञसंज्ञकौ—यत्र दृश्यते तत्सत्त्वं, येन दृश्यते स क्षेत्रज्ञ इत्यर्थः । तथा च 'आत्मा निदिध्यासितव्यः' इति विधिना नैरन्तर्येण त्वं पदार्थविवेकसम्पादनमेव कर्तव्यतयोच्यते, विविक्तत्वमर्थस्यैव ब्रह्मत्वात्, अहं ब्रह्मास्मीत्यपरोक्षानुभवसम्भवात्संसारनिवृत्तिफलसिद्धिः । अन्यभावनायां तु प्रागुक्तन्यायेनान्यस्यान्यात्मताऽयोगात्संसारानिवृत्तेर्निष्फलो विधिः स्यादिति भावः ॥ २ ॥

---

(१) तुलय—रसविद्धमयः स्वर्णं यथा भवति सर्वदा ।
केनचित्साधनेनैव तथा जीवः शिवो भवेत् ॥
इति केचित् स्वमोहेन प्रवदन्ति तु वादिनः ॥
—सूत-सं ४ ३९ ३०.

फलान्तं चानुभूतं यद्युतं कर्त्रादिकारकैः ।
स्मर्यमाणं हि कर्मस्थं पूर्वं कर्मैव तच्चितः ॥ ३ ॥
द्रष्टुश्चान्यद्भवेद्दृश्यं दृश्यत्वाद्घटवत्सदा ।
दृश्याद्द्रष्टाऽसजातीयो न धीवत्साक्षिताऽन्यथा ॥ ४ ॥

अन्तःकरणस्याप्रत्यक्षत्वात्कथं स्मृत्यवस्थायां तस्मिन्नीलपीताद्युपलम्भः ? इत्यत आह—फलान्तमिति ।

फलान्तं सुखादिफलावसानं कर्त्रादिकारकैर्युतं युक्तम् । यद्वैतं पूर्वमनुभूतं, तदिदानीं स्मर्यमाणं कर्मस्थं दृश्यनिष्ठं दृश्यते, न द्रष्टृनिष्ठं हि यस्मात्, तस्मात्पूर्वमपि तत्स्मर्यमाणस्याधिकरणस्याधिकरणमन्तःकरणं चित आत्मनः कर्मैव दृश्यमेवेत्यर्थः ॥ अयंभावः—पूर्वानुभूतविषयाकारा हि वृत्तिरन्तःकरणपरिणामात्मिका स्मृतिरित्युच्यते । तस्यां हि विषयो भासमानः साश्रयो भासते । नहि तदा साक्षिणानुभूयमानस्य विषयस्य बहिराश्रयेऽवस्थानमस्ति । तथा चेदं स्मरामीति परामर्शयोग्यतया दृश्यस्थतयानुभवस्यावश्यंभावात्तदा चित्तमेव स्मर्यमाणाधिकरणतया दृश्यत इति सिद्धमन्तःकरणस्य साक्षिप्रत्यक्षत्वमिति ॥ ३ ॥

आत्मैव द्रष्टा दृश्यं चेति भाट्टा मेनिरे। अतः स्वगतमेव वासनारूपमात्मा पश्यतीति, इदं स्मरामीत्यनुभवस्यान्यथासिद्धत्वात्, नान्तःकरणस्य साक्षिप्रत्यक्षत्वेत्याशङ्क्याह—द्रष्टुश्चेति ।

विमतं दृश्यं द्रष्टुरत्यन्तं भिन्नं, दृश्यत्वात्, घटवदित्युक्ते द्रष्टृदृश्ययोर्भेदेऽपि, परिणामत्वेन साजात्यसंभवाद्द्रष्टुः सजातीयमेतद्दृश्यमित्याशङ्क्याह—दृश्यादिति । द्रष्टा सदैव दृश्यासजातीयः, दृश्यांशस्याचेतनत्वादात्मत्वानु-

( १ ) पूर्वक° पाठः ( २ ) °भूता—पाठः ( ३ ) दृश्यतया—पाठः ( ४ ) °त्मान प°—पाठः

स्वात्मबुद्धिमपेक्ष्यासौ विधीनां स्यात्प्रयोजकः ।
जात्यादिः शववत्तेन तद्वानात्मताऽन्यथा ॥ ५ ॥
न प्रियाप्रिय इत्युक्तेरदेहत्वं क्रियाफलम् ।
देहयोगः क्रियाहेतुस्तस्माद्विद्वान् क्रियास्त्यजेत् ॥ ६ ॥

पपत्तेरित्यर्थः । विपक्षे दोषमाह—न धीवदिति । अन्यथा द्रष्टृदृश्ययोरसजातीयत्वानङ्गीकारे, द्रष्टुः परिणामित्वाद्धीवत्साक्षिता आत्मनो न स्यादित्यर्थः ॥ ४ ॥

ननु न भवत्येवात्मा साक्षी, तस्य ब्राह्मण्यादिजातिमत्तया सविशेषत्वात्कर्माधिकारित्वेन परिणामित्वोपपत्तेरित्याशङ्क्याह—स्वात्मेति ।

असौ जात्यादिर्ब्राह्मणत्वादिः । आदिशब्दाद्वयोऽवस्थादि गृह्यते । स्वात्मबुद्धिं स्वस्मिन्नात्मात्मीयाभिमानलक्षणां मिथ्यादृष्टिमपेक्ष्य विधीनां प्रयोजकः प्रवर्तकः स्यात्, नान्यथा । यथा शव उत्क्रान्तप्राणो देहो मम माता मम पिता चेत्यध्यासानुसारेण संस्कारप्रयोजको दृश्यते, तदभावे न दृश्यत इति योजना । तेन हेतुना तद्वच्छववदेव जात्यादिरात्मधर्मो न भवतीत्यर्थः । अन्यथा जात्यादिमत्त्वे त्वात्मनो घटादिवदनात्मता प्रसज्येतेति योजनीयम् । तस्मात्साक्ष्येवात्मा, न कर्माधिकारितया परिणामीति भावः ॥ ५ ॥

ननु नाध्यासनिबन्धनं कर्तृत्वं, विदुषोऽपि मोक्षाय क्रियानुष्ठानादिति चेन्नेत्याह—न प्रियेति ।

अदेहत्वमशरीरत्वं हि मोक्षः, तच्च क्रियाफलम् । क्रियाफलं तु सुखदुःखे प्रसिद्धे । ते तु नाशरीरस्य दृष्टे श्रुते वा । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः'[1] इत्युक्तेः—श्रुत्यैवमुक्तत्वादित्यर्थः । क्रिया हेतुर्यस्य सः क्रियाहेतुर्देहयोगः, क्रियया देहसबन्ध एव साध्यो न मोक्ष इत्यर्थः ।

---

(१) छां. उ. ८. १२. १.

कर्मस्वात्मा स्वतन्त्रश्चेन्निवृत्तौ च तथेष्यताम् ।
अदेहत्वे फलेऽकार्ये ज्ञाते कुर्यात्कथं क्रियाः ॥ ७ ॥
जात्यादीन्संपरित्यज्य निमित्तं कर्मणां बुधः ।
कर्महेतुविरुद्धं यत्स्वरूपं शास्त्रतः स्मरेत् ॥ ८ ॥

यस्मादेवं, तस्माद्विद्वान्—न कर्मसाध्या मुक्तिः, किंतु ज्ञानैकसाध्येति—जानन् क्रियाः सर्वाणि साहंकाराणि कर्माणि त्यजेत्, संन्यस्य श्रवणादिनिष्ठो भवेदित्यर्थः ॥ ६ ॥

ननु सर्वेषां कर्मणामात्मकर्तव्यत्वप्रतीतेर्न विद्वान् क्रियास्त्यक्तुं शक्नुयादिति चेन्नेत्याह—कर्मस्विति ।

आत्मा चेत्कर्मसु स्वतन्त्रः कर्ता, तर्हि निवृत्तौ च कर्मत्यागरूपे च तथेष्यताम् । यथा रागादिमान् प्रवृत्तिलक्षणे कर्मणि स्वतन्त्रः, तथा विशुद्धसत्त्वो वीतरागस्तत्त्यागेऽपि स्वतन्त्र इष्यतां, कर्मसाध्यफलाभिलाषाभावे कर्मत्यागस्यार्थप्राप्तत्वादित्यर्थः । एतदेव स्पष्टयति—अदेहत्व इति । देहसंबन्धशून्ये फले मोक्षलक्षणे अकार्ये केनापि कर्मणाऽसाध्ये शास्त्रादिना ज्ञाते सति क्रियाः कथं कुर्यात् ? न कुर्यादेव, ताभिः प्रयोजनाभावादित्यर्थः ॥ ७ ॥

किं क्रियापरित्यागमात्रेणाकार्यं विदेहकैवल्यं प्राप्यते ? नेत्याह—जात्यादीनिति ।

बुधः पण्डितो बुद्धिमान् कर्मणां निमित्तं निमित्तभूताञ्जात्यादीन् संपरित्यज्य जात्याद्यभिमानं परित्यज्य यत्स्वरूपं कर्महेतुविरुद्धं कर्मनिमित्तोपमर्दकं शुद्धात्मस्वरूपं तच्छास्त्रतो यथा शास्त्रोक्तं तथा स्मरेत्, अनुचिन्तयेदित्यर्थः ॥ ८ ॥

---

( १ ) °वृत्त—पाठः ( २ ) °त्त***रूपं—पाठः

आत्मैकः सर्वभूतेषु तानि तस्मिंश्च खे यथा ।
पर्यगाद्व्योमवत्सर्वं शुक्रं दीप्तिमदिष्यते ॥ ९ ॥
व्रणस्नाय्वोरभावेन स्थूलं देहं निवारयेत् ।
शुद्धापापतयाऽलेपं लिङ्गं चाकायमित्युत ॥ १० ॥

शास्त्रमेवोदाहरन् सर्वव्यमात्मरूप विशदयति—आत्मैक इत्यादिना ।
'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते' ॥[1]

इति मन्त्रार्थ पूर्वार्धेनोच्यते । 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविर शुद्धमपापविद्धम्' इति मन्त्रार्थं सार्धश्लोकेनाह—पर्यगादिति । एपाऽक्षर-योजना । सर्वभूतेष्वहमेक एवात्मा, न चेतनभेदोऽस्ति । तर्हि किं भूता-न्यधिकरणमात्मन ? नेत्याह—तानीति । तानि च भूतानि तस्मिन्नात्म-न्येवाध्यस्तानि, न तत पृथग्वर्तन्ते । तथा च स्वाध्यस्तसकलविकारानुस्यू-तसत्तास्फूर्तिरूपो विकारोपमर्देनानुसधेय इत्यर्थ । खे यथेति । अन्त सुषिररूपेण, बहिरवकाशरूपेण वर्तमाने आकाशे यथा भूतसनन्धस्तथे-त्यर्थ । पर्यगादात्मा व्योमवत्स्वसत्तामात्रेण परि समन्तादगाद्व्रतवान् सर्व-मशेष, आत्मना न किंचिदव्याप्तमस्तीत्यर्थ । तथा च ब्राह्मण 'नैनेन किंच-नानावृत नैनेन किंचनासवृतम्'[3] इति । शुक्रमिति मन्त्रपद, तस्य व्याख्यान दीप्तिमदिति । प्रकाशस्वभाव शुद्ध तदात्मस्वरूपमिष्यत इत्यर्थ ॥ ९ ॥

'अव्रणमस्नाविरम्' इति पदयोरर्थमाह—व्रणेति ।

क्षतशिराजालनिरासेन स्थूलदेहात्मत्वमात्मनोऽपोह्यमित्यर्थ । 'शुद्धम-पापविद्धम्' इत्यनयोरर्थमाह—शुद्धेति । शुद्ध रागादिदोषहीनमत एवा-पाप पुण्यपापहीन तस्मात्कारणाभावादेव सुखदु खादितदनुभवसंस्कारलेप-

---

(१) ई. उ. ६. (२) ई. उ. ८ (३) बृ. उ. ३. ५. १८

वासुदेवो यथाऽश्वत्थे स्वदेहे चाब्रवीत्समम् ।
तद्वद्वेत्ति य आत्मानं समं स ब्रह्मवित्तमः ॥ ११ ॥
यथा ह्यन्यशरीरेषु ममाहन्ता न चेष्यते ।
अस्मिंश्चापि तथा देहे धीसाक्षित्वाविशेषतः ॥ १२ ॥

हीनमित्यर्थः । 'अकायम्' इति मन्त्रपदेन सूक्ष्मदेहात्मता निरसनीयेत्याह—लिङ्गमिति । निवारयेदिति सर्वत्रानुषङ्गः । स्थूलसूक्ष्मदेहतत्कार्यतद्वासनाभ्यो व्यावृत्तः सम एकोऽपरिच्छिन्न आत्मेति सदा चिन्तयेदित्यर्थः ॥१०॥

य एवं यथोक्तमात्मानं वेत्ति स ब्रह्मविदामुत्तम इत्याह—वासुदेव इति ।

वासुदेवो भगवान् कृष्णोऽश्वत्थे निकृष्टोपाधौ, स्वदेहे चाविर्भूतविज्ञानैश्वर्यशक्तिमदात्माधिष्ठिते उत्कृष्टोपाधौ च, यथा सममविशिष्टमात्मानमब्रवीत् 'अश्वत्थः सर्ववृक्षाणाम्' इति, 'वृष्णीनां वासुदेवोऽस्मि' इति च, तद्वच्च आत्मानं सममुपाधिकृतवैषम्यापोहेनैकरूपं वेत्ति सोऽतिशयेन ब्रह्मविदित्यर्थः ॥ ११ ॥

वासुदेवस्य युक्तं सर्वत्र समात्मदर्शनं, तस्योपाधिषु ममाहंकाररहितत्वात्, न तु मुमुक्षोः, तस्य तद्वैपरीत्यादित्यत आह—यथा हीति ।

अन्यशरीरेषु बहिर्दृश्यमानेषु देहेषु यथा ममाहन्ता ममाहमो भावो न चेष्यते तस्य दृश्यत्वेनानात्मत्वनिश्चयात्, तथाऽस्मिंश्चापि स्वत्वाभिमते देहे ममाहन्ता नेष्यते । कुतः ? धीसाक्षित्वाविशेषतः, उभयत्र देहाकारपरिणतबुद्धिसाक्षित्वाविशेषादित्यर्थः । तथा चात्मतत्त्वालोचनायामहंकारादेरनवसरत्वाद्वासुदेववत् समात्मदर्शनं युक्तमेवेति भावः ॥ १२ ॥

---

१ "सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः ॥"
—विष्णु-पु. ६. ५. ८०.
इत्यय श्लोकोऽधिको टीकान्तरे दृश्यते । ( २ ) भ. गी. १०. २६, ३७.

" रूपसंस्कारतुल्याधी रागद्वेषौ भयं च यत् ।
गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धोऽभयः सदा" ॥ १३ ॥
यन्मनास्तन्मयोऽन्यत्वे नात्मत्वाद्गी क्रियाऽऽत्मनि ।
आत्मत्वे चानपेक्षत्वात्सापेक्षं हि न तत्स्वयम् ॥ १४ ॥

रागद्वेषभयोपलम्भान्नास्ति मुमुक्षोरभिमानाभाव इति चेत्तत्राह— रूपेति ।

नीलादिरूपसंस्कारेण तुल्यः समान आधिः आश्रयो ययोस्तौ रागद्वेषौ रूपसंस्कारतुल्याधी, यत् भयं तदपि तत्समानाश्रयमिति । संस्कारो नाम स्वाश्रयस्य प्रागुद्भूतावस्थासमानावस्थान्तरापादकोऽतीन्द्रियो धर्मः । तत्रायमर्थः—रूपाद्याकारपरिणतान्तःकरणे हि रूपादिसंस्कारः पुनरपि रूपाद्याकारपरिणामहेतुर्विद्यते । तत्रैव च रागद्वेषौ रूपादिदर्शननिमित्तौ । तन्निमित्तकं च भयं तत्रैव । 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति श्रुतेः । यस्माद्धीश्रयं बुद्धिसमाश्रयमेव रागद्वेषौ भयं चेति त्रयमात्मना गृह्यते, नात्मसमाश्रयं, तस्माज्ज्ञाता शुद्धो रागादिरहितोऽभयश्च सदेति ॥ १३ ॥

ननु न सदा शुद्ध आत्मा, किंतु 'यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति श्रुतेः,

'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥'

इति स्मृतेश्च पूर्वमशुद्धोऽपि पुरुषो ब्रह्मभावनया शुद्धः पश्चाद्ब्रह्म भविष्यतीत्याशङ्क्याह—यन्मना इति ।

---

(१) पद्य पृ. ३८ (२) बृ. उ. १.५.३ (३) छा उ. ३.१४.१. (४) भ. गी ८.६

खमिवैकरसा ज्ञप्तिरविभक्ताऽजराऽमला ।
चक्षुराद्युपधाना सा विपरीता विभाव्यते ॥ १५ ॥
दृश्यत्वादहमित्येष नात्मधर्मो घटादिवत् ।
तथाऽन्ये प्रत्यया ज्ञेया दोषाश्चात्माऽमलो ह्यतः ॥ १६ ॥

यस्मिन् ध्येये देवादौ मनो यस्य स यन्मना ध्यायी पुरुषः, स तन्मयो ध्येयदेवादिमयो भवति । ध्यातृध्येययोरन्यत्वे सति ध्यानक्रियायास्तत्रार्थवत्त्वसंभवादित्यर्थः । न पुनरात्मत्वाप्तौ आत्मस्वरूपावस्थानप्राप्त्यर्थमात्मनि क्रिया ध्यानादिरूपाऽपेक्ष्यत इत्यर्थः । तत्र हेतुः—आत्मत्वेति । मोक्षरूपस्य ब्रह्मण आत्मत्वे सति तस्य चतुर्विधक्रियाफलविलक्षणत्वात्, क्रियाया अनपेक्षत्वादित्यर्थः । मोहमात्रव्यवधानाच्चात्र न क्रियापेक्षेति चकारार्थः । विपक्षे दोषमाह—सापेक्षं हीति । यदि क्रियासापेक्षं कैवल्यं भवेत्, तर्हि तत्स्वयमात्मरूपं न स्यात्—क्रियासाध्यस्यानात्मत्वात्, अनित्यत्वाच्चेत्यर्थः । तस्मात्सदा शुद्ध एवात्मा, तस्मिन्नशुद्ध्याभासो मिथ्याध्यास इति भावः ॥१४

विभागादिमलाभावाच्चिदेकरसत्वाच्चात्मा सदाशुद्ध एवाभ्युपेय इत्याह—खमिवेति ।

यद्येवंस्वभावैषा ज्ञप्तिः, तर्हि तस्यां जन्मविनाशभेदप्रतिभासाः कथमित्याशङ्क्य चक्षुराद्युपाधिसंसर्गदोषादित्याह—चक्षुरादीति ॥ १५ ॥

आत्मनः प्रतिपादितममलत्वं विशदयति—दृश्यत्वादिति ।

अहमित्येषोऽहमिति प्रत्ययो नात्मधर्मो नात्मनिष्ठः, दृश्यत्वात्, घटादिवत्, तथाऽन्येऽपि प्रत्ययाः परिणामा दोषाः दोषरूपा रागद्वेषादयोऽनात्मधर्मा ज्ञेयाः हि यस्मात्, अत आत्माऽमलो हि निर्मल एवेत्यर्थः ॥१६॥

---

( १ ) 'धानात् सा—पाठः ( २ ) १०. ५०.

सर्वप्रत्ययसाक्षित्वादविकारी च सर्वगः ।
विक्रियेत यदि द्रष्टा बुद्ध्यादीनाल्पविद्भवेत् ॥ १७ ॥
न दृष्टिर्लुप्यते द्रष्टुश्चक्षुरादेर्यथैव तत् ।
नहि द्रष्टुरिति ह्युक्तं तस्माद्द्रष्टा सदैकदृक्[1] ॥ १८ ॥

अहङ्कारादीनामात्मधर्मत्वाभावेऽपि नात्मनो विशुद्धिः सिध्यति विका-रित्वात्परिच्छिन्नत्वाच्चेत्याशङ्क्याह—सर्वप्रत्ययेति ।

विपक्षे दोषमाह—विक्रियेतेति । विक्रियेत परिच्छिन्नो वा यद्यात्मा, तदाल्पविद्विषयमात्रावभासको भवेत्, बुद्ध्यादीन् बुद्धिचित्तमनोवृत्तीरित्यर्थः । बुद्ध्यादिशब्देन तद्गताभासो लक्ष्यते, अन्यथा स्वरूपतोऽचेतनत्वा-द्वेदनगोचरत्वेनाल्पवित्त्ववचनमनुपपन्नं स्यात् । तत्र बुद्धेः साभासाया नि-यतावभासनमात्रे उपक्षीणपरिणामाया यथा पूर्वापरानुभूततदवस्थातद्व्यापा-रानुसंधानाभावो विक्रियावत्त्वात्, तथा द्रष्टुरपि क्रियावत्त्वेऽनुसंधाना-भावप्रसङ्गात् सर्वव्यवहारविलोपप्रसङ्ग इति भावः ॥ १७ ॥

द्रष्टुरात्मनोऽपि बुद्धिवदल्पवित्त्वमेव, ज्ञानस्य साधनाधीनस्योत्पत्तिवि-नाशवत्त्वादिति चेन्नेत्याह—न दृष्टिरिति ।

यथैव चक्षुरादिद्वारकदृष्टिर्लुप्यते परिणामित्वात्, न तथा द्रष्टुरात्मनो दृष्टिर्लुप्यते, अपरिणाम्यात्मस्वरूपत्वात्तस्या इत्यर्थः । तद्दृष्टेर्नित्यत्वे 'नहि द्रष्टु-र्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इति हि श्रुत्योक्तमित्यर्थः[2] । यस्मात् प्रमाणसिद्धमिदं तस्मादित्यर्थः । सदैकदृक् एकरूपदृष्टिस्वभाव इत्यर्थः । 'सदैव दृक्' इति पाठे शुद्धं पश्यतीति दृक् साक्षीत्यर्थः ॥ १८ ॥

---

(१) सदैव दृक्—पाठ । (२) बृ. उ. ४. ३. २३

संघातो वाऽस्मि भूतानां करणानां तथैव च ।
व्यस्तं वाऽन्यतमो वाऽस्मि को वाऽस्मीति विचारयेत् ॥ १९ ॥
व्यस्तं नाहं समस्तं वा भूतमिन्द्रियमेव वा ।
ज्ञेयत्वात्करणत्वाच्च ज्ञाताऽन्योऽस्माद्घटादिवत् ॥ २० ॥
आत्माग्नेरिन्धना बुद्धिरविद्याकामकर्मभिः ।
दीपिता प्रज्वलत्येषा द्वारैः श्रोत्रादिभिः सदा ॥ २१ ॥

यस्मादेवमात्मा शुद्धस्वभावोऽपि सत्रुपाधिसंबन्धादन्यथा प्रतीयते, तस्मादात्मानं ब्रह्मत्वेन प्रतिपत्तुं पदार्थविवेकं कुर्यान्मुमुक्षुरित्याह—संघातो वेति ।

अयमर्थः—अहमिति तावदात्माऽवभासते । स भासमानोऽहं मनुष्यः कृशः स्थूल इत्यादौ भूतसंघातात्मकदेहरूपः स्फुरति । तदिदमुच्यते—संघातो वास्मि भूतानामिति । तथाहं द्रष्टा श्रोता रसयिता काणो बधिर इति करणेष्वप्यहमुल्लेखो दृश्यते, अतः करणसंघातो वाऽहमिति । तत्रापि पृथक्पृथगेवाहंकारदर्शनाद्व्यस्तमेकैकं चेन्द्रियमहमस्मि । अथवा एकस्मिन्देहेऽनेकात्मत्वे कदाचिद्वैमत्यसंभवाद्भोगव्यवस्थानुपपत्तेरन्यतमो वाऽस्मि, इन्द्रियसंघातादन्यो वा तदधिष्ठातास्मि । यद्यन्यतम., तर्हि स को वान्तःकरणप्राणाद्यन्यतमः ? किं वा तत्साक्षी तद्विलक्षणस्वभावः ?—इति विचारयेत् ॥ १९ ॥

विचारफलं पदार्थविवेकं कथयति—व्यस्तं नाहमिति ।

भूतं वेन्द्रियं वा समस्तं व्यस्तं वा नाहमस्मि ज्ञेयत्वादचेतनत्वाद्घटादिवत्, करणत्वात्कुठारादिवदिति यथायोगं योज्यम् । तस्माज्ज्ञाता चेतनोऽन्योऽन्तःकरणप्राणादिभ्योऽप्यचेतनेभ्य इति द्रष्टृदृश्यान्वयव्यतिरेकालोचनेन विवेकः कार्य इत्यर्थः ॥ २० ॥

इदानीं साक्षिसाक्ष्यान्वयव्यतिरेकालोचनेनावस्थात्रयविवेकद्वारा तत्साक्षिणस्तुरीयस्याधिगमप्रकारमाह—आत्माग्नेरित्यादिना ।

दक्षिणाक्षिप्रधानेषु यदा बुद्धिर्विचेष्टते ।
विषयैर्हविषा दीप्ता ह्यात्माग्निः स्थूलभुक्तदा ॥ २२ ॥
हूयन्ते तु हवींषीति रूपादिग्रहणे स्मरन् ।
अरागद्वेष आत्माग्नौ जाग्रद्दोषैर्न लिप्यते ॥ २३ ॥

'तत्रैवं सति' इत्यतः प्राक्तनैः श्लोकैः । आत्मैवाग्निः, तस्येन्धना—इध्यते प्रकाश्यते व्यवहारयोग्यः क्रियते अनयेतीन्धना—बुद्धिः आत्मचैतन्यस्य विशेषाकारतयाभिव्यक्तिकारणभूतेत्यर्थः । साऽविद्याकामकर्मभिर्दीपिता उत्तेजिता, वायुनेवाग्निरयमिन्धनं, आध्माता सती प्रज्वलति—चैतन्यप्रततया प्रकाशमाना जायते, अभिव्यक्ताग्निना दह्यमानमिन्धनमिवेत्यर्थः । गवाक्षेभ्यो निःसृतदीपप्रभान्यायेन श्रोत्रादिभिर्द्वारैर्निःसृता सती सदा प्रज्वलत्येवेति योजना । अत्राग्नीन्धनादिरूपकनिर्देशप्रयोजनं व्यवहारकाले विषयग्रहणस्य होमत्वभावना, तत्फलं च विषयेष्वासक्तिनिवृत्तिरिति द्रष्टव्यम् ॥ २१ ॥

एवंविधबुद्धयवस्था जागरणं, तस्यामात्मा स्थूलपदार्थभुग्भवतीत्याह—दक्षिणाक्षीति ।

दक्षिणस्याङ्गस्य पुरुषे श्रेष्ठत्वप्रसिद्धेरिदं विशेषणम् । दक्षिणमक्षि प्रधानं मुख्यं येषामिन्द्रियाणां तेषु बुद्धिर्यदा विचेष्टते व्यापारवती भवति हविःस्थानीयैर्विषयैर्दीप्ता—विषयं व्याप्य तदाकारेण दीप्यमाना सतीति यावत्—तदात्माग्निः स्थूलभुक् स्थूलविषयाणां भोक्ता जागर्तीत्युच्यत इत्यर्थः ॥२२॥

रूपकनिरूपणफलं स्पष्टयति—हूयन्त इति ।

रूपादिग्रहणे विषयग्रहणसमये अरागद्वेषः शोभनाशोभनाध्यासेन रागद्वे-

---

( १ ) दीप्त आत्मा' -पाठः ( २ ) २१.

मानसे तु गृहे व्यक्तः सोऽविद्याकर्मवासनाम् ।
पश्यंस्तैजस आत्मोक्तः स्वयंज्योतिः प्रकाशिता ॥ २४ ॥
विषया वासना वापि चोद्यन्ते नैव कर्मभिः ।
यदा बुद्धौ तदा ज्ञेयः प्राज्ञ आत्मा ह्यनन्यदृक् ॥ २५ ॥

पावत्कुर्वन् ह्वींषीमान्यात्माग्नौ हूयन्त इति स्मरन् ध्यायन्नात्मा जाग्रद्दोषैर्विषयोपलब्धिनिबन्धनैः पुण्यापुण्यलक्षणैर्न लिप्यते न संश्लिष्यत इत्यर्थः॥२३॥

इदानीं स्वप्नावस्थामाह—मानसे त्विति ।

मने परिणामोपाधिर्मानस गृह, स. तत्राभिव्यक्त आत्मा—अविद्याप्रयुक्तकर्मोद्बुद्धा वासनाऽविद्याकर्मवासनेत्युच्यते—ता विषयाकारा पश्यंस्तैजस इत्युक्तो विद्वद्भिः । तेजसि वासनामये विषयेऽभिव्यक्त इति व्युत्पत्तेरित्यर्थः । तत्र भासमानकर्मसुरद्रष्ट्रादीना मनोमात्रत्वात्, तस्य च दृश्यत्वेनैव तदाऽवस्थानात्, आत्मन उपाध्यन्तराभावे सति बाह्यस्य चादित्यादिज्योतिषस्तदानीमुपरमात्, आत्मैव स्वयज्योतिः सन् प्रकाशिता साक्षी भवतीत्यर्थ. । तथाच श्रुति 'दृष्ट्वैव पुण्य च पापं च' इति, 'अत्राय पुरुष. स्वयंज्योतिर्भवति' इति च ॥ २४ ॥

सुषुप्तिमाह—विषया इति ।

यदा बुद्धावन्तःकरणे विषया स्थूला, वासनाश्च सूक्ष्मा स्वप्नदर्शनाश्च कर्मभिर्न चोद्यन्ते नोद्भूता क्रियन्ते, तदात्मा प्राज्ञो ज्ञेयस्तस्तत्र कस्तदा भवतीत्यर्थ. । प्रज्ञातिशयात्तदा प्राज्ञ इति व्युत्पत्तिमभिप्रेत्य विशिनष्टि—अनन्यदृगिति । अन्यदात्मव्यतिरिक्त विषय वासना वा न पश्यतीत्यनन्यदृक्, अपरिच्छिन्नप्रज्ञ इत्यर्थः ॥ २५ ॥

---

( १ ) व्यक्ता अविद्याकर्मवासना । ․․ ․ ․․․ज्योति प्रकाशिता ॥—पाठ. । ( २ ) मनस —पाठ. ( ३ ) द्रष्ट्वा, द्रष्टा—पाठौ. ( ४ ) बृ. उ. ४. ३. १५, १६, ३७, ३८. ( ५ ) बृ. उ. ४. ३. ९, १४.

मनोबुद्धीन्द्रियाणां च ह्यवस्थाः कर्मचोदिताः ।
चैतन्येनैव भास्यन्ते रविणेव घटादयः ॥ २६ ॥
तत्रैवं सति बुद्धीर्ज्ञ आत्मभासाऽवभासयन् ।
कर्ता तासां यदर्थास्ता मूढैरेवाभिधीयते ॥ २७ ॥
सर्वज्ञोऽप्यत एव स्यात्स्वेन भासाऽवभासयन् ।
सर्वं सर्वक्रियाहेतोः सर्वकृत्त्वं तथाऽऽत्मनः ॥ २८ ॥

एवमवस्थात्रयं तदवस्थं चात्मानं द्रष्टृदृश्यभावेन विविच्य इदानीमभिमानिसहितावस्थात्रयसाक्षितया विश्वादित्रयापेक्षया तुरीयं प्रत्यञ्चमात्मानं नित्यनिर्भासित्वभावमुपलम्भयति—मनोबुद्धीति ।

इन्द्रियाणामवस्था जागरणं, मनोवस्था स्वप्नः, बुद्ध्यवस्था कारणावस्था सा सुषुप्तिरिति विभागः । स्पष्टमन्यत् ॥ २६ ॥

ननु यद्यात्मा निर्विकार एव साक्षी, कथं तर्हि बुद्ध्यादीनां कर्तोच्यते ? तत्राह—तत्रैवं सतीति ।

तत्र तस्मिन्नात्मनि एवं सति अवस्थात्रयेऽव्यस्ते सति सावस्थाः बुद्धीः आत्मभासा स्वचैतन्याभासेनावभासयन् ज्ञ आत्मा तासां कर्तेति मूढैः शास्त्राचार्योपदेशरहितैरभिधीयते व्यपदिश्यते इति योजना । तथा व्यवहारप्रवृत्तौ निमित्तं सूचयन् बुद्धीर्विशिनष्टि—यदर्थास्ता इति । यस्यात्मनः सुखदुःखप्रतिभासार्थास्ताः भासयन्निति कर्मोद्भासितबुद्ध्यवस्थानुगतचिदाभासाविवेकादात्मा दर्शनकर्तेत्युच्यते मूढैरित्यर्थः ॥ २७ ॥

एवमज्ञाने तत्कार्ये च प्रतिबिम्बितस्य चिदात्मनो ज्ञातृत्वमुपाधिनिबन्धनं व्युत्पाद्य, सर्वज्ञत्वं सर्वकर्तृत्वं च तस्यैव मायोपाधिप्रतिबिम्बनवशादिति व्युत्पादयति—सर्वज्ञोऽपीति ।

---

(१) या अत्र—ॆपाठः (२) जागरितं—पाठः (३) ॆगतश्चि—ॆपाठः

सोपाधिश्चैवमात्मोक्तो निरुपाख्योऽनुपाधिकः ।
निष्कलो निर्गुणः शुद्धस्तं मनो वाक्च नाप्नुतः ॥ २९ ॥
चेतनोऽचेतनो वापि कर्ताऽकर्ता गतोऽगतः ।
बद्धो मुक्तस्तथा चैकोऽनेकः शुद्धोऽन्यथेति वा ॥ ३० ॥

अत एवेत्युक्तमेव विशदयति—स्वेनेति । स्वात्माश्रयविषयकमाया-विवर्तं सर्वं स्वचैतन्येन, आदित्यप्रकाशवत्, अविकृतेन भासयन् सर्वज्ञ उच्यते, न पुनः सर्वविषयज्ञानकर्तृत्वेनेत्यर्थः । तथा तद्वन्मायानिबन्धनमेवात्मनः सर्वकृत्त्वं सर्वकर्तृत्वम् । तदेवाह—सर्वक्रियाहेतोरिति । संनिधि-सत्तामात्रेण भ्रामकवत्सर्वकारकप्रवृत्तिहेतुत्वादित्यर्थः ॥ २८ ॥

तदेवमवस्थात्रयसाक्षितया विविक्तशुद्धचिद्रूपस्यात्मनः कार्यकारणात्मक-मायोपाधिवशाज्ज्ञातृत्वकर्तृत्वसर्वज्ञत्वादिव्यवहारास्पदत्वं, न स्वभावत इत्युक्तमर्थमनूद्य, किं तत्स्वाभाविकं बिम्बतुल्यमात्मस्वरूपमित्यपेक्षायां तदाह—सोपाधिश्चेति ।

यस्तु निरुपाख्यो विषयतयोल्लेखयोग्यो न भवति, सोऽनुपाधिकः सर्व-व्यवहारातीत इत्यर्थः । गुणावयवशून्यत्वाच्छुद्धः कूटस्थ इत्यर्थः । निरुपा-ख्यत्वमुक्तं व्यनक्ति—तमिति ॥ २९ ॥

मनोवागगम्यत्वं साधयति—चेतन इति ।

अयमर्थः—अहमिति शब्दप्रत्ययौ तावत्पराग्व्यावृत्ततयात्मानं प्रत्यक्ष-मवगाहेते इत्यविवादम् । तौ चेच्छुद्धमेवात्मानं गोचरयेतां, तदा प्रत्यक्षोप-लब्धे घटादाविव वादिनां[1] विप्रतिपत्त्यभाव एव स्यात् । विप्रतिपद्यन्ते

---

(१) पद्य ४८ श्लोकटीकाम् । तुलय—पृ. ८९–९० टीकाम्, तथा नै. सि. २. ६६–६७. (२) विवादिनां प्रति— पाठः

अप्राप्यैव निवर्तन्ते वाचो धीभिः सहैव तु ।
निर्गुणत्वात् क्रियाभावाद्विशेषाणामभावतः ॥ ३१ ॥

तु ते । देहेन्द्रियमनोबुद्धीनामन्यतमोऽचेतन एव चेतनो वा, नात्मेति वेद-नाह्याः। तदन्यश्चेतन इति वेदवादिनः। तेष्वपि केचित्कर्तेति, केचिदकर्तेति । गतो व्यापक, अगतोऽव्यापकोऽणुपरिमाण, देहपरिमाणो वेति केचित्। नद्धो जीव, मुक्तोऽन्य ईश्वर । तथा सर्वशरीरेष्वेकोऽनेको वा, शुद्धो रागादिगुणरहित , अन्यथा तद्युक्तश्चेति ॥ ३० ॥

अतो विप्रतिपत्तेरयथाभूतात्ममात्रगोचरत्वादसमर्थौ शब्दप्रत्ययौ शुद्धा-त्मनीत्याह—अप्राप्यैवेति ।

कथमात्माऽप्राप्तिर्वाचां धियामिति चेत्, परमार्थेन प्रवृत्तिनिमित्ताभावा-दित्याह—निर्गुणत्वादिति । रूपादिगुणहीनत्वाद्बाह्येन्द्रियद्वारकधीभिस्ता-वदात्मा न प्राप्यते । मनसश्च बाह्येन्द्रियद्वारोपलब्धविषयातिरेकेण स्वत-न्त्रस्य विषयानिरूपणात्, तदगोचरमात्मानं तन्न प्राप्नोति । क्रियाभावा-द्वात्मनो मनोगोचरत्वाभावः । नहि क्रियाहीनेऽनवच्छिन्ने वस्तुनि क्रिया-वदनुगतिमात्रेणापूर्वधर्मोपजनि सम्भवति, घटादिनानुगते गगने तददर्शनात्। तस्मान्मनःसंयोगजज्ञानसम्भवान्न मनसाऽपि प्राप्य आत्मेत्यर्थः । तथा विशेषाणां गोत्वरूपाणां बाह्यानां स्वगतानां वा जात्यादीनां प्रवृत्तिनिमि-त्तानामभावान्न शब्दोऽपि प्राप्नोत्यात्मानमित्यर्थः । तथा च श्रुतिः—' यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ' इति, ' न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ' इति च ॥ ३१ ॥

---

( १ ) वचो—पाठ. ( २ ) णां हभा—पाठ ( ३ ) तै. उ. २. ९. ( ४ ) मु. उ ३ १. ८

व्यापकं सर्वतो व्योम मूर्तैः सर्ववियोजितम् ।
यथा तद्वद्विहात्मानं विद्याच्छुद्धं परं पदम् ॥ ३२ ॥
दृष्टं हित्वा स्मृतिं तस्मिन्सर्वग्रस्थं तमस्त्यजेत् ।
सर्वदृग्ज्योतिषा युक्तो दिनकृच्छार्वरं यथा ॥ ३३ ॥

अविषयस्यात्मनः कथं वेदान्तवेदनीयत्वमित्याशङ्क्य लक्षणावसेयत्वमभिप्रेत्याह—व्यापकमिति ।

सर्वे मूर्तैः सर्वतो वियोजितं परिच्छिन्नप्रतिभासहेतूपाधिवर्जितं व्यापकं स्वरूपतोऽपरिच्छिन्नं च व्योम यथा, तद्वदेव शुद्धमवस्थात्रयोपाधिवियोजितमवस्थात्रयसाक्षितया लक्षितं शुद्धमात्मानमिह वेदान्तसमये परं पदं परमात्मानं ब्रह्म विद्यादिति योजना ॥ ३२ ॥

एवमात्मतत्त्वेऽवधारिते पुनरवस्थात्रयाभिमानं न कुर्यादित्याह—दृष्टमिति ।

दृष्टं जागरितं तद्धित्वा—द्रष्टा श्रोता मन्तेत्येवमकैकनियोपरक्ततया दृष्टाभिमानं—त्यक्त्वेत्यर्थः । दर्शनाद्यवस्थायामपि निर्विशेषमेवात्मानं मन्वीतेति भावः । तस्मिन् दृष्टेऽर्थे स्मृतिं स्वप्नं हित्वा—संस्कारद्वारकत्वात्स्वप्नः स्मृतिरुच्यते—अहं स्वप्ने देवोऽभूवं, व्याघ्रो वाऽभूवमिति तदभिमानं हित्वेत्यर्थः । दृश्यस्य सवासनस्य मनसो विकारोऽसौ, नात्मनः , इत्यसङ्गतामात्मनोऽनुसंदधीतेति भावः । तथा तमः सुषुप्तिं त्यजेत् । तमसो विशेषणं सर्वग्रस्थ इति । सर्वं ग्रसतीति सर्वग्रस्थम् । सान्तमिदं पदम् । सुषुप्तेरप्यवभासकतयाऽलुप्तप्रकाशस्वभाव एवात्मा, न तु मूढो ज्ञानवान्वेति मन्वीतेत्यर्थः । कोऽसाववस्थात्रयत्यक्तेति तमाह—सर्वदृगिति । सर्वदृक्सर्वसाक्षी प्रत्यगात्मा ज्योतिषा युक्तः, 'ज्योतिषां ज्योतिः' इत्युक्तेन ब्रह्मणैकीभूत

(१) विन्द्यात्—पाठ । (२) मु उ २ २ ९

रूपस्मृत्यन्धकारार्थाः प्रत्यया यस्य गोचराः ।
स एवात्मा समो द्रष्टा सर्वभूतेषु सर्वगः ॥ ३४ ॥
आत्मबुद्धिमनश्चक्षुर्विषयालोकसंगमात् ।
विचित्रो जायते बुद्धेः प्रत्ययोऽज्ञानलक्षणः ॥ ३५ ॥
विविच्यास्मात्स्वमात्मानं विद्याच्छुद्धं परं पदम् ।
द्रष्टारं सर्वभूतस्थं समं सर्वभयातिगम् ॥ ३६ ॥

इत्यर्थः । यथा दिनकृत् सविता शर्वर्यां भवं शार्वरं तमः स्वतेजसा ग्रसित्वा निस्तमस्क एवावतिष्ठते, तथाऽवस्थाविकारहेत्वज्ञानं ब्राह्मेण ज्योतिषाऽभिभूयाऽद्वयानन्दस्वभाव एवावतिष्ठते इत्यर्थः ॥ ३३ ॥

उक्तमेव त्यागप्रकारं प्रकटयति—रूपस्मृतीति ।

रूपस्मृत्यन्धकारा जागरस्वप्नसुषुप्तयोऽर्था विषया येषां प्रत्ययानां, ते तथोक्ताः । ते यस्य साक्षिणो गोचराः प्रतिभास्याः, स एवात्मा सर्वभूतेषु द्रष्टा, तथापि समो निर्विशेषः, यतः सर्वगः परिच्छेदकरहित इत्यर्थः ॥ ३४ ॥

यद्येवमुक्तस्वभाव एवात्मा, कुतस्तस्मिन् विचित्रः संसारप्रत्ययोदयः ? तत्राह—आत्मबुद्धीति।

अज्ञानलक्षणोऽज्ञानोपाधिनिबन्धन इत्यर्थः ॥ ३५ ॥

अविद्यातत्कार्योपाधीनामात्मनश्च विवेकानुपलम्भादेव संसारप्रतिभास इति स्थितं मुमुक्षोः कर्तव्यमुपदिशति—विविच्येति ।

अस्माद्बुद्ध्यादिसंघाताद्विविच्य स्वमात्मानं विद्यादिति संबन्धः । स्पष्टमन्यत ॥ ३६ ॥

---

( १ ) विन्द्यात्—पाठः ।

समस्तं सर्वगं शान्तं विमलं व्योमवत्स्थितम् ।
निष्कलं निष्क्रियं सर्वं नित्यं द्वन्द्वैर्विवर्जितम् ॥ ३७ ॥
सर्वप्रत्ययसाक्षी ज्ञः कथं ज्ञेयो मयेत्युत ।
विमृश्यैवं विजानीयाज्ज्ञानेकर्म न वेति वा ॥ ३८ ॥
अदृष्टं द्रष्टृविज्ञातं दभ्रमित्यादि शासनात् ।
नैव ज्ञेयं मयाऽन्यैर्वा परं ब्रह्म कथंचन ॥ ३९ ॥

वेद्यमेवात्मरूपं पुनर्विशिनष्टि—समस्तमिति ।

समस्तमात्मानं सर्वं परं पदं ब्रह्मेति पृथग् योज्यमपुनरुक्तताये । अत्र विधिमुखेन प्रतिषेधमुखेन च ये विशेषा निर्दिष्टाः, तानशेषान् साक्षिणि त्वंपदार्थे तत्पदार्थे च ब्रह्मण्यनुसंधायानयोस्तुल्यलक्षणत्वं निश्चित्य तत्त्वमसिवाक्यादहं ब्रह्मेति निश्चिनुयादिति तात्पर्यार्थः ॥ ३७ ॥

एवं ब्रह्मात्मरूपेणैव ज्ञातव्यमित्युक्ते पुनर्मुमुक्षुं शिक्षयति—सर्वेति ।

सर्वप्रत्ययसाक्षी ज्ञानैकस्वभावो य उक्तः, स कथं कीदृक्स्वभाव इति विमृशेदिति योजनीयम् । कथंशब्दसूचितं विमर्शमेव विभजते—ज्ञेय इति । मया ज्ञेय उत न ज्ञेय इति शेषः । यदि ज्ञेयः, तदापि ज्ञानं प्रति कर्म वा, न वेत्येवं विमृश्य विजानीयात्तत्त्वमात्मन इत्यर्थः ॥ ३८ ॥

एवं विमर्शे ज्ञेयत्वपक्षस्तावन्न संगच्छत इत्याह—अदृष्टमिति ।

'यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्' इति ज्ञेयस्याल्पत्वोपदेशादब्रह्मत्वापत्तेः, अदृष्टमविज्ञातमिति च श्रुतिशासनात्, न ब्रह्मात्मतत्त्वं ज्ञानकर्मत्वेन मया अन्यैर्वा कथंचन ज्ञेयमित्यर्थः ॥ ३९ ॥

---

(१) ज्ञात ब्रह्म—पाठ. । (२) के. उ. २. (३) बृ. उ. ३. ८. ११.

स्वरूपाव्यवधानाभ्यां ज्ञानालोकस्वभावतः।
अन्यज्ञानानपेक्षत्वाज्ज्ञातं चैव सदा मया ॥ ४० ॥
नान्येन ज्योतिषा कार्यं रवेरात्मप्रकाशने।
स्वबोधान्नान्यबोधेच्छा बोधस्यात्मप्रकाशने ॥ ४१ ॥
न तस्यैवान्यतोऽपेक्षा स्वरूपं यस्य यद्भवेत्।
प्रकाशान्तरदृश्यो न प्रकाशो ह्यस्ति कश्चन ॥ ४२ ॥

यद्येवं ज्ञेयत्वं न संभवति, कथं तर्हि 'आत्मन्येवात्मानं पश्येत्' इत्याद्युपदेश इत्याशङ्क्याविषयत्वेनाविर्भावमात्रमेवात्मतत्त्वविज्ञानं, न विषयत्वेन 'यस्यामतं तस्य मतं मतं यस्य न वेद सः' इति श्रुतिरिति मन्वानोऽज्ञेयत्वपक्षमपि प्रतिक्षिपति—स्वरूपेति।

यज्ज्ञानस्वरूपादन्यज्जडं, यच्च व्यवहितं ज्ञानदेशात्, तदागन्तुकज्ञानसापेक्षसिद्धिकत्वाज्ज्ञानविषयतया ज्ञेयं भवति; न तथेदमात्मतत्त्वम्। कथं तर्हि? शृणु—ज्ञानालोकस्वभावतो ज्ञानप्रकाशत्वरूपत्वात् स्वरूपाव्यवधानाभ्यां हेतुभ्यामन्यज्ञानानपेक्षत्वादविषयत्वेन विज्ञातं भवत्यात्मतत्त्वमिति योजना। ज्ञातुरेव ब्रह्मत्वोपदेशाज्ज्ञातुश्च स्वज्ञेयत्वानुपपत्तेरविज्ञातत्वाभावाच्च सदा मया ज्ञातं च ब्रह्मात्मतत्त्वमित्यर्थः ॥ ४० ॥

ज्ञानस्वरूपस्य नान्यज्ञानापेक्षेत्येतद्दृष्टान्तेन साधयति—नान्येनेति। स्पष्टार्थः ॥ ४१ ॥

दृष्टान्तस्य दार्ष्टान्तिकस्य च नैरपेक्ष्यमुक्तं साधयति—न तस्येति।

आत्मा नान्यतो ज्ञानमपेक्षते, तत्स्वरूपत्वात्। यद्यस्य स्वरूपं तन्नान्यतस्तदपेक्षते, यथा प्रकाशरूपः सविता न प्रकाशमन्यतोऽपेक्षते, तथा चायं,

(१) ब्रह्म—पाठः। (२) बृ. उ. ४. ४. २३. (३) के. उ. ११.

व्यक्तिः स्यादप्रकाशस्य प्रकाशात्मसमागमात् ।
प्रकाशस्त्वर्ककार्यः स्यादिति मिथ्यावचो ह्यतः ॥ ४३ ॥
यतोऽभूत्वा भवेद्यच्च तस्य तत्कार्यमिष्यते ।
स्वरूपत्वादभूत्वा न प्रकाशो जायते रवेः ॥ ४४ ॥

तस्मादेवमित्यर्थः । किंच, नात्मा प्रकाशान्तरदृश्यः, प्रकाशात्मत्वात्, आदित्यवदित्याह—प्रकाशान्तरेति ॥ ४२ ॥

ननु प्रकाशान्तरदृश्यत्वाभावेऽपि स्वरूपप्रकाशदृश्य एव किं न स्यात्? यथा सविता घटादि प्रकाशयन् स्वात्मानमपि प्रकाशयत्येव, तथा आत्मापि दृश्यमवभासयन् स्वात्मानमपि भासयेदिति चेत्, नेत्याह—व्यक्तिः स्यादिति ।

अप्रकाशस्य स्वरूपतः प्रकाशहीनस्य प्रकाशात्मसमागमात् प्रकाशस्वभावसंसर्गमात्राद्व्यक्तिः—अभिव्यक्तिः—तमोनिवृत्तिलक्षणा स्यात्, न तत्र प्रकाशगुणोदय इत्यर्थः । अतः प्रकाशोऽर्ककार्य इति मृषाव्यपदेशः । प्रकाशावगुण्ठिते वस्तुनि प्रकाशोदयाभावेऽभिव्यक्त्यभावादर्शनादित्यर्थः । तस्माद्भासमानस्वरूपसंसर्ग एव भास्यस्याभिव्यक्तिरिति प्रकाशस्वभावस्य सवितुर्नान्यप्रकाश्यता, स्वप्रकाश्यता वाऽस्तीति न दृष्टान्तत्वसिद्धिः । अतो न दार्ष्टान्तिकसिद्धिस्त्वत्पक्ष इति भावः ॥ ४३ ॥

घटादिप्रकाशः कस्मादर्ककार्यो न भवतीति चेत्तत्राह—यतोऽभूत्वेति ।

यत्तु प्रागभूत्वा यतो भवेत्, तत्तस्य कार्यमिष्यत इति संबन्धः । स्पष्टमन्यत् ॥ ४४ ॥

---

(१) स्वभावतः—पाठः ।

सत्तामात्रे प्रकाशस्य कर्ताऽऽदित्यादिरिष्यते ।
घटादिव्यक्तितो यद्वत्तद्वद्बोधात्मनीष्यताम् ॥ ४५ ॥
बिलात्सर्पस्य निर्याणे सूर्यो यद्वत्प्रकाशकः ।
प्रयत्नेन विना तद्वज्ज्ञाताऽऽत्मा बोधरूपतः ॥ ४६ ॥
दग्धैवमुष्णः सत्तायां तद्वद्बोधात्मनीष्यताम् ।
सत्येव यदुपाधौ तु ज्ञाते सर्पे इवोत्थिते ॥ ४७ ॥

कथं तर्हि प्रकाशस्वरूपस्यादित्यस्य प्रकाशयितृत्वमात्मनश्च बोधमात्रस्वभावस्य बोद्धृत्वं व्यपदिश्यते ? तत्राह—सत्तामात्र इति ।

प्रकाशस्य संनिधिसत्तामात्रे सति घटादिव्यक्तितो घटाद्यभिव्यक्तेर्दर्शनात्, आदित्यादिः प्रकाशस्य कर्तेष्यते यद्वत्, तद्वद्बोधरूपेऽप्यात्मनि स्वाध्यस्तवस्तुसंनिधिसत्तामात्रे सति बोद्धृत्वमिष्यतामङ्गीक्रियतामिति योजना ॥ ४५ ॥

स्वगतविकारमन्तरेणैवात्मनोऽर्थप्रकाशकत्वमित्येतदपि रविदृष्टान्तेन स्पष्टयति—बिलादिति ।

सर्पस्य बिलद्वाराभिर्गमे ज्ञायमाने यद्वत्सूर्यः प्रयत्नेन विना पूर्वसिद्धेनैव स्वज्योतिषा तं भासयन् प्रकाशको व्यपदिश्यते, तद्वदात्मा बोधरूपत्वात्प्रयत्नेन विना विकारमन्तरेण ज्ञाता व्यपदिश्यत इत्यर्थः ॥ ४६ ॥

इदानीमुपाधिभावे ज्ञातृत्वव्यपदेशात्, तदभावे तदभावात्, औपाधिकमेव ज्ञातृत्वमिति दर्शयितुं परमुदाहरणमाह—दग्धैवमिति ।

यथा दाह्यसंनिधावुष्णस्वरूपस्याग्नेः सत्तामात्रेण दाहकत्वं, तथा बोधस्वरूपस्याप्यात्मनो बोध्यसंनिधिमात्रेण बोद्धृत्वमिष्यतां, यस्मादुपाधौ ज्ञाते सत्येवात्मा ज्ञातोच्यते । यथा बिलादुत्थिते सर्पे उपाधौ ज्ञाते सत्येव

(१) बोद्धात्म—पाठः ।

ज्ञाताऽयत्नोऽपि तद्वज्ज्ञः कर्ता भ्रामकवद्भवेत् ।
स्वरूपेण स्वयं नात्मा ज्ञेयोऽज्ञेयोऽथवा ततः ॥ ४८ ॥
विदिताविदिताभ्यां तदन्यदेवेति शासनात् ।
बन्धमोक्षादयो भावास्तद्वदात्मनि कल्पिताः ॥ ४९ ॥

सविता प्रकाशकः कथ्यते, न तदभावे । तस्मादौपचारिक एवात्मनो ज्ञातृत्वव्यपदेश इत्यर्थः ॥ ४७ ॥

औपाधिकत्वं ज्ञातृत्वमात्मनो रविदृष्टान्तेन प्रतिपाद्य तेनैव दृष्टान्तेन कर्तृत्वमप्यौपाधिकं प्रतिपादयति—ज्ञातेति । यद्वद्यं स आत्मा अयत्नः यत्नरहितोऽपि ज्ञाता व्याख्यातः, तद्वत्स्वगतविक्षेपशून्योऽपि संनिधिमात्रेण कारकाणि प्रवर्तयन् क्रियाणां कर्तेति व्यपदिश्यते, भ्रामकवदित्यर्थः । भ्रामयति प्रवर्तयति प्राक्सुप्तं जनसमूहमिति भ्रामकः सूर्यः । यद्वा, भ्रामकोऽयस्कान्तः, स यथा स्वयं चलनादिव्यापाररहितोऽपि लोहकीलादीनां चालको दृष्टः, तथाऽयमपीत्यर्थः । तदेवं 'व्यक्तिः स्यादप्रकाशस्य' इत्यारभ्योक्तं प्रासङ्गिकमात्मनो ज्ञातृत्वं कर्तृत्वं चौपाधिकं व्यवस्थाप्य, प्रकान्तमात्मनो ज्ञानकर्मत्वाकर्मत्वाभ्यामहेयक्षेमत्वपक्षद्वयसमर्थनमुपसंहरति—स्वरूपेणेति । यतोऽयमात्मा निर्विशेषः स्वभावतोऽलुप्तप्रकाशस्वरूपश्च, ततः स्वयं स्वरूपेणासाधारणस्वभावेन न ज्ञेयो ज्ञानक्रियया व्याप्तो न भवति, तथा नाज्ञेयो व्यवहितवस्तुवत्र ज्ञानप्रकाशरहित इत्यर्थः । अथवेत्यनेन ज्ञाता वान्यस्याज्ञाता वा न भवत्यात्मा निर्विकारत्वाच्चैतन्ययोगाच्च, तथा कर्ता कारकाणामसाधिष्ठानत्वात्, न कर्ता च निर्व्यापारत्वादित्यादिविरुद्धप्रतिभासव्यवस्थोपसंहार उक्तो वेदितव्यः ॥ ४८ ॥

आत्मन उक्ते ज्ञेयत्वाद्यभावे प्रमाणमाह—विदिताविदिताभ्यां तदिति ।

---

(१) १५. ४३.

नाहोरात्रे यथा सूर्ये प्रभारूपाविशेषतः ।
बोधरूपाविशेषान्न बोधाबोधौ तथाऽऽत्मनि[1] ॥ ५० ॥
यथोक्तं ब्रह्म यो वेद हानोपादानवर्जितम् ॥
यथोक्तेन विधानेन स सत्यं नैव जायते ॥ ५१ ॥
जन्ममृत्युप्रवाहेषु पतितो नैव शक्नुयात् ।
इत उद्धर्तुमात्मानं ज्ञानादन्येन केनचित् ॥ ५२ ॥

'अन्यदेव तद्विदितादथो अविदितादधि' इति श्रुत्या विदिताविदिताभ्यां कार्यकारणाभ्यामन्यदात्मतत्त्वं ब्रह्मेति शासनात्कार्यकारणधर्मविलक्षणस्वभाव एवायमात्मेत्यर्थः । तथाच यथात्मनि ज्ञातृत्वं कर्तृत्वं कारणत्वमित्यादि सर्वमविद्यावशादेव कल्पितं, तथा बन्धो मोक्षश्छिन्नो भिन्नः सुखी दुःखीत्यादयोऽपि भावा आत्मनि कल्पिता एवेत्याह—बन्धेति ॥४९॥

बन्धादीनामात्मनि कल्पितत्वे सदृष्टान्तं हेतुमाह—नाहोरात्र इति ।

अबोधनिबन्धनो बन्धो बोधनिबन्धनो मोक्षः, तयोरभावे तत्र तयोरप्यभाव इत्यर्थः ॥ ५० ॥

उक्तेनोपायेनोक्तस्वरूपं ब्रह्म विजानतः फलमाह—यथोक्तमिति ।

हानोपादानवर्जितमिति हानोपादानकर्तृत्वं कर्मत्वं च व्यावर्त्यते। अनेन सर्वविशेषाः प्रतिषिद्धा भवन्ति, परिग्रहपरित्यागात्मकत्वात् सर्वविशेषाणामित्यर्थः । यथोक्तविधानं पदार्थपरिशोधनप्रकारः । स नैव जायत इति सत्यमिति संबन्धः । 'न स भूयोऽभिजायते' इति स्मृतेरित्यर्थः ॥५१॥

यथोक्तब्रह्मवेदनेन विनापि यथोक्तफलसिद्धेः कृतं ज्ञानेनेत्याशङ्क्य 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिविरोधान्नैवमित्याह—जन्मेति ।

---

(१) तुल्य—१७. ६७. (२) के. उ. १. (३) भ. गी. १३. २३. (४) श्वे. उ. ३. ८; ६. १५.

" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे" इति श्रुतेः ॥ ५३ ॥
ममाहमित्येतदपोह्य सर्वतो
विमुक्तदेहं पदमम्बरोपमम् ।
सुदृष्टशास्त्रानुमितिभ्य ईरितं
विमुच्यतेऽस्मिन्यदि निश्चितो नरः ॥ ५४ ॥

इति नान्यदन्यत्प्रकरणम् ।

इत एभ्यो जन्ममृत्युप्रवाहेभ्यः । केनचित्साधनान्तरेण ॥ ५२ ॥
उक्तेऽर्थेऽथर्वोपनिषद्वाक्यं प्रमाणयति—भिद्यत इति ।
स्पष्टम् ॥ ५३ ॥
प्रकरणार्थं संक्षिप्योपसंहरति—ममाहमिति ।

सर्वतः सर्वात्मना ममाहमित्येतत्सविषयमपोह्य त्यक्त्वा नरो मनुष्योऽस्मिन् यदि निश्चितो निश्चितमतिः स्यात्, तदा स विमुच्यत इति योजना। अस्मिन् कस्मिन् विनिश्चित इति ? तदाह—विमुक्तदेहमिति । देहद्वयसंबन्धशून्यं प्रत्यक्तत्त्वं पदं ब्रह्माम्बरोपमं निरतिशयं निष्प्रपञ्चमिति यावत्। कुतः एवंविधं ब्रह्मात्मतत्त्वरूपमित्यपेक्षायां श्रुतियुक्तिभ्यां निर्धारितत्वादत्रासंभावना नास्तीत्यभिप्रेत्य तद्विशिनष्टि—सुदृष्टेत्यादि ईरितमित्यन्तेन । यदेवंविधं सम्यग्विचारितशास्त्रानुमानेभ्योऽस्माभिरीरितमस्मिन्निति संबन्धः ॥ ५४ ॥

इति पञ्चदशं नान्यदन्यत्प्रकरणम् ॥ १५ ॥

## १६ पार्थिवप्रकरणम्

पार्थिवः कठिनो धातुर्द्रवो देहे स्मृतोऽम्मयः ।
पक्तिचेष्टावकाशाः स्युर्वह्निवाय्वम्बरोद्भवाः ॥ १ ॥
घ्राणादीनि तदर्थाश्च पृथिव्यादिगुणाः क्रमात् ।
रूपालोकवदिष्टं हि सजातीयार्थमिन्द्रियम् ॥ २ ॥

पूर्वस्मिन् प्रकरणे एकदेशिमतप्रतिक्षेपमुखेन ब्रह्मैकत्वज्ञानमेव स्वरूपावस्थानलक्षणमोक्षसाधनं, न भेदाभेदज्ञानमिति प्रतिपादितम् । अधुना सर्वतार्किकमतप्रतिषेधेन मुमुक्षुं स्वाराज्येऽभिषेक्तुं प्रकरणान्तरमारभमाणः प्रथमं स्थूलशरीरात्मवादिमतं निराकरोति—पार्थिव इति ।

यः स्थूलदेहे कठिनो धातुर्मांसादिरूपः, स पार्थिवः पृथिव्यंशः पृथिवीपरिणामात्मकः स्मृतो ज्ञातो विद्वद्भिरित्यर्थः । एवं द्रवोऽम्मयोऽपां परिणामः । पक्तिः पाकः, चेष्टा स्पन्दनं, अवकाशोऽन्नपानमनसां संचारमार्गो देहगतसुषयो ये स्युः—एते क्रमेण वह्निवाय्वम्बरोद्भवा देहानुगतवह्न्याद्यंशकार्यभूताः स्मृता इत्यक्षरार्थः । देहोऽनात्मा, भूतपरिणामत्वात्, वल्मीकादिवदिति भावः ॥ १ ॥

इन्द्रियात्मवादिनं प्रत्याह—घ्राणादीनीति ।

घ्राणादीनीन्द्रियाणि तदर्थास्तेषां विषयाः गन्धादयश्च क्रमात्पृथिव्यादीनां गुणाः कार्याणीत्यर्थः । गन्धरसरूपस्पर्शशब्दास्तावत्पृथिव्यप्तेजोवाय्वाकाशानां क्रमेण धर्माः प्रसिद्धाः । तेषां घ्राणाद्येकैकेन्द्रियग्राह्यताऽन्वयव्यतिरेकसिद्धा । तथा च यदिन्द्रियं यस्य धर्मं ग्राहयति, तदिन्द्रियं तस्य सजातीयं भवितुमर्हति । यथा तैजसस्य रूपस्य प्रकाशको दीपादिस्तैजसो दृष्टः, तथेन्द्रियाण्यपि भौतिकानां प्रकाशकत्वाद्भौतिकान्येवेत्यनुमानमाह—

बुध्यर्थान्याहुरेतानि वाक्पाण्यादीनि कर्मणे ।
तद्विकल्पार्थमन्तःस्थं मन एकादशं भवेत् ॥ ३ ॥
निश्चयार्था भवेद्बुद्धिस्तां सर्वार्थानुभाविनीम् ।
ज्ञाताऽऽत्मोक्तः स्वरूपेण ज्योतिषा व्यञ्जयन्सदा ॥ ४ ॥

रूपालोकवदिति । एवमिन्द्रियाणां भौतिकत्वे सिद्धे देहवदेषामप्यनात्मत्वमिति भावः ॥ २ ॥

किंचेन्द्रियाणि नात्मानः, करणत्वात्, कुठारवदित्यनुमानान्तरं सूचयन् कार्यवशादिन्द्रियाणामेकादशत्वनियममाह—बुद्ध्यर्थानीति ।

एतानि घ्राणादीनि बुद्ध्यर्थानि ज्ञानकरणान्याहुः । वाक्पाणिपादपायूपस्थाख्यानीन्द्रियाणि कर्मणे कर्मार्थं वचनादानगमनविसर्गानन्दार्थं तत्करणान्याहुरित्यर्थः । तेषां दशानामिन्द्रियाणां विकल्पार्थं युगपद्विषयसंनिधाने क्रमेण तत्तद्विषयज्ञानादिनियमार्थं यदिन्द्रियं तन्मन उक्तदशापेक्षया एकादशं भवेत् । मनश्चैकं साधारणं करणमवश्यमङ्गीकार्यम् । अन्यथाऽऽत्मनो युगपदनेकेन्द्रियविषयसंप्रयोगे सति युगपदेवानेकज्ञानानि जायेरन् । नचैवमस्ति । तथा च तस्यापि मनसः करणत्वादनात्मत्वमिन्द्रियवदिति सिद्धम् ॥ ३ ॥

बुद्धिरपि नात्मा, करणविशेषत्वात्, मनोवदिति बौद्धमतं निराकुर्वंस्तस्याः स्वभावं दर्शयति—निश्चयार्थेति ।

निश्चयोऽर्थपरिच्छेदः, सोऽर्थः प्रयोजनं यस्या अन्तःकरणवृत्तेः सा निश्चयार्था बुद्धिर्भवेत् । निश्चयकरणं बुद्धिरित्यर्थः । अन्यदृश्यत्वादपि तस्या अनात्मत्वमित्याह—तामिति । बुद्धिज्ञातुरपि बुद्धिवदन्यज्ञेयत्वशङ्कां वारयति—स्वरूपेण ज्योतिषेति । तथाच भास्यभासकयो रूपालोकयोरिव भेदाद्भास्याया बुद्धेरन्यो भासक आत्मेत्यर्थः ॥ ४ ॥

व्यञ्जकस्तु यथाऽऽलोको व्यङ्ग्यस्याकारतां गतः ।
व्यतिकीर्णोऽप्यसंकीर्णस्तद्वज्ज्ञः प्रत्ययैः सदा ॥ ५ ॥
स्थितो दीपो यथाऽयत्नः प्राप्तं सर्वं प्रकाशयेत् ।
शब्दाद्याकारबुद्धीद्धैः प्राप्तास्तद्वत्प्रपश्यति ॥ ६ ॥
शरीरेन्द्रियसंघात आत्मत्वेन गतां धियम् ।
नित्यात्मज्योतिषा दीप्तां विशिंषन्ति सुखादयः ॥ ७ ॥
शिरोदुःखादिनाऽऽत्मानं दुःख्यस्मीति हि पश्यति ।
द्रष्टाऽन्यो दुःखिनो दृश्याद्द्रष्टृत्वाच्च न दुःख्यसौ ॥ ८ ॥

यदि बुद्धेरात्मा भासकः, तर्हि तया संसर्गादशुद्धिरापद्येतेत्याशङ्क्य दृष्टान्तेन प्रत्याह—व्यञ्जकस्त्विति ।

यथा आलोको व्यञ्जको दीपालोकादिर्व्यङ्ग्यस्य घटादेराकारतां गतः सन् व्यतिकीर्णोऽपि व्यामिश्रतया भासमानोऽपि वस्तुतोऽसंकीर्णो विविक्तस्वभाव एव भवति, तद्वदेव ज्ञः आत्मा सदा प्रत्ययैर्बुद्धिवृत्तिभिरित्यर्थः । अतो नित्यशुद्ध एवात्मेति भावः ॥ ५ ॥

यदि बुद्ध्यादेरत्यन्तविलक्षणो निर्व्यापार आत्मा, कथं तर्हि तस्य तदवभासकत्वमित्याशङ्क्य तदपि दृष्टान्तेनाह—स्थित इति ।

स्पष्टार्थः ॥ ६ ॥

तथापि कथं शुद्धिः सुखित्वादिस्फुरणादित्याशङ्क्याह—शरीरेति ।

सुखादयः शरीरादिसंघाते आत्मत्वेन प्रवृत्तां धियं बुद्धिं विशिंषन्ति, न त्वात्मानम् । किंलक्षणाम् ? नित्यात्मज्योतिषा दीप्तां प्रकाशिताम् । तथा च भास्यभासकबुद्ध्यात्मनोरविवेकादात्मा सुखादिमानिति भ्रान्तिरित्यर्थः ७

कुत एवं निश्चयः ? इत्यत आह—शिर इति ।

---

( १ ) परिहरन्नाह—पाठः ।

दुःखी स्याद्दुःख्यहंमानाद्दुःखिनो दर्शनाच्च वा ।
संहतेऽङ्गादिभिर्द्रष्टा दुःखी दुःखस्य नैव सः ॥ ९ ॥
चक्षुर्वत्कर्मकर्तृत्वं स्याच्चेन्नानेकमेव तत् ।
संहतं च ततो नात्मा द्रष्टृत्वात्कर्मतां व्रजेत् ॥ १० ॥

शिरआदिदेहावयवगतेन दुःखेन हि यस्माद्दुःख्यहमस्मीत्यात्मानं पश्यति, तस्माद्देहमात्मत्वेन गता बुद्धिरिति योजना । अयमाशयः—आत्मनो विशेषविज्ञानं बुद्ध्यध्यासनिबन्धनमिति हि स्थितिः । तथा च शिरोदुःखेनोदरदुःखेन वा दुःख्यहमस्मीत्यभिमानात्मकबुद्ध्यवस्थापन्नविशेषस्यैव दुःखित्वात्, सुखदुःखादयो बुद्धिं विशिंषन्तीति युक्तं वक्तुमिति । द्रष्टा तु दुःखिनो दृश्यादन्यः—आत्मत्वेनाभिमन्यमानदेहावयवोपघातादिजनितदुःखाकारसाभासबुद्धेर्दृश्यायाः साक्षी तदन्य एव । असौ द्रष्टृत्वादेव न दुःखीत्यर्थः ॥ ८ ॥

द्रष्टृत्वादसौ न दुःखीत्युक्तमेव स्पष्टयति—दुःखी स्यादिति ।

अयमात्मा दुःख्यहंमानाद्दुःखाकारपरिणामवदन्तःकरणेऽहमित्यभिमानाद्दुःखी स्यात्, न तु दुःखिनो दुःखाकारपरिणामवतो दर्शनात्, तथा सत्युदासीनानामपि दुःखिनं पश्यतां दुःखित्वप्रसङ्ग इत्यर्थः । प्रकृते किमायातम् ? तदाह—संहत इति । अङ्गादिभिर्हस्ताद्यङ्गैश्चक्षुरादीन्द्रियैश्च संहते देहे यद्दुःखं, तस्य दुःखस्य द्रष्टा य आत्मा साक्षी, स नैव दुःखीति सिद्धमिति शेषः ॥ ९ ॥

दुःखिनो द्रष्टृत्वेऽपि दुःखित्वमात्मनो युज्यत इति दृष्टान्तेन शङ्कते—चक्षुर्वदिति ।

यथा चक्षुषो दर्पणादिनिष्ठतया दृश्यत्वं, तस्यैव मुखदेशस्थतया द्रष्टृत्वं च, तथात्मनो दुःखसंभिन्नतया दृश्यत्वं, स्वरूपचैतन्यावस्थतया द्रष्टृत्वं

ज्ञानयत्नाद्यनेकत्वमात्मनोऽपि मतं यदि ।
नैकज्ञानगुणत्वात्तु ज्योतिर्वत्तस्य कर्मता ॥ ११ ॥
ज्योतिषो द्योतकत्वेऽपि यद्वन्नात्मप्रकाशनम् ।
भेदेऽप्येवं समत्वाज्ज्ञ आत्मानं नैव पश्यति ॥ १२ ॥

चेति कर्मकर्तृत्वं घटत इत्यर्थः । सिद्धान्ती परिहरति—नेति । कुत इत्यत आह—अनेकमेव तदिति । तच्चक्षुरनेकमनेकाकारमेव संहतं च भवतीत्यतो घटते तस्य कर्मत्वं कर्तृत्वं चांशभेदोपपत्तेरित्यक्षरार्थः । गोलकांशस्य दर्पणस्थस्य दृश्यत्वं, तस्यैव शक्तिमत्त्वांशस्य मुखनिविष्टस्य द्रष्टृत्वमिति युक्तमुभयरूपत्वमिति विवक्षितोऽर्थः । आत्मनस्तु नैवमंशभेदोऽस्ति एकरूपत्वात्, असंहतत्वाच्चेत्यभिप्रेत्याह—तत इति । चित्प्रकाशैकस्वभावो ह्यात्मा द्रष्टैव, न दृश्यांशसंभिन्नः, दृश्यांशस्यानात्मत्वात् । अतो द्रष्टृत्वात्कर्मतां न प्राप्नोतीत्यर्थः ॥ १० ॥

ननु आत्मनोऽपि ज्ञानादिभिरनेकात्मत्वसंभवाच्चक्षुर्वद्द्वास्यभासकता स्यादित्याशङ्क्य प्रत्याह—ज्ञानयत्नादिति ।

ज्ञानप्रयत्नेच्छाद्वेषादिगुणभेदैरनेकात्मकत्वादात्मनोऽपि केनचिदंशेन विशिष्टस्य ग्राह्यत्वं, अंशान्तरेण ग्राहकत्वं च यदि तव मतमिति शङ्कान्वयार्थः । तुशब्दः शङ्कानिषेधार्थः । नैवम् । एकज्ञानगुणत्वात् '[1] कृत्स्नः प्रज्ञानघन एव' इति श्रुत्या ज्ञानैकस्वभावत्वावधारणात्, अनेकात्मत्वायोगात्, ज्योतिर्वत्तस्य न कर्मता—ग्राह्यता तस्य न संभवतीति परिहारग्रन्थार्थः ॥ ११

दृष्टान्तं व्याचष्टे—ज्योतिष इति ।

अयमर्थः—यद्यात्मनो ग्राह्यग्राहकांशभेदोऽभ्युपगम्यते, तदेदं वक्तव्यम्—ग्राह्यांशोऽपि चेतनः, किं वा जडः ? इति । तत्राद्यं निराकरोति दृष्टा-

(१) मुं. उ. २. २. ९.

यद्धर्मा यः पदार्थो न तस्यैवेयात्स कर्मताम् ।
न ह्यात्मानं दहत्यग्निस्तथा नैव प्रकाशयेत् ॥ १३ ॥
एतेनैवात्मनाऽऽत्मनो ग्रहो बुद्धेर्निराकृतः ।
अंशोऽप्येवं समत्वाद्धि निर्भेदत्वान्न युज्यते ॥ १४ ॥

न्तेन—ज्योतिष इति । आदित्यादिज्योतिषो द्योतकत्वेऽपि प्रकाशनस्वभावत्वेऽपि नात्मप्रकाशनं न ज्योतिः स्वरूपप्रकाशनम् । तद्वदेव यथा दृष्टान्तः, तथा भेदेऽप्यंशभेदकल्पनेऽपि ज्ञ आत्मा समत्वाच्चैतन्यस्वभावाविशेषादात्मानं नैव पश्यति, न स्वांशं विषयीकरोतीत्यर्थः । न द्वितीयः—जडाजडयोरंशांशित्वेनाभेदानुपपत्तेर्न ग्राह्यग्राहकत्वमिति नात्मनः स्ववेद्यत्वसिद्धिरिति दूषणं स्फुटमेवेत्युपेक्षितमिति द्रष्टव्यम् ॥ १२ ॥

स्वरूपेणांशद्वारेण वा यद्यप्यात्मात्मानं नैव पश्यति, तथापि स्वगुणज्ञानस्य कर्मैव गमिष्यतीत्याशङ्क्याह—यद्धर्मेति ।

यः पदार्थो यद्धर्मा येनासाधारणधर्मेण धर्मवान्, स तस्यैव धर्मस्य कर्मता नेयात् । तथा च ज्ञानस्वभाव आत्मा न ज्ञानकर्मतां गन्तुमर्हतीत्यर्थः । दृष्टान्तभागः स्पष्टार्थः । आत्मा न स्वीयधर्मव्याप्यः, पदार्थत्वात्, अग्निवदित्यर्थः ॥ १३ ॥

उक्तन्यायेन विज्ञानवादी बौद्धोऽपि निराकृत इत्याह—एतेनैवेति ।

आत्मन इत्यस्मिन्नात्मान इति छान्दसः प्रयोगः । बुद्धेरात्मनः स्वरूपस्यात्मना स्वेनैव ग्रह इति बौद्धपक्षोऽप्येतेनैवोक्तदृष्टान्तप्रबन्धेन निराकृत इत्यर्थः । स्वरूपस्य स्वरूपेणैव ग्राह्यत्वाभावेऽपि एकेनांशेन ग्राह्यत्वमंशा-

(१) आत्मनः—इत्यपि साधु पाठः श्रीवाणीविलासमुद्रिते पुस्तके दृश्यते । तेन तु छन्दोभङ्गापत्तिः । (२) अंशो— पाठः । (३) स्पष्ट—पाठः ।

शून्यतापि न युक्तैवं बुद्धेरन्येन दृश्यता ।
युक्ताऽतो घटवत्तस्याः प्राक्सिद्धेश्च विकल्पतः ॥ १५ ॥
अविकल्पं तदस्त्येव यत्पूर्वं स्याद्विकल्पतः ।
विकल्पोत्पत्तिहेतुत्वाद्यद्यस्यैव तु कारणम् ॥ १६ ॥

न्तरेण ग्राहकत्वमिति कल्पनाऽप्यत्र न घटत इत्याह—अंशोऽन्येवमिति । एवं प्रागुक्तवर्त्मना । तदेवाह—समत्वाद्धि निर्भेदत्वादिति ॥ १४ ॥

एवं बुद्धेः स्वग्राह्यत्वनिराकरणेनार्थादन्यग्राह्यत्वमुपक्षिप्तम्, अन्यथा तस्याः क्षणिकत्वाद्यसिद्धेः । तत्र मा भूत्तर्हि बुद्धिस्तद्ग्राहकश्चापरः, शून्यमेवात्मतत्त्वमस्त्विति वादिनं निराकरोति—शून्यतापीति ।

एवं सति शून्यताऽपि न युक्ता । यद्वा—यथा बुद्धेः स्वग्राह्यता न युक्ता युक्तिविरोधात्, एवं शून्यतापि बुद्धेस्तदवभासस्य च न युक्ता, अपरोक्षतया तस्याः प्रतीयमानत्वादित्यर्थः । अतो हेतोर्घटवदन्येन साक्षिणा बुद्धेर्ग्राह्यता युक्ता, साक्षिणि पर्यवसानाचस्यापि न शून्यताशङ्केत्यर्थः । किंच तस्या बुद्धेर्विकल्पतो विकल्पनात्प्रागेव तत्साक्षिणः सिद्धेर्न शून्यता कदापीत्यर्थः । बुद्धिविकल्पनात्पूर्वमेव सुषुप्तावप्यात्मप्रकाशसद्भावोऽङ्गीकर्तव्यः, अन्यथा सुषुप्तेरसाक्षिकत्वादवस्थान्तरे परामर्शानुदयप्रसङ्गादिति भाव.॥१५

किंच यत्कार्यं यदन्वितं दृश्यते तत्तस्य कारणं, कार्यविकल्पात्प्राक् सिद्धं च, यथा घटान्विता मृत्, तथा बुद्ध्यादेर्विकल्पस्य सदार्थान्विततयोपलभ्यमानत्वात्प्राक् सिद्धंसत्कारणत्वमेव युक्तमित्याह—अविकल्पमिति ।

सर्वविकल्परहितं कूटस्थमित्यर्थः । अकारणकार्योत्पत्तेरनुपपत्तेः कारणसत्त्वमेष्टव्यम्, अन्यथा कार्यविशेषार्थिनां कारणविशेषोपादानप्रवृत्तिनियमानुपपत्तिः, शून्यस्य सर्वत्र सुलभत्वादिति भावः ॥ १६ ॥

---

(१) अशो—पाठः । (२) सिद्ध सत्कारणत्वमेव—पाठ. ।

अज्ञानं कल्पनामूलं संसारस्य नियामकम् ।
हित्वाऽऽत्मानं परं ब्रह्म विद्यान्मुक्तं सदाऽभयम् ॥ १७ ॥
जाग्रत्स्वप्नौ तयोर्बीजं सुषुप्ताख्यं तमोमयम् ।
अन्योन्यस्मिन्नसत्त्वाच्च नास्तीत्येतत्त्रयं त्यजेत् ॥ १८ ॥

कूटस्थस्य ब्रह्मात्मनः कथं कारणत्वम् ? व्यापारवद्धि कारणं नामेत्याशङ्क्य रज्जुवत्सर्पस्य विवर्ताधिष्ठानतया तस्य कारणत्वं घटत इत्यभिप्रेत्याह—अज्ञानमिति ।

अज्ञानमनाद्यविद्या कूटस्थप्रत्यगात्मनि ब्रह्मणि सर्वकल्पनाया मूलम-तद्रूपप्रतिभासहेतुरित्यर्थः । तथा च चिदविद्याविवर्तेषु कार्येषु सत्तात्मना भासमानतया कारणत्वं कूटस्थस्यापि घटत इति भावः । संसारस्य नियामकमिति विशेषणेन सर्वविकल्पनाया अज्ञानमूलत्वेऽन्वयव्यतिरेकाख्य प्रमाणमनुमानं सूचयति । तर्ह्यज्ञानविशिष्टमेव किं ब्रह्म प्रत्यक्त्वेनानुसंधेयम् ? नेत्याह—हित्वेति । सकार्यमज्ञानं हित्वा—साक्ष्यत्वेन तस्य साक्षिधर्मतां बाधित्वा, आत्मानं प्रत्यञ्चं साक्षित्वेनोर्वरितं साक्ष्यबाधया परं ब्रह्म परिपूर्णं मुक्तं कार्यकारणप्रपञ्चसंसर्गरहितमभयमद्वयं 'अहं ब्रह्मास्मि' इति महावाक्यार्थभूतं सदा विद्यादनुसंदध्यादित्यर्थः ॥ १७ ॥

संसारनियामकमज्ञानं हित्वाऽऽत्मानं ब्रह्म विद्यादित्युक्तम् । तत्र कः संसारः, कथं वा तस्याज्ञानं कारणं, ततो वा कथमात्मनो विवेकः स्यात् ?—इत्यपेक्षायामाह—जाग्रदिति ।

जाग्रत्स्वप्नौ स्थूलसूक्ष्मविषयभोगलक्षणौ—संसार इति शेषः । तयोर्बीजं कारणं तमोमयमज्ञानप्रायं सुषुप्ताख्यं सुषुप्तिसंज्ञितम् । तमो बीजमिति वक्तव्ये मयट्प्रयोगादज्ञानस्य स्वातन्त्र्यं वार्यते—सभासं तमो बीज-

(१) विन्द्या—पाठ । (२) तुलय—१७ २६

आत्मबुद्धिमनश्चक्षुरालोकार्थादिसंकरात् ।
भ्रान्तिः स्यादात्मकर्मेति क्रियाणां सन्निपाततः ॥ १९ ॥
निमीलोन्मीलने स्थाने वायव्ये ते न चक्षुषः ।
प्रकाशत्वान्मनस्येवं बुद्धौ न स्तः प्रकाशतः ॥ २० ॥

मित्यर्थः । एवं कार्यकारणस्वरूपमुक्त्वा तयोस्त्यागप्रकारमाह—अन्योन्यस्मिन्निति । स्थूलसूक्ष्मकारणावस्थानामन्योन्यस्मिन्नसत्त्वात्, सत्त्वव्यभिचारात्—चकारात्—दृश्यत्वाच्च, एतत्रयं रज्ज्वां दृष्टसर्पधारादिवदात्मनि ततोऽन्यत्र च नास्तीति ज्ञात्वा त्यजेद्विलापयेत्—आत्मानं शोधयेदित्यर्थः ॥ १८ ॥

त्यजेदित्युक्ते कर्तृत्वप्रतीतेः कथमस्यात्मनो ब्रह्मत्वमित्यत आह—आत्मबुद्धीति ।

आत्मा देहः । 'अर्थादि' इत्यादिपदादेशकालादिग्रहः । आत्मादीनां संकरान्मिथो गुणप्रधानभावेनाध्यासाद्धेतोः क्रियाणां सन्निपाततः समुद्भवादात्मकर्म आत्मनः कर्म क्रिया इत्यात्मा तदधिष्ठानभूतः कूटस्थोऽपि करोतीति भ्रान्तिः स्यात् । तस्मादात्मनः स्वतो निष्क्रियत्वान्निष्क्रियं ब्रह्मत्वमविरुद्धमित्यर्थः ॥ १९ ॥

अन्यधर्मस्याप्यन्यत्रारोपे दृष्टान्तमाह—निमीलेति ।

ये नेत्रगोलकस्थाने निमीलोन्मीलने दृष्टे ते वायव्ये वायुकार्ये, क्रियात्मकस्य वायोस्तदाश्रयत्वात्, न चक्षुरिन्द्रियस्य, तस्य प्रकाशरूपत्वात्क्रियाश्रयत्वानुपपत्तेः । तथापि चक्षुष्येव ते व्यपदिश्येते अध्यासाद्यथा, एवं मनसि बुद्धौ च चलनाचलने न स्तः, प्रकाशत्वादेव स्वतो न विद्यते । तथापि प्राणव्यापाररूपे ते तयोरारोप्येते, चञ्चलं मनः स्थिरा बुद्धिरिति व्यपदेशदर्शनादित्यर्थः ॥ २० ॥

---

(१) ¹व्यच—पाठः ।

संकल्पाध्यवसायौ तु मनोबुद्ध्योर्यथा क्रमात् ।
नेतरेतरधर्मत्वं सर्वं चात्मनि कल्पितम् ॥ २१ ॥
स्थानावच्छेददृष्टिः स्यादिन्द्रियाणां तदात्मताम् ।
गता धीस्तां हि पश्यन्ज्ञो देहमात्र इवेक्ष्यते ॥ २२ ॥

मनोबुद्ध्योरसाधारणधर्मकथनपूर्वकं प्रासङ्गिकमुपपादितमुपसंहरति—संकल्पेति ।

संकल्पधर्मकं मनः, अध्यवसायधर्मिका बुद्धिरिति व्यवस्थैव न साङ्कर्यमित्यर्थः । तस्मात्कूटस्थस्यात्मनः स्वतःकर्तृत्वासंभवात्, अविद्यादेश्च जडस्य स्वातन्त्र्येण प्रवृत्त्यसंभवात्, जडाजडयोश्च परमार्थतः संबन्धानिरूपणात्, सर्वं सहेतुकं संसारबन्धनमात्मनि कल्पितमध्यस्तं, न परमार्थतः, इति सदैवात्माऽद्वयं ब्रह्मेति सिद्धमित्यर्थः ॥ २१ ॥

पूर्वं देहेन्द्रियमनोबुद्धिशून्यात्मवादनिराकरणेन तद्विलक्षण आत्मा विवेचितः । इदानीं देहादिविलक्षणोऽप्यात्मा देहसमपरिमाण इति जैनमतमात्मनः परिच्छिन्नत्वशङ्काया न तस्य ब्रह्मत्वमुपपद्यते । न च तत्र सर्वं कल्पितमिति युज्यते कल्पकाभावादित्याशङ्क्याह—स्थानेति ।

इन्द्रियाणां देहाद्बहिर्वृत्त्यभावाद्देहावयवगोलकस्थानावच्छेदेन दृष्टिरुपलम्भः स्यात् । भवतीत्यर्थे स्याच्छब्दः । तथा च त्वगादीनामिन्द्रियाणां यथायोगं देहपरिमाणत्वात्तदात्मतां गता धीः सेन्द्रियदेहतादात्म्यं प्राप्ता बुद्धिः स्यादिति योजना । तां बुद्धिं पश्यन्नवभासयन् ज्ञ आत्मा स्वतोऽपरिच्छिन्नोऽपि देहमात्र इव देहपरिमाणावच्छिन्न इवेक्ष्यते ज्ञायते भ्रान्त्या प्रतिभासते । अन्यथा मध्यमपरिमाणस्य घटादिवत्सावयवत्वेनानित्यत्वापत्तेः पारलौकिकसाधनप्रवृत्त्यसंभवप्रसङ्ग इति दिक् । उक्तोपाधिमन्तरेणात्मनः स्वतःपरिच्छेदानुपलम्भाद्युक्तं तस्य ब्रह्मत्वम् । निरवयवस्य च परमार्थेन उपाधिसंसर्गायोगाद्युक्तं तस्मिन् सर्वस्य कल्पितत्वं चेति भावः ॥ २२ ॥

> क्षणिकं हि तदप्यर्थं धर्ममात्रं निरन्तरम्[१]।
> सादृश्यादीपवद्धीस्तद्भ्रान्तिः पुरुषार्थता ॥ २३ ॥
> स्वाकारान्यावभासं च येषां रूपादि विद्यते ।
> येषां नास्ति ततश्चान्यत्पूर्वासंगतिरुच्यते ॥ २४ ॥

दिगम्बरमतनिराकरणेन यदनन्तत्वमात्मन उक्तं, तदमृष्यमाणाः शाक्याः प्रत्यवतिष्ठन्ते—क्षणिकं हीति ।

तज्ज्ञानं ज्ञेयं चेत्युभयं क्षणिकं हि निश्चितम् । कतिपयानेकक्षणवर्तित्वशङ्कां वारयति—अत्यर्थमिति । स्वरसभङ्गुरमित्यर्थः । धर्ममात्रं वस्तुमात्रं, न स्थायि किंचित्तस्याधिष्ठानमस्तीति मात्रस्यार्थः । तर्हि कथं विच्छेदो नोपलभ्यते ? तत्राह—निरन्तरमिति । नैरन्तर्येणोत्पद्यमानमित्यर्थः । यदि सर्वं क्षणिकमेव, कथं तर्हि तदेवेदमिति, सोऽहमिति च दृश्यद्रष्टृविषयं प्रत्यभिज्ञानं घटत इत्याशङ्क्य अतिसादृश्यादित्याह—सादृश्यादिति । तद्धीस्तदेवेदमिति मतिः । तद्भ्रान्तिस्तस्य स्थायित्वप्रतिभासस्य ज्ञानज्ञेयगतस्य तन्मूलस्याविवेकस्य च भ्रान्तिरसमयः प्रतिभासनिवृत्तिरेव पुरुषार्थता, मोक्ष इत्यर्थः ॥ २३ ॥

सिद्धान्ती दूषणविभागज्ञानाय बौद्धमतभेदं विविच्य दर्शयति—स्वाकारेति ।

स्वाकारस्यान्येन ज्ञानेनावभासोऽस्यास्तीति स्वाकारान्यावभासं रूपादि बाह्यं वस्तु येषां बौद्धाना मते विद्यते, येषां च ज्ञानमात्रास्तित्ववादिना मते ततोऽवभासाज्ज्ञानादन्यद्बाह्यं रूपादि नास्ति, पूर्वार्धगतचकाराद्येषा मते विज्ञानमपि नास्ति शून्यमेव सर्वमिति—तत्र पूर्वासंगतिर्बाह्यार्थसत्त्ववादस्यासंगतिरघटमानता तावदुच्यत इति प्रतिजानीत इति योजना ॥ २४॥

---

(१) तुलय—बृ. उ. वार्तिके १. २. ५७—७३. (२) भास्य—पाठः ।

वाह्याकारत्वतो भ्रमेः स्मृत्यभावः सदा क्षणात् ।
क्षणिकत्वाच्च संस्कारं नैवाधत्ते क्वचित्तु धीः ॥ २५ ॥
आधारस्याप्यसत्त्वाच्च तुल्यतानिर्निमित्ततः ।
स्थाने वा क्षणिकत्वस्य हानं स्यान्न तदिष्यते ॥ २६ ॥

तन्मतस्यासंगतिं प्रतिपादयति—बाह्येति ।

भ्रमेर्ज्ञानस्यैव बाह्याकारत्वतो बाह्यवस्त्वाकारत्वप्रसङ्गादित्यक्षरार्थः । ज्ञेयस्योत्पत्तेः प्राक् तावज्ज्ञानसंबन्धो नास्ति । उत्पन्नस्य च स्वरसभङ्गुरत्वात् कर्मकारकतया ज्ञानात्प्रागवस्थानाभावात्, ज्ञानेन संबन्धानिरूपणाच्च प्रत्यक्षानुभवविरोधात्, नित्यानुमेयत्वकल्पनानुपपत्तेश्च, परिशेषाज्ज्ञानस्यैवाकारो विषय इति विज्ञानमात्रास्तित्ववादिमतप्रवेश इति भावः । किंच—अनुभवितुरपि ते मते क्षणिकत्वादन्यानुभूतेऽन्यस्य स्मृत्यदर्शनादनुभूतविषयस्मृत्यभावश्च प्रसज्येतेत्याह—स्मृत्यभाव इति । क्षणात्क्षणिकत्वात् सदा स्मृत्यभावः प्रसज्येतेत्यर्थः । स्मृतिहेतुसंस्कारोऽपि ते दुर्लभ इत्याह—क्षणिकत्वादिति । धीः क्वचिदपि संस्कारं नैवाधत्ते न निक्षिपति, सर्वस्य क्षणिकत्वादित्यर्थः । चशब्दात्त्र स्वात्मन्यपि, स्वस्यापि क्षणिकत्वादित्यर्थः ॥ २५ ॥

क्वचिदित्युक्तं स्फुटयति—आधारस्येति ।

यत्र संस्कार आधातव्य आत्मन्यन्तःकरणे वा तस्याप्याधारस्य संस्काराधानकालेऽसत्त्वाच्च स्मृत्यभाव इत्यन्वयः । यदुक्तं सादृश्यनिबन्धनो भ्रम एव प्रत्यभिज्ञानमिति तद्दूषयति—तुल्यतेति । इत आरभ्य क्रियमाणं दूषणं क्षणिकविज्ञानमात्रवादेऽपि समानं ज्ञेयम् । तुल्यतानिर्निमित्तत इत्येकं पदम् । तुल्यतायाः पूर्वापरक्षणयोः सदृशत्वस्य निमित्ताभावादित्यर्थः । गुणैरवयवैर्वापि सामान्यं सादृश्यव्यवहारनिमित्तं, तद्भिन्नानां नास्ति,

शान्तेश्चायत्नसिद्धत्वात्साधनोक्तिरनर्थिका ।
एकैकस्मिन्समाप्तत्वाच्छान्तेरन्यानपेक्षता ॥ २७ ॥
अपेक्षा यदि भिन्नेऽपि परसंतान इष्यताम् ।
सर्वार्थे क्षणिके कस्मिंस्तथाप्यन्यानपेक्षता ॥ २८ ॥

निर्गुणत्वान्निरवयवत्वाच्च । तथा पूर्वोत्तरक्षणयोर्द्वयोरेकस्यासत्त्वाच्च न सादृश्यसिद्धिः । अतस्तुल्यताया असिद्धेर्न वह्निरन्धनं प्रत्यभिज्ञानमित्यर्थः । अथ पूर्वापरक्षणसादृश्यद्रष्टा स्थायी कश्चिदाश्रीयते, तत्राह—स्थाने चेति । तत्क्षणिकत्वहानं नेष्यते त्वयेति शेषः ॥ २६ ॥

यत्तु क्षणिकत्वादिभावनया स्थायित्वादिभ्रान्तिशान्तिर्मुक्तिरित्युच्यते बौद्धैस्तदपि नोपपद्यत इत्याह—शान्तेश्चेति ।

शान्तेरयत्नसिद्धत्वमेव साधयति—एकैकस्मिन्निति । भावानामेकैकस्मिन्क्षणे समाप्तत्वात्, तत्संतानस्य चावस्तुत्वात्, एकैकस्मिंश्च भ्रान्त्यभावाच्छान्तेरन्यनिरपेक्षता सिद्धा । अतस्तत्साधनविधानोक्तिर्निरवकाशेत्यर्थः ॥ २७ ॥

किंचास्मिन्मते लोकेऽपि साध्यसाधनभावो न घटत इत्याह—अपेक्षा यदीति ।

कार्यकारणलक्षणानामत्यन्तविलक्षणत्वाद्भिन्नेऽप्यत्यन्तं व्यावृत्तेऽपि क्षीरे यदि दध्नोऽपेक्षा, तदा परसंताने सिकतादावपि दध्नोऽपेक्षेष्यताम्—अत्यन्तभेदाविशेषात्कथं नेष्यते ?—इत्यर्थः । तथा च सिकताभ्योऽपि दधि जायेतेत्यतिप्रसङ्ग इति भावः । प्रसिध्यवष्टम्भेनातिप्रसङ्गपरिहारशङ्कां तदीयामनूद्य निराकरोति—सर्वार्थे इति । सर्वस्य जनस्यार्थेऽर्थ्यमाने कार्यकारणभावेन स्थिते दधिक्षीरादौ वस्तुनि क्षणिकेऽपि कस्मिंश्चित्क्षीर एव कस्यचिद्दध्नोऽपेक्षा, न सर्वत्रेति लोकप्रसिद्धेर्नातिप्रसङ्ग इति चेदिति शङ्कानु-

तुल्यकालसमुद्भूतावितरेतरयोगिणौ ।
योगाच्च संस्कृतो यस्तु सोऽन्यं वीक्षितुमर्हति ॥ २९ ॥
मृषाध्यासस्तु यत्र स्यात्तन्नाशस्तत्र नो मतः ।
सर्वनाशो भवेद्यस्य मोक्षः कस्य फलं वद ॥ ३० ॥

वादार्थः । तथापि प्रसिध्याश्रयणेऽपि क्षणिकपक्षेऽन्यानपेक्षतैवेति परिहारभागार्थः ॥ २८ ॥

तत्र हेतुमाह—तुल्यकालेति ।

यौ भावौ तुल्यकालसमुद्भूतावेककालेन लब्धात्मकौ इतरेतरयोगिणौ परस्परं संबद्धौ च यथा पर्जन्याङ्कुरौ, तयोर्मध्ये यस्तु भावोऽङ्कुरलक्षणः पर्जन्ययोगात्संस्कृतश्च लब्धातिशयश्च भवेत्, स हि खल्वन्यमुपकारिणमीक्षितुमपेक्षितुमर्हति, न क्षणिकः, तथा प्रसिद्धयभावात् । अतः क्षणिकानां भिन्नकालतया परस्परसंबन्धाभावेनोपकार्योपकारकत्वायोगान्नापेक्षा घटयितुं शक्यत इति भावः ॥ २९ ॥

तदेवं क्षणिकमतं निराकृत्य, शून्यमतं निराकरिष्यन्नादौ स्वमतसामञ्जस्यमुपन्यस्यति—मृषेति ।

यद्वा वेदान्तमतेऽपि ब्रह्मात्मनोऽनाधेयातिशयत्वात् क्षणिकमत इव तुल्या मोक्षानुपपत्तिरित्याशङ्क्य परमार्थतोऽतिशयायोगेऽपि स्थायित्वात् फलत्वोपपत्तेर्मैवमित्याह—मृषेति । यत्राधिष्ठाने ब्रह्मात्मनि कर्तृत्वादिसंसाराध्यासो मृषा मिथ्या । अथवा—मृषाध्यासोऽविद्यानिबन्धनो भ्रमः कर्तृत्वादिसंसारप्रतिभासो यत्र स्यादिति योजना । तत्राहं ब्रह्मास्मीति विद्यया तत्रैव तन्नाशोऽध्यस्तनाश इति नो मतोऽस्माकं मतमित्यर्थः । तथा च योऽज्ञानाद्बन्धानुभववान्, तस्य ज्ञानाद्बन्धनिवृत्त्या शुद्धस्वरूपानुभवः पुरुषार्थ इति वेदान्तिमतं समञ्जसमिति भावः । इदानीं शून्यमते दोष-

अस्ति तावत्स्वयं नाम ज्ञानं वात्मान्यदेव वा ।
भावाभावज्ञतस्तस्य नाभावस्त्वधिगम्यते ॥ ३१ ॥
येनाधिगम्यतेऽभावस्तत्सत्स्यात्तन्न चेद्भवेत् ।
भावाभावानभिज्ञत्वं लोकस्य स्यान्न चेष्यते ॥ ३२ ॥

माह—सर्वनाश इति । अनुभवितुरभावात्कस्य पुरुषार्थः सर्वनाशे—इति वदेत्यर्थः । अधिष्ठानारोप्ययोरुभयोरपि नाशे फलाभावात्फलासिद्धेर्मोक्षासिद्धिरिति भावः ॥ ३० ॥

सर्वनाश एव मोक्षो बलादापतति, परमार्थस्वभावस्यास्तित्वे प्रमाणाभावादित्याशङ्कयाह—अस्तीति ।

स्वयं नामास्तीत्यविवादं सर्ववादिनाम् । स च ज्ञानं वा, आत्मा वा, अन्यच्छून्यं वेति परं विकल्पः । तस्याभावस्तु नाधिगम्यते, शून्यता तु न प्रामाणिकीत्यर्थः । कुत इति तत्राह—भावाभावज्ञत इति । लोकव्यवहारसिद्धार्थानां भावाभावाभिज्ञत्वात् । अन्यथा स्थिरस्य कस्यचित्साक्षिणोऽभावे सर्वव्यवहारलोपप्रसङ्ग इत्यर्थः ॥ ३१ ॥

तस्याप्यभावः कस्यचिज्ज्ञातीत्याशङ्कय, यस्य भाति तस्यैव सत्त्वप्राप्तेः, न शून्यत्वशङ्कावकाश इति परिहरति—येनेति ।

अथवा उक्तमेवार्थं प्रपञ्चयति—येनेति । येनाभावोऽधिगम्यते सर्वस्य, तत्सदेव स्यात् । विपक्षे दोषमाह—तन्न चेदित्यादिना । अस्तु लोकस्य भावाभावानभिज्ञत्वमिति चेन्नेत्याह—न चेष्यत इति । केनापि सोऽभिज्ञो निराकर्तुं न शक्यते, निराकर्तुरेव तत्स्वरूपत्वात् । तस्य च सत्त्वात्, तस्यापह्नववचनं स्वानुभवविरुद्धमेवेत्यर्थः ॥ ३२ ॥

सदसत्सदसच्चेति विकल्पात्प्राग्यदिष्यते ।
तदद्वैतं समत्वात्तु नित्यं चान्यद्विकल्पितात् ॥ ३३ ॥
विकल्पोद्भवतोऽसत्त्वं स्वप्नदृश्यवदिष्यताम् ।
द्वैतस्य प्रागसत्त्वाच्च सदसत्त्वादिकल्पनात् ॥ ३४ ॥

यद्यपि भावाभावविभागज्ञं किंचिदस्तीत्यवगतं, तथापि तत्कीदृशमिति विशेषतो निर्धारणे कारणं नास्तीत्याशङ्क्य तत्स्वरूपमुपपादयति—सदसदिति ।

साक्षिस्वरूपं जगत्—सत्, असत्, सदसद्रूपमिति च यो विकल्पो विवादः—तस्मात्प्रागेव सिद्धं, निरालम्बनविकल्पानुपपत्तेः—यत्स्वरूपमिष्यते तदद्वैतम् । तत्र हेतुः—समत्वादिति । विकल्पात्प्राग्वैषम्यहेत्वभावादित्यर्थः । द्वैतजडविलक्षणत्वं तत्स्वरूपमभिधायाऽविनाशित्वं विशेषान्तरमाह—नित्यं चेति । अनृतविलक्षणत्वेन सत्यत्वं च विशेषान्तरमाह—अन्यद्विकल्पितादिति । 'विकल्पात्प्राग्यदिष्यते' इत्यत्र स्वतःसिद्धत्वोक्त्या ज्ञानस्वरूपत्वमुक्तं, अद्वैतमित्यानन्त्यमुक्तम् । नित्यमिति कूटस्थत्वोक्त्या दुःखाभावस्य सूचितत्वात्तदविनाभूतानन्दरूपता ध्वनिता । तथा च सत्यज्ञानानन्तानन्दरूपमात्मतत्त्वमित्यनुभवादेव सिद्धमिति ॥ तत्र कारणान्तरं मृग्यमिति भावः ॥ ३३ ॥

नानाविधे द्वैते प्रतीयमाने कथमद्वैतमात्मतत्त्वमनुभूयत इत्यत्र आह । यद्वा—द्रष्टुः सत्यत्वमुपपाद्य, दृश्यस्य विकल्पात्मकतयाऽनृतत्वं प्रतिपादयति—विकल्पोद्भवत इति ।

द्वैतस्यासत्त्वं परमार्थत्वाभाव इष्यताम् । कुतः ? विकल्पोद्भवतो विकल्परूपेणोद्भूतत्वात्, स्वप्नदृश्यवदिति योजना । द्वैतं न परमार्थसत्, दृश्यत्वात्, स्वप्नदृश्यवदित्यर्थः । हेत्वन्तरमाह—प्रागिति । सदसत्त्वादिविक-

वाचारम्भणशास्त्राच्च विकाराणां ह्यभावता ।
मृत्योः स मृत्युमित्यादेर्मम मायेति च स्मृतेः ॥ ३५ ॥
विशुद्धिश्चात एवास्य विकल्पाच्च विलक्षणः ।
उपादेयो न हेयोऽत्र आत्मा नान्यैरकल्पितः ॥ ३६ ॥

ल्पनात्प्रागसत्त्वाच्च स्वप्नदृश्यवदिति संबन्धः । नहि द्वैतस्याज्ञातसत्त्वे प्रमाणमस्तीति भावः ॥ ३४ ॥

न्यायतो द्वैतमिथ्यात्वमुपपाद्य शास्त्रादपि तन्मिथ्यात्वमुपपन्नमित्याह—वाचारम्भणेति ।

'वाचारम्भणं विकारो नामधेयम्'[1] इति श्रुतिशास्त्राद्विकाराणामभावता सिद्धेति शेषः । वाचारम्भणशब्दो ह्यनृतत्ववचनोऽवगम्यते । 'मृत्तिकेत्येव सत्यम्' इति कारणे सत्यत्वावधारणादित्यर्थः । 'मृत्योः स मृत्युम्'[2] इति शास्त्रेण द्वैतदर्शनस्य निन्दितत्वात्सत्यत्वे द्वैतस्य तदयोगादर्थादनृतत्वं तस्योक्तमित्यर्थः । आदिशब्दात् 'नेह नानास्ति किंचन'[3] इत्यादि साक्षाद्वैतापवादकं शास्त्रं गृह्यते । 'मम माया' इत्यत्र 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते'[4] इति गुणमय्याः सकार्याया मायायाः परमात्मज्ञाननिवर्त्यत्वस्य भगवताऽनुशासनात्, सत्यत्वे तदनुपपत्तेः, मायिकत्वं द्वैतस्य सिद्धमित्यर्थः ॥ ३५ ॥

तदेवं श्रुतियुक्तिभ्यां द्वैतमिथ्यात्वप्रतिपादनेनात्मनोऽद्वितीयत्वे दृढीकृते सति, अशुद्धिकारणाभावात्तस्य विशुद्धिरपि सिध्यतीत्याह—विशुद्धिरिति ।

अस्यात्मनो विशुद्धिः धर्माधर्मतत्फलसंस्पर्शाभावः, अत एव द्वैतस्यानृतत्वादेव । स च यतो विकल्पाद्विलक्षणस्तद्विपरीतस्वभावः, अत एवात्मा

---

(१) छां. उ. ६. १. ४. (२) बृ. उ. ४. ४. १९. (३) बृ. उ. ४. ४. १९. (४) भ. गी. ७. १४.

अप्रकाशो यथाऽऽदित्ये नास्ति ज्योतिःस्वभावतः ।
नित्यबोधस्वरूपत्वान्नाज्ञानं तद्वदात्मनि ॥ ३७ ॥
तथाऽविक्रियरूपत्वान्नावस्थान्तरमात्मनः ।
अवस्थान्तरवत्त्वे हि नाशोऽस्य स्यान्न संशयः ॥ ३८ ॥
मोक्षोऽवस्थान्तरं यस्य कृतकः स चलो ध्रुवः ।
न संयोगो वियोगो वा मोक्षो युक्तः कथंचन ॥ ३९ ॥

नोपादेयो हेयो वा भवति। हानोपादाने हि मूर्तविषये, नामूर्ते प्रत्यगात्मनि ते सभवत इत्यर्थ । किंचान्यैरकल्पितोऽन्ये कल्पयितुमशक्यत्वादपि विशुद्ध एवात्मेत्यर्थ । न हि सर्वकल्पनाधिष्ठान केनचित्कल्पयितु शक्यते, अतो नित्यशुद्ध इति भाव ॥ ३६ ॥

कस्मादात्मा कल्पितो न भवतीत्याशङ्क्य कल्पनाहेतोरज्ञानस्य वस्तुत आत्मन्यभावादित्याह—अप्रकाश इति ।

अनात्मनोऽज्ञानकल्पितत्वादेव तत्र तदभाव इति द्रष्टव्यम् ॥ ३७ ॥

यथा नित्यबोधस्वरूपत्वादज्ञानमात्मनि वस्तुतो नास्ति, तथा सर्वविक्रियारहितस्वभावत्वादवस्थान्तर कूटस्थताप्रच्युतिरूप तस्य नास्तीत्याह—तथाऽविक्रियेति ।

विपक्षे दोषमाह—अवस्थान्तरवत्त्वे हीति ॥ ३८ ॥

मोक्षस्यावस्थान्तरत्वात्कथमवस्थान्तराभाव इति ? तत्राह—मोक्ष इति ।

यस्य वादिनो मते मोक्षोऽवस्थान्तरमात्मन. स्यात्तस्य मते कृतको मोक्ष स्यात्, प्रागवस्थायोगित्वानुपपत्ते. । अत स मोक्षश्चलोऽनित्य एव स्यादित्यपुरुषार्थतापत्तिरित्यर्थ । मा भूदवस्थान्तर मोक्ष, तथापि ब्रह्मण

---

(१) प्रागवस्थाया स्थिताया नष्टाया वा तदन्यावस्थायोगित्वानुपपत्ते —पाठ ।

संयोगस्याप्यनित्यत्वाद्वियोगस्य तथैव च ।
गमनागमने चैव स्वरूपं तु न हीयते ॥ ४० ॥
स्वरूपस्यानिमित्तत्वात्सनिमित्ता हि चापरे ।
अनुपात्तं स्वरूपं हि स्वेनात्यक्तं तथैव च ॥ ४१ ॥

संयोगो वा, प्रकृतेर्वियोगो वा मोक्षो भविष्यतीति मतान्तरमाशङ्क्य प्रत्याह—न संयोग इति ॥ ३९ ॥

अयुक्तत्वे हेतुमाह—संयोगस्येति ।

कृतकस्यानित्यत्वनियमादित्यर्थः । ननु जीवस्य संसारदेशात् परमात्मदेशगमनं वा, परमात्मनो वा स्वोपासकानुग्रहाय तं प्रत्यागमनं मोक्ष इत्याशङ्क्याह—गमनागमने चेति । न मोक्षो युक्त इति पूर्वेणानुषङ्गः । जीवपरयोर्द्वयोरप्यविक्रियत्वाद्गमनागमनायोगादित्यर्थः । परमते दोषमुक्त्वा स्वमते निर्दोषतामाह—स्वरूपं त्विति । न हीयते न विनश्यति, अत आत्मस्वरूपमेव मोक्षो युक्त इत्यर्थः ॥ ४० ॥

आत्मस्वरूपमोक्षस्य नित्यत्वेऽकार्यत्वे हेतुमाह—स्वरूपस्येति ।

नास्ति निमित्तं कारणं यस्य तदनिमित्तं, तस्य भावोऽनिमित्तत्वं, तस्मादकार्यत्वादित्यर्थः । अपरे अवस्थान्तरादयः सनिमित्ता हीत्यतोऽनित्याः स्युरित्यर्थः । स्वरूपस्यानिमित्तत्वं तल्लक्षणोक्त्या साधयति—अनुपात्तमिति । स्वरूपं हि नाम तत्, यत्स्वेनान्येन वा नोपात्तमुपार्जितं न भवति, तथा स्वेनान्येन वा त्यक्तमपि न भवति । न ह्युपादेयं हेयं वा वस्त्रादेः स्वरूपं दृष्टम् । अतो नागन्तुकं वस्तुस्वरूपं, किंतु नित्यमेवेत्यर्थः ॥ ४१ ॥

---

(१) 'कृतस्य मो'—पाठः (२) 'रे त्वं'—पाठः (३) पादेयस्य, हेयस्य वा—पाठः

स्वरूपत्वान्न सर्वस्य त्यक्तुं शक्यो ह्यनन्यतः ।
गृहीतुं वा ततो नित्योऽविषयत्वात्पृथक्त्वतः ॥ ४२ ॥
आत्मार्थत्वाच्च सर्वस्य नित्य आत्मैव केवलः ।
त्यजेत्तस्मात्क्रियाः सर्वाः साधनैः सह मोक्षवित् ॥ ४३ ॥
आत्मलाभः परो लाभ इति शास्त्रोपपत्तयः ।
अलाभोऽन्यात्मलाभस्तु त्यजेत्तस्मादनात्मताम् ॥ ४४ ॥

उक्तं स्वरूपलक्षणमात्मनि लक्ष्ये योजयति—स्वरूपत्वादिति ।

सर्वस्याकाशादेः स्वरूपत्वादारोपितसर्पादे रज्ज्वादिवत्सर्वस्यात्मभूतत्वात् त्यक्तुं, गृहीतुं वा न शक्य आत्मा । कुतः ? हि यस्मादनन्यतो भेदाभावादित्यर्थः । हेयोपादेयत्वाभावे सिद्धे फलितमाह—गृहीतुमिति । आत्मन उपादानहानयोरयोगे पुनरपि क्रमेण हेतुद्वयमाह—अविषयत्वात्पृथक्त्वत इति । न ह्यविषय उपादीयते, स्वरूपं वा त्यज्यत इति युज्यत इत्यर्थः ॥४२॥

आत्मनो नित्यत्वे हेत्वन्तरमाह—आत्मार्थत्वाच्चेति ।

सर्वस्यागमापायिन आत्मार्थत्वादात्मभोग्यत्वात्तेष्वनागमापाय्यंभोक्तात्मा नित्य एवेति योजना । केवलो निरुपाधिरित्यर्थः । उपाधितोऽन्यस्य विशेषो नास्तीत्यर्थः । यस्मादात्मा नित्यः, अन्यत्सर्वमनित्यमात्मार्थं च, स्वात्मन्यवस्थानं मोक्ष इति सिद्धम्, तस्मान्मुमुक्षुणा ससाधनं सर्वं कर्म त्याज्यमित्याह—त्यजेदिति ॥ ४३ ॥

इतोऽपि मुमुक्षुणा क्रिया त्याज्येत्याह—आत्मलाभ इति ।

" आत्मलाभान्न परं विद्यते " इति स्मृतिः शास्त्रम्, सर्वस्वत्यागेनाप्यात्मसंरक्षणप्रवृत्तिदर्शनमुपपत्तिः । बहुवचनप्रयोगादनेकत्वं शास्त्रोपपत्तीनां

(१) 'त्वादपृथक्त्व.—पाठः (२) अनात्म'—पाठः । (३) 'वी भोक्ता—पाठः (४) 'र्थं सर्वं च—पाठः (५) आप. ध. १. २२. २.

गुणानां समभावस्य भ्रंशो न ह्युपपद्यते ।
अविद्यादेः प्रसुप्तत्वान्न चान्यो हेतुरुच्यते ॥ ४५ ॥

सूचयति । आत्मलाभस्य नित्यसिद्धत्वात्किमिदमपूर्वमिवोच्यत इत्यत आह—अलाभ इति । अन्यस्मिन्स्वाज्ञानपरिनिष्पन्नेऽहंकारादावभेदेनात्मस्फुरणमन्यात्मलाभ उच्यते । स तु लाभो न भवति, संसारदुःखहेतुत्वात्, स्वतःसिद्धपरमानन्दाविर्भावप्रतिबन्धकत्वात्; प्रत्युत क्षतिरेवेत्यर्थः । तस्मादनात्मतामहंकाराद्यात्माभिमानितामविद्याध्यारोपितां प्रमाणजनितब्रह्मात्मज्ञानेनाज्ञाननाशनद्वारा त्यजेदित्यर्थः ॥ ४४ ॥

आत्मतत्त्वब्रह्मस्वरूपावगम आत्मलाभ एव परमो लाभः, परमपुरुषार्थ इत्यात्मैक्यज्ञानं मोक्षसाधनम् । आत्मा चाद्वयानन्दरूपः, तस्मिन्नज्ञानमूलः संसारो न परमार्थत इति स्वमतमभिधाय तत्रैव मुमुक्षूणां मतिस्थैर्याय मतान्तरनिराकरणं कर्तुमारभमाणो भगवान्भाष्यकारः सांख्यकल्पनां तावन्निराकरोति—गुणानामिति ।

तत्र यत्प्रधानं त्रिगुणात्मकं स्वतन्त्रमचेतनं पुरुषस्य भोगापवर्गार्थं महदादिरूपेण परिणमत इति कल्पयन्ति, तत्तावन्न संभवति । यतो गुणानां सत्त्वरजस्तमसां समभावस्य सृष्टिप्राक्कालीनमेलनस्य भ्रंशः प्रच्युतिः पूर्वावस्थात्यागेनावस्थान्तरापत्तिरूपः परिणामो दुर्घटत्वान्नोपपद्यते । कुत इति चेत्तत्र वक्तव्यम्—किं निर्हेतुक एव गुणपरिणाम इष्यते, सहेतुको वा ? नाद्य, सदा परिणामप्रसङ्गात् । द्वितीयेऽप्यविद्याप्राण्यदृष्टपुरुषा एव हेतुः, तदन्यो वा परमेश्वरः ? नाद्य इत्याह—अविद्यादेरिति । तस्यामवस्थायामविद्यादेः प्रसुप्तत्वाल्लीनत्वात्पुरुषाणामुदासीनत्वान्न तन्निमित्तः साम्यावस्थाभ्रंश इत्यर्थः । न द्वितीय इत्याह—न चान्य इति । अविद्यादिभ्योऽन्यपरमेश्वराङ्गीकारेऽपसिद्धान्तप्रसङ्ग इत्यर्थः ॥ ४५ ॥

(१) 'प्राण्यदृष्टपुरुष —पाठः ।

इतरेतरहेतुत्वे प्रवृत्तिः स्यात्सदा न वा ।
नियमो न प्रवृत्तीनां गुणेष्वात्मनि वा भवेत्॥ ४६ ॥
विशेषो मुक्तबद्धानां तादर्थ्ये न च युज्यते ।
अर्थार्थिनोस्त्वसंबन्धो नार्थी ज्ञो नेतरोऽपि वा ॥ ४७ ॥

*गुणानामन्योन्यं प्रवृत्तिहेतुत्वं स्यादिति चेत्तत्राह—इतरेतरेति ।*

अस्मिन्पक्षे प्रयोजकान्तरप्रतीक्षानपेक्षणात्सदा प्रवृत्तिः परिणामः स्यात्, न वा स्यात्, विशेषाभावादित्यर्थः । अथ क्रमेणोत्पत्तिस्थितिसंहाराणां प्रसिद्धत्वान्न सदा तत्प्रसङ्ग इति तत्राह—नियम इति । नियम्यतेऽनेनेति नियमो नियामको हेतुः प्रवृत्तीनां गुणकार्योत्पत्त्यादीनां गुणेषु सत्त्वादिष्वात्मनि पुरुषे वा यतो न भवेन्न संभवेत्, अतः सदा प्रवृत्तिरप्रवृत्तिर्वा स्यादिति योजना । नहि गुणपुरुषातिरिक्तं किंचित्तत्त्वमभ्युपगतमस्ति सांख्यैर्यद्गुणेषु वा पुरुषेषु वा स्थित्वा प्रवृत्त्यादिनियामकं स्यादित्यर्थः॥४६॥

*यथाकथंचिद्वस्तु वा प्रधानप्रवृत्तिः, तथापि दोषप्रसक्तिः परिहर्तुं न पार्येत इत्याह—विशेष इति ।*

तादर्थ्ये प्रधानस्य पुरुषार्थत्वे सति बद्धमुक्तानां विशेषो न युज्यते । नहि सर्वपुरुषान् प्रति साधारणे प्रधानस्यैकस्य व्यापारे केचिद्बद्धाः, केचिन्मुक्ता इति व्यवस्थोपपद्यते । तथा च सर्व एव सदा बद्धा मुक्ता वा स्युरित्यर्थः । किंचास्मिन्मतेऽर्थार्थिनोः शेषशेषिणोः संबन्धश्च न युज्यत इत्यन्वयः । अर्थ्यते प्रार्थ्यते इत्यर्थः सुखतत्साधनरूपः पदार्थः, सोऽभिलषितो विद्यते यस्य सोऽर्थी, तयोः संबन्ध उपकार्योपकारकभावलक्षणः, स प्रधानवादे न युज्यते न घटत इत्यर्थः । कुत इत्यत आह—नेति । ज्ञो ज्ञानैकस्वभावः पुरुषो नार्थी युक्तः, तस्यासङ्गत्वनिर्विशेषत्वाभ्युपगमात् । नेतरोऽपि वा प्रधानाख्योऽपि नार्थी, जडत्वादेवेत्यर्थः । तस्मात्प्रधानस्य परार्थत्वकल्पनमयुक्तमिति भावः ॥ ४७ ॥

प्रधानस्य च पारार्थ्यं पुरुषस्याविकारतः ।
न युक्तं सांख्यशास्त्रेपि विकारेऽपि न युज्यते ॥ ४८ ॥
संबन्धानुपपत्तेश्च प्रकृतेः पुरुषस्य च ।
मिथोऽयुक्तं तदर्थत्वं प्रधानस्याचितित्वतः ॥ ४९ ॥
क्रियोत्पत्तौ विनाशित्वं ज्ञानमात्रे च पूर्ववत् ।
निर्निमित्ते त्वनिर्मोक्षः प्रधानस्य प्रसज्यते ॥ ५० ॥

एवं प्रधानस्य पुरुषान्प्रति प्रवृत्तिमङ्गीकृत्यान्ययस्योक्ता, साऽपीदानीं न घटत इति साधयति—प्रधानस्येति ।

पुरुषस्याविकारतः प्रधानकृतातिशययोगित्वलक्षणविकाररहितत्वात्प्रधानस्य पारार्थ्यं च न युक्तमिति योजना । न ह्यनुविधेयकृतातिशयायोगिनि स्वामित्वमुपपद्यत इत्यर्थः । यदि पुरुषस्य प्रधानं प्रति स्वाम्योपपत्तये विकारोऽप्यङ्गीक्रियते, तदाऽङ्गीकृतेऽपि विकारे प्रधानस्य पारार्थ्यं न युज्यते, विकारवतोऽनित्यत्वनियमात्रित्यप्रधानस्वाम्यायोगादित्यर्थः । सांख्यशास्त्रेऽपीत्यपिशब्दान्न वेदबाह्यशास्त्रेष्वेवाव्यवस्था, किंतु सांख्यशास्त्रेऽपीति तस्यापि पुंबुद्धिमूलत्वं, न सम्यग्वेदमूलत्वमस्तीति द्योत्यते ॥ ४८ ॥

प्रधानपुरुषयोः संबन्धाभावमुक्तं प्रपञ्चयति—संबन्धानुपपत्तेश्चेति ।

पुरुषस्यासङ्गोदासीनस्वभावत्वात्प्रकृतेर्जडत्वेन स्वतःप्रवृत्त्यनुपपत्तेः, तयोर्मिथः संबन्धानुपपत्तेः प्रधानस्य तादर्थ्यं पुरुषार्थत्वमयुक्तं युक्तिशून्यं, अचितित्वतो जडत्वात् । प्रधानस्य भृत्यवदुपकारकत्वासंभवादित्यर्थः । अतः प्रधानपुरुषयोरर्थार्थित्वकल्पना न युक्तिमतीति भावः ॥ ४९ ॥

"पुरुषस्याविकारतः" इत्युक्तमविकारित्वं स्पष्टयति—क्रियोत्पत्ताविति ।

---

(१) स्वामित्वमुपपद्यते—पाठः । (२) १६. ४८.

न प्रकाश्यं यथोष्णत्वज्ञानेनैवं सुखादयः ।
एकनीडत्वतोऽग्राह्याः स्युः कणादादिवर्त्मनाम् ॥ ५१ ॥

पुरुषे यत्किंचित्क्रियोत्पत्तौ अभ्युपगम्यमानायां विनाशित्वं तस्य प्रसज्येत—यत्क्रियावत्, तदनित्यं, यथा घटादीति व्याप्तिदर्शनात्; नित्यश्च पुरुषोऽभ्युपगम्यते सांख्यैरित्यर्थः। ननु न परिस्पन्दः परिणामो वा पुरुषस्य क्रियाभ्युपगम्यते येनानित्यत्वप्रसङ्गः, किंतु ज्ञानमेव क्रियाभ्युपगम्यते इति चेत्, तर्हि जन्यमजन्यं वा ज्ञानमभ्युपेयते ? नोभयथापि घटत इत्याह—ज्ञानमात्रे च पूर्ववदिति। जन्यज्ञानयोगे विकारित्वादनित्यत्वापत्तिः। अजन्यज्ञानयोगित्वे न प्रधानं प्रति स्वाम्यसंभव इत्युक्तदोषापत्तिरित्यर्थः। तस्मात्पुरुषस्यासङ्गोदासीनत्वादनाधेयातिशयत्वात्प्रवर्तकत्वानुपपत्तेः, अन्यस्य च हेत्वन्तरस्य प्रधानविकारातिरिक्तस्यानभ्युपगमात्प्रलये च प्रधानविकाराणामलब्धात्मतया प्रवर्तकत्वायोगान्निर्निमित्तैव प्रधानप्रवृत्तिरङ्गीकार्या। तथा चाव्यवस्था सुस्थैवेति प्रतिपादयन्नुपसंहरति—निर्निमित्त इति। प्रधानस्य व्यापारे निर्निमित्तेऽभ्युपगम्यमाने तस्य सर्वदा सर्वान् प्रति प्रवृत्तिसंभवात् दृक्शक्तिमतां पुरुषाणां तद्दर्शनस्यावर्जनीयत्वादनिर्मोक्षः प्रसज्येत। अत इत्थमव्यवस्थितं सांख्यशास्त्रं न मुमुक्षुभिः श्रद्धेयमिति भावः॥ ५० ॥

*निर्गुणपुरुषमतप्रक्रियां निराकृत्य सगुणाः पुरुषा इति वैशेषिकमतप्रक्रियां दूषयति—न प्रकाश्यमित्यादिना।*

आत्मगतेन ज्ञानेनात्मगताः सुखादयो गुणाः प्रकाश्यन्त इति हि ते मन्यन्ते, तन्नोपपद्यते। तथाहि यथोष्णत्वमग्निनिष्ठमग्निनिष्ठेन प्रकाशेन न प्रकाश्यं प्रकाशार्हं न भवति, एकाश्रयत्वात्, एवं सुखादयो गुणा आत्मनिष्ठेन ज्ञानेनाग्राह्या न ग्राह्याः स्युः। कुतः ? एकनीडत्वत एकाश्रयत्वात्।

युगपत्समवेतत्वं सुखविज्ञानयोरपि ।
मनोयोगैकहेतुत्वाद्ग्राह्यत्वं सुखस्य च ॥ ५२ ॥
तथाऽन्येषां च भिन्नत्वाद्युगपज्जन्म नेष्यते ।
गुणानां समवेतत्वं ज्ञानं चेन्न विशेषणात् ॥ ५३ ॥

श्यादादिवर्त्मना मत इत्यर्थः । विषयविषयिणोः समानदेशत्वे ग्राह्यमिदं, ग्राहकमिदमिति च भेदनियमो न सिध्येदिति भावः ॥ ५१ ॥

न केवलमेकाश्रयत्वादेव ज्ञानसुखादीनां भास्यभासकत्वानुपपत्तिः, अपि तु यौगपद्यासंभवादपीत्याह—युगपदिति ।

नेति पूर्वश्लोकादनुवर्तनीयम् । तथा चायमर्थः—सुखविज्ञानयोर्न युगपत्समवेतत्वं संभवति । कुतः ? मनोयोगैकहेतुत्वान्मनःसंयोगस्यासमवायिकारणस्यैकस्यैवेनात्मगुणं प्रति हेतुत्वाभ्युपगमात्, तथात्वे सुखासमवायिकारणमनःसंयोगनाशे सुखस्य नाशात्, संयोगान्तरासमवायिकारणज्ञानेन सुखस्य न ग्राह्यत्वं प्रत्यक्षत उपपद्यते इति । अपिशब्दात्समवायोऽपि न प्रमाणयुक्तिपथमवतरतीति द्योत्यते । चशब्दादात्ममनसोर्निरवयवयोः प्रदेशाभावादात्मनोरिव संयोगानुपपत्तिः । संयोगे वा विभोरात्मनो विभागानुपपत्तिः । तदभावे संयोगान्तरानुपपत्तौ ज्ञानादिकार्यक्रमानुपपत्तिः । कार्याणामसमवायिकारणदेशाननिवर्तित्वनियमदर्शनादन्यत्र, इहापि तत्प्रसङ्गेऽणुपरिमाणमनःसंयोगस्याणुदेशमात्रवर्तितया तत्कार्यस्यापि तन्मात्रवर्तित्वे सकलशरीरगतात्मवेदनाया अप्रत्यक्षत्वप्रसङ्ग इत्यादिदूषणगणः समुच्चीयते ॥ ५२ ॥

सुखवदेव दुःखेच्छाद्वेषप्रयत्नानामप्यग्राह्यत्वं न्यायसाम्यादित्याह—तथेति ।

---

( १ ) 'नियमासिद्धेरिति भावः । —पाठः ( २ ) तथात्वे सु'—पाठः

ज्ञानेनैव विशेष्यत्वाज्ज्ञानाप्यत्वं स्मृतेस्तथा ।
सुखं ज्ञातं मयेत्येवं तवाज्ञानात्मकत्वतः ॥ ५४ ॥
सुखादेर्नात्मधर्मत्वमात्मनस्तेऽविकारतः ।
भेदादन्यस्य कस्मान्न मनसो वाऽविशेषतः ॥ ५५ ॥

अन्येषां गुणानां भिन्नत्वात्परस्परविलक्षणत्वाज्ज्ञानसुखयोरिव युगपज्जन्म नेष्यते, एकस्यात्ममनःसंयोगस्यानेककार्यहेतुत्वासंभवस्योक्तत्वादित्यर्थः । चकारादेकाश्रययोर्विषयविषयित्वायोगः पूर्वोक्तः संगृह्यते । मा भूज्ज्ञानभास्यत्वं सुखादीनां, एकस्मिन्नात्मनि समवेतत्वमेव तेषां ज्ञानं नामेत्याशङ्क्य ज्ञानेन तेषां विशेषितत्वान्नैवमित्याह—गुणानामिति । ज्ञातं सुखं, ज्ञातं दुःखमिति विशिष्टव्यवहारदर्शनादित्यर्थः ॥ ५३ ॥

एतदेव विशदयति—ज्ञानेनैवेति ।

ज्ञानेन विशेष्यत्वादेव ज्ञानाप्यत्वं सुखादीनामेष्टव्यमित्यर्थः । ज्ञानाहितसंस्कारजन्यस्मृतिविषयत्वादपि ज्ञानाप्यत्वं सुखादेरेष्टव्यमित्याह—स्मृतेस्तथेति । सुखं मया ज्ञातमित्येवं स्मृतेरिति संबन्धः । किंच ज्ञानविशिष्टात्मसमवेतत्वं सुखादेर्ज्ञानमिष्यते ? केवलात्मसमवेतत्वं वा ? नाद्यः—युगपत्क्षणिकात्मविशेषगुणानां समवायासंभवस्योक्तत्वादात्मगतसंख्यापरिमाणादेरपि ग्रहणप्रसङ्गाच्चेत्यभिप्रेत्य, द्वितीयं दूषयति—तवेति । तव मते आत्मनो ज्ञानभिन्नत्वात्, घटवद्द्रव्यमात्रत्वात्, तत्समवेतत्वमात्रेण न सुखादिसिद्धिः—सर्वस्य जडत्वादित्यर्थः ॥ ५४ ॥

ज्ञानसुखादीनामात्मगुणत्वाभ्युपगमेन भास्यभासकत्वासंभव उक्तः, इदानीं तेषामात्मगुणत्वमपि दुर्भणमित्याह—सुखादेरिति ।

सुखादेरात्मधर्मत्वं न संभवति । ते तव मते आत्मनोऽविकारतो विकारित्वाभावात्, विभुत्वाङ्गीकारेण नित्यत्वाभ्युपगमात् । नहि नित्यमनित्यगु-

स्यान्मालाऽपरिहार्या तु ज्ञानं चेज्ज्ञेयतां व्रजेत् ।
युगपद्वापि चोत्पत्तिरभ्युपेताऽत्र इष्यते ॥ ५६ ॥

णकमिति मां प्रति दृष्टान्तः कोऽपि विद्यते, अतो नात्मनो गुणवत्त्वसिद्धिः, दूरं ग्राह्यग्राहकत्वकल्पनेति भावः । किंच गुणगुणिनोरत्यन्तभेदवादिनस्तत्र मते अस्यैवात्मनोऽयं सुखादिरिति नियमोऽपि दुर्घट इत्याह—भेदादिति । अन्यस्यात्मान्तरस्य, मनसो वा कस्मात् सुखादयो गुणा न स्युः, अविशेषेन भेदाविशेषादित्यक्षरार्थः । अयमाशयः—सर्वात्मनां विभुत्वाङ्गीकाराद्यच्छरीरावच्छेदेनात्मनि सुखादयो जायन्ते, तत्र तदा सर्वात्मनां सत्त्वात्, तद्भेदस्य च तत्रानवगमात्, अस्यैवात्मनोऽयं सुखादिधर्मः, नान्यस्येति नियन्तुं न शक्यते । न मनःसंयोगभेदो नियामकः, मनस्यपि सर्वात्मसंबन्धस्याविशेषात् । नाप्यदृष्टभेदो नियामकः, तस्याप्यात्मधर्मत्वासिद्धेः । अदृष्टहेतुप्रयत्नादेरपि मनःसंयोगनिमित्तकत्वात्, तस्य च सर्वात्मसु विशेषासिद्धेरदृष्टस्यापि नाश्रयविशेषसिद्धिरिति । यत्र कुत्रापि जायमानं सुखादि यस्य कस्यापि कस्मान्न स्यात्, तथा मनसः क्रियावत्त्वान्मूर्तत्वात्सुखादिदेशाव्यभिचाराच्च तस्यैव कस्माद्धर्माः सुखादयो न स्युर्विनिगमनाभावात् ?—इति ॥ ५५ ॥

य[1]द्यपि वैशेषिकैर्ज्ञानस्य ज्ञानान्तरवेद्यत्वमिष्यते, तदप्ययुक्तमनवस्थाप्रसङ्गादित्याह—स्यान्मालेति ।

अयमर्थः—येनात्मनः संयोगेन प्रथमं ज्ञानं जायते, तदन्येन संयोगान्तरेण तद्विषयं ज्ञानान्तरं जायते, किंवा तेनैव संयोगेन ? आद्ये दोषमाह—स्यादिति । ज्ञानं चेज्ज्ञेयतां व्रजेत्, तदाऽपरिहार्या ज्ञानमाला ज्ञानपरम्परा स्यात्—ज्ञानानवस्था स्यादित्यर्थः । विषयावभाससमये यदि ज्ञानं

---

(१) यद्यपि—पाठः

अनवस्थान्तरत्वाच्च बन्धो नात्मनि विद्यते ।
नाशुद्धिश्चाप्यसङ्गत्वादसङ्गो हीति च श्रुतेः ॥ ५७ ॥

नावभासेत, तदा विषयः स्वयमेव भासते ? ज्ञानाधीनतया वा ?—इति विवेक्तुमशक्यत्वात्तदैव ज्ञानभाने ज्ञानान्तरमेष्टव्यं; तस्याप्यभाने पूर्वज्ञानस्य ज्ञानान्तरभास्यत्वासिद्धेस्तज्ज्ञानाय ज्ञानान्तरमिति दुर्निवाराऽनवस्था स्यादिति भावः । तुशब्दश्चार्थः । तेन च प्रथमज्ञानोत्पत्त्यनन्तरं मनसि क्रिया, ततो विभागः, ततः पूर्वसंयोगनाशः, ततः संयोगान्तरं, ततो ज्ञानान्तरम्—इति बहुक्षणविलम्बेनोत्पद्यमानमुत्तरज्ञानं पूर्वज्ञानावभासनं कथं कुर्यात् ?—तस्य तदानीमभावादित्यादियुक्त्यन्तरं समुच्चीयते । अथ द्वितीयं कल्पमनूद्यातिप्रसङ्गेन दूषयति—युगपद्वेति । अपि चानवस्थादोषपरिजिहीर्षया पूर्वोत्तरज्ञानयोरेकस्मादेव संयोगात्, युगपद्वोत्पत्तिरभ्युपेता—चेदित्यनुषज्यते—तदाऽनोऽस्मादेव संयोगाद्युगपत्संनिकृष्टरूपरसगन्धशब्दस्पर्शज्ञानानामपि तदैवोत्पत्तिरिष्यतां, तदा संस्कारोद्बोधसंपाते सहकारिलाभात्तदर्थस्मृतीनामप्युत्पत्तिरिष्यताम् । अतो न ज्ञानस्य ज्ञानान्तरवेद्यत्वकल्पना युक्तिमतीति स्थितमित्यर्थः ॥ ५६ ॥

किंचात्मनश्चैतन्यं स्वरूपलक्षणमुच्यते ? तटस्थलक्षणं वा ? आद्ये पृथिव्यादौ गन्धादिवत्सदातनत्वात्, तस्य च स्वरूपानतिरेकात्, अनित्यज्ञान आत्मेत्युद्घोषो मृषैव स्यात् । द्वितीये तु स्वरूपलक्षणमन्यदनात्मासाधारणं वक्तव्यं, तच्च चेतनातिरिक्तं न किमपि संभावितमस्ति, अतो देहादिजडविलक्षणमात्मानमभ्युपगच्छता सदा निर्विशेषचिद्रूपः कूटस्थ एवात्माभ्युपेतव्यः, अन्यथा विकारिणोऽनित्यत्वनियमाद्बन्धमोक्षान्वय्येक आत्मा भवतीति दुःसंपादमित्येतत्सर्वमभिप्रेत्याह—अनवस्थान्तरत्वाच्चेति ।

---

(१) युज्यते—पाठः (२) बृ. उ. ४. ३. १५. (३) 'सिद्धि—पाठः ।

**सूक्ष्मैकागोचरेभ्यश्च न लिप्यत इति श्रुतेः ।**
**एवं तर्हि न मोक्षोऽस्ति बन्धाभावात्कथंचन ॥ ९८ ॥**

नास्त्यवस्थान्तरं यस्य सोऽनवस्थान्तरः तस्य, भावोऽनवस्थान्तरत्वं तस्मादिति विग्रहः । आत्मन इति शेषः । तथा चात्मनः कूटस्थत्वात्तस्मिन्नात्मनि बन्धो विशेषगुणवत्त्वलक्षणः परमार्थतो न विद्यते । चकारात्तन्निवृत्तिरूपो मोक्षोऽपि न विद्यत इति योज्यम् । तस्मान्नित्यशुद्ध एवात्मेत्यत्र प्रमाणं वदन् परकल्पनानिराकरणफलमाह—नाशुद्धिश्चापीति । स्वगतधर्मकृतबन्धाभाववदन्यसंसर्गकृताशुद्धिरपि न चास्ति, असङ्गत्वादित्यर्थः ॥ ९७ ॥

इतश्च नात्मनः पारमार्थिको बन्ध इत्याह—सूक्ष्मेति ।

सूक्ष्मत्वं मनोवागगम्यत्वम्, एकत्वमद्वितीयत्वम्, अगोचरत्वं निर्विशेषत्वम्, एतेभ्यश्च हेतुभ्यो नित्यशुद्ध एवात्मा 'न लिप्यते लोकदुःखेन बाह्यः' इति श्रुतेरित्यर्थः ।

'यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते' ॥

इति भगवद्वचनं चात्रोदाहर्तव्यम् । अर्धश्लोकः ।

एवमात्मनो नित्यशुद्धबुद्धमुक्तस्वभावत्वं साधयतो वेदान्तिन [illegible] शास्त्रानर्थक्यमित्याक्षिपन्ति पूर्ववादिनः—एवं तर्हीति ।

यदीत्यध्याहार्यम् । यद्येवं नित्यशुद्ध आत्मा, तर्हि [illegible] बन्धाभावान्मोक्षोऽपि नास्ति, बन्धपूर्वकत्वान्मोक्षस्य [illegible]

(१) 'न्तरं—पाठः (२) कठ॰ उ॰ ५. ११. (३) [illegible]

शास्त्रानर्थक्यमेव स्यान्न बुद्धेर्भ्रान्तिरिष्यते ।
बन्धो मोक्षश्च तन्नाशः स यथोक्तो न चान्यथा ॥ ५९ ॥

बोधात्मज्योतिषा दीप्ता बोधमात्मनि मन्यते ।
बुद्धिर्नान्योऽस्ति बोद्धेति सेयं भ्रान्तिर्हि धीगता ॥ ६० ॥
बोधस्यात्मस्वरूपत्वान्नित्यं तत्रोपचर्यते ।
अविवेकोऽप्यनाद्योऽयं संसारो नान्य इष्यते ॥ ६१ ॥

तथाच मोक्षोपायोपदेशशास्त्रानर्थक्यमेव स्यादिति । उत्तरमाह—न बुद्धेरित्यादिना ।

बुद्धेर्भ्रान्तिः बन्ध इष्यत इत्यन्वयः । तन्नाशो भ्रान्तिनाशो मोक्ष इति चेष्यते, न परमार्थत इत्यर्थः । स बन्धो यथा पूर्वमुक्तः 'अज्ञानं कल्पनामूलं संसारस्य नियामकम्' इति तथैव, न चान्यथा । तथाच अज्ञानकल्पितबन्धभ्रमनिवृत्त्यर्थत्वादुपदेशशास्त्रस्य न वैयर्थ्यप्रसङ्ग इत्यर्थः ॥ ५९ ॥

अज्ञानमूलबुद्धिधर्माध्यासलक्षणो बन्धश्चिदात्मनीत्युक्तमुपपादयति—बोधात्मेति ।

बोधरूपस्यात्मनो यज्ज्योतिः प्रकाशश्चिदाभासः, तेन दीप्ता व्याप्ता प्रकाशिता बुद्धिरात्मनि स्वस्यां बोधं चैतन्यं मन्यते—अन्यो बोद्धा साक्षी नास्ति, अहमेव बोद्धेति साभासा बुद्धिः प्रकाशते—तदविवेकादहमेव वेद्मि कर्तेत्यादिरात्मनि संसारो धीगता भ्रान्तिरेवेत्यर्थः ॥ ६० ॥

बुद्धेरेव बोधात्मत्वं यथाप्रतीति परमार्थं किं न स्यादिति चेन्नेत्याह—बोधस्येति ।

बुद्धेरागन्तुकत्वेन बोधव्यभिचारात्, बोधस्य च विनापि बुद्धिं सुषुप्ते सद्भावादात्मस्वरूपत्वात्तत्र बुद्धौ स उपचर्यतेऽध्यस्य व्यवह्रियतेऽविवेका-

---

( १ ) १६. १७. ( २ ) बोद्धाऽ—पाठः

मोक्षस्तन्नाश एव स्यान्नान्यथानुपपत्तितः ।
येषां वस्त्वन्तरापत्तिर्मोक्षो नाशस्तु तैर्मतः ॥ ६२ ॥
अवस्थान्तरमप्येवमविकारान्न युज्यते ।
विकारेऽवयवित्वं स्यात्ततो नाशो घटादिवत् ॥ ६३ ॥

दित्यर्थः । तर्हि सोऽविवेकः सादिः, अनादिर्वेति वीक्षायामाह—अविवेकोऽपीति । यद्यविवेक एवानाद्यज्ञानकृतत्वादनादिः, तर्हि तस्यैव प्रज्ञानमज्ञानान्निवृत्तिः स्यान्न संसारस्येति भ्रमं वारयति—संसारो नान्य इष्यत इति । कर्त्रादिधर्मकबुद्ध्यविवेक एव संसार इत्यर्थः ॥ ६१ ॥

बन्धस्याज्ञानात्मकत्वे फलितमाह—मोक्ष इति ।

ज्ञानादज्ञाननिवृत्त्या तत्कार्यबन्धनिवृत्तिरेव मुक्तिः, नान्यथा, हेयस्योपादेयस्य वा मोक्षस्यानुपपत्तितोऽनुपपत्तेरित्यर्थः । अनुपपत्तिमेव द्रढयन् पक्षान्तरं निराकरोति—येषामिति । येषां वादिना स्वरूपादन्यवस्त्वन्तरापत्तिरात्मनो मोक्ष इति मतं, तैरात्मनाश एव मोक्ष इष्टः स्यात्, स्थितस्य नष्टस्य वान्यस्यान्यत्वासंभवात् । वस्त्वन्तरापत्तिशब्देन यदि प्राप्तिर्विवक्ष्यते, तथापि 'संयोगा विप्रयोगान्ताः' इति न्यायेन कृतकस्यानित्यत्वव्याप्तेश्चानित्यो मोक्षः स्यादित्यर्थः ॥ ६२ ॥

यथा वस्त्वन्तरापत्तिर्मोक्ष इति पक्षेऽनुपपत्तिरनित्यत्वापत्तिश्च, तथात्मनोऽवस्थान्तरापत्तिमोक्षपक्षेऽपि स दोषस्तुल्य इत्याह—अवस्थान्तरमप्येवमिति ।

अविकारित्वादात्मनोऽवस्थान्तरमपि न युज्यते । यदि पुनर्विकारोऽभ्युपगम्येत, तथा सति सावयवत्वमात्मनः स्यात्, ततः सावयत्वान्नाश एव घटादिवदपरिहार्यः स्यात् । अतो भ्रान्तिनिवृत्तिमात्र एव मोक्षः, नान्यथा संभवतीत्यर्थः ॥ ६३ ॥

(१) 'न्नान्योऽस्त्वनु'—पाठः (२) 'यदि' रहितः पाठः । (३) स्त्रीपर्व २. ३.; मोक्षप. ३३८. २०. इत्यादौ

तस्माद्भ्रान्तिरतोऽन्या हि बन्धमोक्षादिकल्पनाः ।
सांख्यकाणादबौद्धानां मीमांसाहतकल्पनाः ॥ ६४ ॥
शास्त्रयुक्तिविहीनत्वान्नादर्तव्याः कदाचन ।
शक्यन्ते शतशो वक्तुं दोषास्तासां सहस्रशः ॥ ६५ ॥
अपि निन्दोपपत्तेश्च यान्यतोऽन्यानि चेत्यतः ।
त्यक्त्वातो ह्यन्यशास्त्रोक्तीर्मतिं कुर्याद्दृढां बुधः ॥ ६६ ॥

वेदान्तसिद्धान्तादन्या बन्धमोक्षादिकल्पना: वादिभिरुत्प्रेक्षिता: श्रुतिस्मृतिन्यायबाधितत्वान्नादरणीया मुमुक्षुभिरित्युपसंहरति—तस्मादिति द्वाभ्याम् ।

भ्रान्तिरेव परिशेषादात्मनि बन्धमोक्षप्रतिभास इति कल्पना श्रुत्याद्यविरुद्धा । अतोऽन्या बन्धमोक्षादिकल्पना:, आदिशब्दात्तद्धेतुकल्पनाश्च नादर्तव्याः कदाचनेति संबन्धः । अतोऽस्मात्सिद्धान्तादन्या बन्धमोक्षादिकल्पना हि यस्माद्भ्रान्तिः प्रमाणशून्या, तस्मान्नादर्तव्येति वान्वयः । केषां वा कल्पना नादर्तव्येत्यत आह—सांख्येति । मीमांसाहता विचारविरुद्धा, विचारासहा वा कल्पना मीमांसाहतकल्पना इत्यर्थः ॥ ६४ ॥

अनादरे हेतुमाह—शास्त्रेति ।

शास्त्रयुक्तिविरुद्धाश्च ताः कल्पना इत्याह—शक्यन्त इति ॥ ६५ ॥

इतश्च साख्यादिकल्पना नादर्तव्येत्याह—अपि निन्दोपपत्तेरिति ।

"यान्यतोऽन्यानि शास्त्राणि पृथिव्यां विविधानि वै
शङ्कनीयानि विद्वद्भिर्धर्मशुद्धिमभीप्सुभिः" ॥

"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः"

(१) विरोधात्ता ना°—पाठः (२)?(३) मनुस्मृ. १२.९५. सूतसं. ?.१४ १८.

श्रद्धाभक्ती पुरस्कृत्य हित्वा सर्वमनार्जवम् ।
वेदान्तस्यैव तत्त्वार्थे व्यासस्याभिमते तथा ॥ ६७ ॥

इति प्रणुन्ना द्वयवादकल्पना निरात्मवादाश्च तथा हि युक्तितः ।
व्यपेतशङ्काः परवादतः स्थिरा मुमुक्षवो ज्ञानपथे स्युरित्युत ॥६८॥

स्वसाक्षिकं ज्ञानमतीव निर्मलं
विकल्पनाभ्यो विपरीतमद्वयम् ।
अवाप्य सम्यग्यदि निश्चितो भवेत्
निरन्वयो निर्वृतिमेति शाश्वतीम् ॥ ६९ ॥

इत्यादिनिन्दावचनान्नादर्तव्या इत्यर्थः । अतोऽन्यशास्त्रोक्तीस्त्यक्त्वा दृढां मतिं बुधः कुर्यादित्यन्वयः ॥ ६६ ॥

कथं मतिं कुर्यात् ? कुत्र वेत्याकाङ्क्षायामाह—श्रद्धेति ।

श्रद्धा श्रुत्युक्तेऽर्थे विश्वासः, भक्तिस्तत्परता, ते पुरस्कृत्य आदरेणावलम्ब्येत्यर्थः । सुगममन्यत् ॥ ६७ ॥

एवमुक्तं परपक्षनिराकरणं संक्षिप्य तत्प्रयोजनं कथयति—इतीति ।

इति इत्थं युक्तितः प्रणुन्ना निराकृता द्वयवादकल्पना भेदवादकल्पना इति यावत् । तथा निरात्मवादाः बौद्धवादाश्च युक्तितः प्रणुन्ना इत्यर्थः । किमर्थं तदाह—व्यपेतेति । मुमुक्षवः परवादतः परशास्त्रेभ्यो व्यपेतशङ्काः स्वप्रामाणिकत्वशङ्कारहिताः सन्तो ज्ञानपथे वेदान्तोक्तज्ञानमार्गे स्थिराः स्युर्भवेयुरित्युत अपीति योजना ॥ ६८ ॥

वेदान्तविहितब्रह्मात्मज्ञानस्यैव पुरुषार्थसाधनत्वमिति तत्स्वरूपकथनपूर्वकं मुमुक्षूणां तन्निष्ठत्वमावश्यकमिति दर्शयति—स्वसाक्षिकमिति ।

---

(१) मतो—पाठ (२) त्यत—पाठ युतनर ।

इदं रहस्यं परमं परायणं
व्यपेतदोषैरभिमानवर्जितैः ।
समीक्ष्य कार्या मतिरार्जवे सदा
न तत्त्वदृक्स्वान्यमतिर्हि कश्चन ॥ ७० ॥

अद्वयमखण्डवस्तुमात्राकारामित्यर्थः । निरन्वयो निरस्ताज्ञानतत्कार्यसम्बन्ध सन्नित्यर्थः । शाश्वती निर्वृतिरखण्डानन्दानुभवस्वरूपाविर्भावः ॥ ६९ ॥

यथोक्तज्ञानाधिकारिणं संक्षिप्तविशेषणसारं कथयन्, तत्त्वनिष्ठालक्षणमाह—इदं रहस्यमिति ।

यदवाप्य शाश्वतीं निर्वृतिमेति, तदिदं रहस्यमुपदेशैकगम्यम् । परमं परमात्मतत्त्वप्रकाशत्वात्सर्वोत्तमम्, परायणं निरवधिकसर्वाश्रयं परमगतिरूपमिति यावत् । एवंविधमात्मज्ञानं समीक्ष्य सम्यगालोच्य दृढीकृत्येति यावत् । व्यपेतदोषैरपगतन्द्रियबहिर्मुखैरभिमानवर्जितैः पाण्डित्यादिनिमित्तचित्तदोषरहितैः शान्तैर्दान्तैश्चेति यावत् । एवंविधैरधिकारिभिरार्जवे ऋजुभावे सर्वसमे ब्रह्मात्मतत्त्वे मतिर्निष्ठा सदा कार्या—ब्रह्मात्मतत्त्वमेव ऋजु सर्वदा सर्वत्रैकरूपत्वात्, तत्स्वरूपमेवार्जवं नाम, तस्य निर्विशेषत्वादिति द्रष्टव्यम् । तथा च ब्रह्माभेदेनात्मज्ञाननिष्ठा तत्त्वनिष्ठेत्युक्तं भवति । एतदेव व्यतिरेककथनेन विशदयति—न तत्त्वदृगिति । यः कश्चन स्वान्यमतिः प्रत्यगात्मनोऽन्यस्मिन् ब्रह्मणि मतिर्यस्य स स्वान्यमतिः, स न तत्त्वदृक् तत्त्वदृष्टिर्न भवतीत्यर्थः । 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते', 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' इति श्रुतेः ॥ ७० ॥

---

( १ ) शाठ्यमतिः—पाठः । ( २ ) के. उ. ४, ५, ६, ७, ८. ( ३ ) बृ. उ. १. ४. १०.

अनेकजन्मान्तरसंचितैर्नरो
विमुच्यतेऽज्ञाननिमित्तपातकैः ।
इदं विदित्वा परमं हि पावनं
न लिप्यते व्योमै इवेह कर्मभिः ॥ ७१ ॥
प्रशान्तचित्ताय जितेन्द्रियाय च
प्रहीणदोषाय यथोक्तकारिणे ।
गुणान्वितायानुगताय सर्वदा
प्रदेयमेतत्सततं मुमुक्षवे[2] ॥ ७२ ॥

एवमतियत्नलभ्येन ज्ञानेन किं फलं साध्यते तदाह—अनेकेति ।
स्पष्टार्थः ॥ ७१ ॥

इदं ज्ञानमाचार्येण कस्मै दातव्यमित्यपेक्षायां विस्तृतविशेषणमधिकारिणमाह—प्रशान्तेति ।

प्रशान्तचित्ताय शान्तिगुणयुक्ताय, जितेन्द्रियाय दान्ताय, प्रहीणदोषाय अनेकजन्मानुष्ठितयज्ञादिपरितोषितेश्वरप्रसादहृतसमस्तकल्मषाय, यथोक्तकारिणे शास्त्रोक्तस्वधर्मस्य यथाशास्त्रमनुष्ठात्रे, गुणान्विताय विद्याविनयार्जवादिगुणयुक्ताय, सर्वदा दीर्घकालं सततं च नैरन्तर्येणानुगताय गुरुमनुसृताय—एवंविधाय मुमुक्षवे मोक्षमात्रेच्छावते एतदात्मज्ञानं गुरुणा प्रदेयं प्रतिपादयितव्यमित्यर्थः ॥ ७२ ॥

---

(१) 'भवदेव क'—पाठः । (२) विद्याधिकारिणः शमादिसाधनवत्त्वे "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति" इति बृ. उ. ४.४. २३. श्रुतिं काण्वाः पठन्ति । 'समाहितः' इत्यस्य स्थाने 'श्रद्धावित्तः' इति माध्यन्दिनाः । तदुभयपाठानुरोधेन गुणोपसंहारन्यायमाश्रित्येह शमादयः षण्निर्दिष्टा इति द्रष्टव्यम् । तुल्य—उ. सा. गद्यप्रबन्धे २ वाक्यं तट्टीकां च, तथा १७. ८६. शमादेर्विद्याहेतुत्वं

परस्य देहे न यथाभिमानिता
परस्य तद्वत्परमार्थमीक्ष्य च ।
इदं हि विज्ञानमतीव निर्मलं
समाप्य मुक्तोऽथ भवेच्च सर्वतः ॥ ७३ ॥

एवंविधः शिष्यो महावाक्येनावगमितमात्मतत्त्वं कथमवगच्छति, किंवा फलं प्राप्नोति?—इत्यपेक्षायामाह—परस्येति ।

यथा परस्यान्यस्य देहे परस्य नाभिमानिता अहंममेत्यभिमानित्वं न संभवति, तद्वत् स्वदेहेऽपि परमार्थमीक्ष्य देहातिरिक्तमात्मतत्त्वमीक्ष्या-लोच्याभिमानरहितः सन्निति यावत् । चकारात्तत्प्रतिपादकवेदान्तवाक्या-न्यालोच्येति गृह्यते । एवंविधं इदं विज्ञानं पूर्वोक्तसाक्षात्कारं संप्राप्याथ

---

श्रीभगवानपि गीतायामाह—भ गी ६ ३ २ ६६ २ ५८ १८ ६६ २ १४, २ ५२ १२ ८ ४ ३०, ४ ४० इत्यादौ ।

" श्रद्धान्विताया गुणान्विताय परापवादाद्विरताय नित्यम् ।
विशुद्धयोगाय बुधाय नित्यं क्रियावते च क्षमिणे हिताय ॥
विविक्तशीलाय विधिप्रियाय विवादहीनाय बहुश्रुताय ।
विजानते चैव न चाहितक्षमे दमे च शक्ताय शमे च देयम् ॥
एतैर्गुणैर्हीनतमे न देयमेतत्परं ब्रह्म विशुद्धमाहुः ।
न श्रेयसा योक्ष्यति तादृशे कृतं धर्मप्रवक्तारमपात्रदानात् ॥
पृथ्वीमिमां यद्यपि रत्नपूर्णां दद्यान्न देयन्त्विदमव्रताय ।
जितेन्द्रियायैतदसंशयं ते भवेत् प्रदेयं परमं नरेन्द्र ॥

—मोक्षधर्म-प ३१० ३५—३८

तथा भागवते ३ ३२ ३९-४२ इत्यप्यनुसंधेयम् ।

( १ ) यथात्ममानिता—पाठः ।

नहीह लाभोऽभ्यधिकोऽस्ति कश्चन
स्वरूपलाभात्स इतो हि नान्यतः ।
न देयमैन्द्रादपि राज्यतोऽधिकं
स्वरूपलाभं त्वपरीक्ष्य यत्नतः ॥ ७४ ॥

इति पार्थिवप्रकरणम् ।

तदैव सततो मुक्तो भवेत् । निरस्ताज्ञानतत्कार्यसंस्कारपरमानन्दानुभव-ब्रह्मात्मस्वरूपो भवतीत्यर्थः ॥ ७३ ॥

किमिति गुणविशेषवच्छिष्यपरीक्षणं गुरोः ? यस्मै कस्मैचिच्छिष्याय कस्माद्विद्या न दीयते ? तत्राह—नहीति ।

स्वरूपमात्मतत्त्वं लभ्यतेऽनेनेति स्वरूपलाभस्तत्त्वज्ञानं, तस्मादभ्यधिको लाभः कश्चन कोऽपीह देवमनुष्यादिभिन्नपरम्परायां नास्ति, "आत्मलाभान्न परं विद्यते"[1] इति स्मृतेः । स लाभः इत एव वेदान्तवाक्यान्नान्यतोऽन्य-स्माच्छास्त्रान्तरान्न भवति हि यस्मात्, तस्माद्यत्नतः शिष्यमपरीक्ष्य स्वरूप-लाभं तु ज्ञानं न देयम् । ऐन्द्रादपि राज्यतो राज्यादधिकमिति विशेषणेन "प्राणाय्याय वान्तेवासिने नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूयः"[2] इति श्रुतिं प्रमाणयति ॥ ७४ ॥

इति षोडशं पार्थिवप्रकरणम् ॥ १६ ॥

---

(१) आप ध १ २२ २ तुल्य—१६ ४४, १७ ४, ५ (२) छा. उ ३ ११ ६

## १७ *सम्यङ्मतिप्रकरणम्

आत्मा ज्ञेयः परो ह्यात्मा यस्मादन्यन्न विद्यते ।
सर्वज्ञः सर्वदृक् शुद्धस्तस्मै ज्ञेयात्मने नमः ॥ १ ॥

परपक्षनिराकरणमुखेनोक्तं मोक्षसाधनं ज्ञानं स्वप्रक्रिययाऽपि व्यक्तीकर्तुं प्रकरणान्तरमारभमाणो देवताभक्तेर्विद्याप्राप्त्यन्तरङ्गत्वं द्योतयन् प्रकरणप्रतिपाद्यार्थं नमस्कारव्याजेन संक्षिप्याह—आत्मा ज्ञेय इति ।

आत्मा स्वरूपं ज्ञेयः स्वरूपतोऽवधार्यः । किं घटादिवद्विषयत्वेन ? नेत्याह-परो ह्यात्मेति । हि यस्मादात्मा सर्वज्ञेयात्परो ज्ञेयत्वधर्मरहितः । तत्कुतः ? तत्राह—यस्मादन्यन्न विद्यत इति । यस्मादात्मनः स्वरूपादन्यत्परमार्थतः पृथग्भूतं, तद्धर्मो वा न विद्यते । तथा च रूपादिहीनतया चक्षुराद्यगोचरत्वात्, स्वसमानजातीयप्रत्यक्षव्यक्त्यन्तराभावाद्व्याप्तिग्रहाभावे सत्यनुमानार्थापत्तिग्राह्यत्वाभावात्, सदृशवस्त्वन्तराभावेनोपमानाग्राह्यत्वात्, षष्ठीजातिगुणक्रियादिधर्मराहित्येन शब्दागोचरत्वात्, ज्ञातुः स्वरूपत्वादेव नास्तीत्यभ्युपगन्तुमशक्यत्वात्, परिशेषाद्विषयभूतदेहेन्द्रियान्तःकरणप्रत्याख्यानेनान्विष्य तत्साक्षितयाऽविषयत्वेन स्वयंप्रकाश आत्मा ज्ञेय इत्यर्थः । एवं त्वपदार्थं परिशोध्य तस्य तत्पदार्थात्मकत्वं वाक्यार्थं कथयितुं तत्पदार्थमाह—सर्वज्ञ इति । सामान्यतः सर्वं जानातीति सर्वज्ञः । विशेषतः सर्वं पश्यतीति सर्वदृक् । सर्वज्ञत्वमुपलक्षणमुक्त्वा तस्य स्वरूपलक्षणमाह—शुद्ध इति । अनृतजडपरिच्छिन्नदुःखादिप्रपञ्चसंसर्गरहितः सत्यज्ञानानन्तानन्दरूप इत्यर्थः । वाक्यार्थं तत्त्वंपदार्थैक्यमाह—तस्मा इति । पूर्वोक्तप्रकारेण ज्ञेयश्चासावात्मा च ज्ञेयात्मा, तस्मै ज्ञेयात्मने—तस्मै सर्वज्ञत्वाद्युपल-

---

* पश्य १७. ३–४ श्लोकौ । ( १ ) पश्य—तै. उ. पृ. ५५ स्थां ३ टिप्पणीम् ।

पदवाक्यप्रमाणज्ञैर्दीपभूतैः प्रकाशितम् ।
ब्रह्म वेदरहस्यं यैस्तान्नित्यं प्रणतोऽस्म्यहम् ॥ २ ॥
यद्वाक्सूर्यांशुसंपातप्रनष्टध्वान्तकल्मषः ।
प्रणम्य तान् गुरून् वक्ष्ये ब्रह्मविद्याविनिश्चयम् ॥ ३ ॥

क्षिताय सत्यादिस्वरूपाय नम प्रह्वीभावोऽस्तु । तद्भेददृष्टिविलय एवेह नम शब्दार्थ ॥ १ ॥

देवताभक्तिवद्गुरुभक्तेरपि विद्याप्राप्त्यन्तरङ्गत्वम्—

" यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्था प्रकाशन्ते महात्मन ॥ "

इति श्रुतिसिद्ध द्योतयन् गुरुपरम्परा प्रणमति—पदवाक्येति ।

यैर्गुरुभिर्वेदरहस्य ब्रह्म प्रकाशित, तान्नित्य प्रणतोऽस्म्यहमिति सम्बन्ध । पदाना वाक्याना च शक्तितात्पर्यमर्यादया प्रमाणज्ञै पदवाक्यप्रमाणज्ञै । यद्वा—पदवाक्ये प्रसिद्धे, प्रमाणमनुमानादि, त ज्ञैरित्यर्थ । दीपभूतैज्ञ त्वेन सर्वार्थप्रकाशकैर्यैरिति सम्बन्ध ॥ २ ॥

सामान्येनाचार्यपरम्परा नमस्कृत्य विशेषेण स्वगुरुप्रणामपूर्वकमुद्देश्य प्रतिजानीत—यद्वागिति ।

ब्रह्मविद्याविनिश्चयो यस्मान्न्यायविशेषाद्भवति, त न्यायविशेष वक्ष्य इत्यर्थ । सुगममन्यत् ॥ ३ ॥

---

(१) 'शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषण न कुर्यात् —मु उ १ २ १२ भाष्ये, 'असम्प्रदायवित् सर्वशास्त्रविदपि मूर्खवदेव उपेक्षणीय । गीताभाष्ये १३ २ (२) श्वे उ ६ २३ (३) प्रमाणयति—इत्यपि पाठ ।

आत्मलाभात्परो नान्यो लाभः कश्चन विद्यते ।
यदर्था वेदवादाश्च स्मार्ताश्चापि तु याः क्रियाः ॥ ४ ॥
आत्मार्थोऽपि हि यो लाभः सुखायेष्टो विपर्ययः ।
आत्मलाभः परः प्रोक्तो नित्यत्वाद्ब्रह्मवेदिभिः ॥ ५ ॥

किमर्थं ब्रह्मविद्याविनिश्चयो वक्ष्यते तदाह—आत्मलाभादिति ।

आत्मलाभस्य परमत्वे प्रमाणं सूचयति—यदर्था इति । वेदवादा वेदवचनानि, स्मार्ताश्च वादाः स्मृतिवचनानि, साक्षाज्ज्ञानार्था वेदवादाः स्मृतिवादाश्च यदर्थाः । अपि तु याः क्रियाः कर्मपरवेदस्मृतिविहिताः, ताश्च चित्तशुद्धिपरम्परया यदर्थाः । तस्मादात्मलाभादिति सम्बन्धः ॥ ४ ॥

पुत्रादिलाभापेक्षया आत्मलाभस्य परमत्वं प्रामाणिकमित्युक्तमुपपादयति—आत्मार्थोऽपीति ।

योऽपि लाभः पुत्रधनादिविषयो लोके सुखायेष्टः, सोऽप्यात्मार्थ आत्मसुखार्थ इति हि प्रसिद्धमिति योजना । तर्हि पुत्रादिलाभेनैवात्मसुखसिद्धेः, किमित्यात्मज्ञानमात्मलाभायेष्टव्यं विशेषाभावादित्यत आह—विपर्यय इति । सुखविपर्ययः दुःखायापि स लाभः स्यात्, कदाचित्कस्यचित्पुत्रादेरेव दुःखहेतुत्वदर्शनादित्यर्थः । तस्माल्लाभान्तरापेक्षया आत्मलाभः परमो लाभ इति तदर्थं सर्वपरित्यागेनात्मज्ञानं सम्पादनीयमित्यभिप्रेत्याह—आत्मेति । विपर्ययप्रसङ्गस्तत्र नास्तीत्याह—नित्यत्वादिति । तथा च श्रुतिः—'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा । स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति'[1] इति ॥ ५ ॥

---

१ बृ. उ. १ ४. ८.

स्वयं लब्धस्वभावत्वाल्लाभस्तस्य न चान्यतः ।
अन्यापेक्षस्तु यो लाभः सोऽन्यदृष्टिसमुद्भवः ॥ ६ ॥
अन्यदृष्टिस्त्वविद्या स्यात्तन्नाशो मोक्ष उच्यते ।
ज्ञानेनैव तु सोऽपि स्याद्विरोधित्वान्न कर्मणा* ॥ ७ ॥

आत्मसुखलाभस्य नित्यत्वमुक्त साधयति—स्वयमिति ।

तस्यात्मनो लाभो न चान्यतोऽन्यनिमित्तको न भवति । कुत ? स्वय लब्धस्वभावत्वात् साधनसाध्यत्वाभावान्नित्यत्वमित्यर्थ । पुत्रादिलाभस्य साधनाधीनत्वेनानित्यत्व साधयति—अन्यापेक्ष इति । अन्यदृष्टे सकाशात् समुद्भवो यस्य स तथा । अन्याधीनस्य तदपगमेऽपगमादनित्यत्वमित्यर्थ ॥ ६ ॥

केयमन्यदृष्टि ? का वा तदुद्भवस्यान्यपुत्रादिलाभस्य अनित्यत्वे हानि ?— इत्यत आह—अन्यदृष्टिस्त्विति ।

अन्यस्मिन्ननात्मनि दृष्टि प्रतीतिर्यस्या सा अन्यदृष्टि , सा अविद्या भवतीत्यर्थ । ततश्चात्माविद्याकृतभ्रान्तिनिबन्धनत्वात्पुत्रादिलाभप्रतीत , तस्याश्च स्वप्नतुल्यत्वान्नित्यात्मप्रियहानि स्यादिति भाव । तथा चाविद्यानिवृत्तिमन्तरेणात्मस्वरूपनित्यसुखलाभाभावात् सा सपाद्येत्याह—तन्नाश इति । मोक्षो नित्यनिरतिशयपरमानन्दाविर्भावोऽज्ञानहानिलक्षण । तस्यास्युपायमाह—ज्ञानेनैवेति । सोऽप्यज्ञाननाशलक्षणो मोक्षो ज्ञानेनैव स्यात्, तस्यैवाज्ञानविरोधित्वात्, न कर्मणा, तस्याज्ञानविरोधित्वाभावात् । तस्मात्सर्वकर्मपरित्यागेनात्मज्ञान सर्वथा सपादनीयमेव मुमुक्षुणेत्यर्थ ॥ ७ ॥

---

* तुलय—१ ६ (१) लाभप्रीते —पाठ ।

कर्मकार्यस्त्वनित्यः स्यादविद्याकामकारणः ।
प्रमाणं वेद एवात्र ज्ञानस्याधिगमे स्मृतः ॥ ८ ॥
ज्ञानैकार्थपरत्वात्तु वाक्यमेकं ततो विदुः ।
एकत्वं ह्यात्मनो ज्ञेयं वाक्यार्थप्रतिपत्तितः ॥ ९ ॥

ननु विरोधाभावात् सकार्याविद्यानिवृत्तिरूपो मोक्षः कर्मणा मा भूत्, तथापि तेन नित्यपुरुषार्थो भविष्यति, अतः किं ज्ञानेन ?—इति । नेत्याह—कर्मकार्यस्त्विति ।

तत्र हेतुगर्भं विशेषणं—अविद्येति । मिथ्याप्रत्ययमूलरागप्रयुक्तकर्मसाध्यत्वादित्यर्थः । कर्मसाध्यं फलमनित्यं, ज्ञानसाध्यं तु नित्यमित्यत्र किं प्रमाणमिति चेत्, वेद एवेत्याह—प्रमाणमिति । "तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते"[1], "ब्रह्मविदाप्नोति परम्"[2], "तरति शोकमात्मवित्"[3] इत्यादिवेद एव कर्मसाध्यमनित्यं, ज्ञानसाध्यं नित्यं मोक्षरूपमित्यत्र ज्ञानस्य विवेकस्याधिगमे प्रमाणं विद्वद्भिः स्मृतमित्यर्थः ॥ ८ ॥

किंच वेदस्य सर्वस्याध्ययनविध्युपपादितत्वात्, अपुरुषार्थे पर्यवसानायोगात्, परमपुरुषार्थपर्यवसानायामैक्यज्ञानपरत्वमेष्टव्यं, ततो न कर्मसु तस्य महातात्पर्यं लभ्यत इत्यभिप्रेत्याह—ज्ञानैकार्थेति ।

ज्ञानमेवैकोऽर्थः प्रयोजनं परं प्रतिपाद्यं यस्य वेदस्य स तथा, तस्य भावस्तत्त्वं, तस्मात्तु वेदमेकं वाक्यं विदुः वाक्यप्रमाणकोविदा इति शेषः । किं तस्य ज्ञेयमित्यपेक्षायामाह—एकत्वं हीति । ततो ज्ञानादात्मन एकत्वमेव ज्ञेयमित्यन्वयः । हिशब्दोऽवधारणार्थः । ज्ञानप्रकारमाह—वाक्यार्थप्रतिपत्तित इति । "सत्यं ज्ञानमनन्तम्"[4] इत्याद्यवान्तरवाक्यार्थप्रतिपत्ति

(१) तुलय-बृ १८ ९७ नीकम् । (२) छा उ ८ १ ६ (३) तै उ २ १ (४) छा. उ ७ १. ३

**वाच्यभेदात्तु तद्भेदः कल्प्यो वाच्योऽपि तच्छ्रुतेः ।**
**त्रयं त्वेतत्ततः प्रोक्तं रूपं नाम च कर्म च ॥ १० ॥**

द्वारेण तत्त्वमस्यादिमहावाक्यैरात्मनो ब्रह्मैक्यं ज्ञेयमित्यर्थः । आत्मतत्त्वज्ञानस्यैव परमपुरुषार्थहेतुतायाः श्रुतत्वात्, कर्मकाण्डमपि तत्त्वज्ञानापेक्षितचित्तशुद्धिहेतुकर्मविधानद्वारा पारम्पर्येण परमपुरुषार्थसाधनभाव भजत इति युक्तमेकार्थपर्यवसानमैकवाक्यत्वं वेदवाक्यस्येति भाव ॥ ९ ॥

नन्वात्मनो ब्रह्मणश्चैकत्वज्ञानमनुपपन्न, तयोरपर्यायशब्दवाच्यत्वेन भेदादित्याशङ्क्य, नैव, अन्योन्याश्रयापत्ते —इत्याह—वाच्यभेदादिति ।

तद्भेदोऽपर्यायशब्दभेदो वाच्यभेदात्कल्प्यस्तथा, वाच्योऽपि तच्छ्रुतेरपर्यायशब्दभेदश्रवणाद्भिन्न कल्प्य । तथा च सिद्धे वाच्यजीवब्रह्मभेदे तद्वाचकशब्दयोरपर्यायत्वसिद्धि , तत्सिद्धावितरसिद्धि —इत्यन्योन्याश्रय स्यादित्यर्थ. । स्वल्पतो भेदकल्पनाया प्रमाणाभावादिति भाव. । भेदस्याप्रामाणिकत्वादेकत्वज्ञानमुपपन्नमित्युक्ते भेदस्यापि प्रमाणसिद्धत्वं पूर्ववादी शङ्कत—त्रय त्वेतदिति । " त्रय वा इद नाम रूप कर्म " इति श्रुत्या तत आत्मनोऽतिरिक्त रूप नाम च कर्म च प्रोक्त, अतोऽनैकत्वमेव वेदार्थ इत्यर्थ. । सिद्धान्ती दूषयति—असदेतदिति ( ११ श्लो ) । हि यस्मादेतत्त्रयमन्योन्येन कल्पित—अन्योन्यसापेक्षसिद्धिक, तस्मादसदित्यन्वय । अन्योन्याश्रयग्रस्ततया भेदस्य प्रमातुमशक्यतया प्रामाणिकत्वाभावाद्यथाकथंचिल्लोकसिद्धो मिथ्याभेद श्रुत्यानूद्यते केवलं वैराग्याय, अतो नाद्वैतज्ञानविरोधितेति भाव ।

अथवा—कथ सर्वस्य वेदस्यैकार्थज्ञानपरत्वेनैकवाक्यत्व नियन्तु शक्यत

---

(१) अन्योन्याश्रयापत्ति —इत्येव पाठ सर्वत्रोपलभ्यते । (२) बृ उ. १. ६.१.

अपुनरुक्तशब्दभेदवशात्तत्र तत्रार्थभेदस्य प्रतीयमानत्वात् ?—इति चेत्, सत्यम्, तथापि न तत्र तात्पर्यं युक्तं, प्रमाणयुक्तिबाधितत्वाद्द्वैतस्येत्यभिप्रेत्याह—वाच्यभेदादिति । वाच्यभेदे प्रामाणिके सति तद्विषयतात्पर्यवच्छब्दभेदादनेकवाक्यता सिध्यति, तथा तद्भेदो वाच्यभेदोऽपि तच्छ्रुतेर्वाचकशब्दभेदश्रुतेः श्रवणात्कल्प्य, प्रकारान्तरेण वाच्यभेदासिद्धेः । न हि शब्दाधीनोऽर्थतत्त्वनिश्चयः, आरोपितविषयेऽपि शब्दभेददर्शनात् । नाप्यर्थाधीनः शब्दनिश्चयः । एकस्मिन्नपि पुरुषे पिता भ्राता मातुलो जामाता पितृव्य इत्युपाधिभेदादपुनरुक्तशब्दभेददर्शनात्, न हि तत्र प्रतियोग्युपाधिभेदव्यतिरेकेण वस्तुभेदो विद्यते । तथा चानाद्यविद्याकल्पितानेकोपाधिभेदावच्छिन्नानेककर्त्रादिकारकभेदानुवादेन ज्ञानापेक्षितान्तःकरणशुद्धिसाधनकर्मविधिपरत्वात् कर्मकाण्डस्यात्मतत्त्वज्ञानवाक्यैकवाक्यत्वोपपत्तेः, निरतिशयानन्दात्यन्तिकदुःखनिवृत्तिफलस्य सर्वेषां स्वरसतोऽभिलापगोचरस्यात्मतत्त्वज्ञानादन्यतोऽसम्भवादविद्याविद्यावस्थोपाधिभेदेनाधिकारिभेदप्रयोगभेदयोश्चोपपत्ते, एकपुरुषापेक्षितैकपरमपुरुषार्थसाधनप्रकाशनैकवाक्यता वेदस्य युक्तेति भावः । एवं द्वैतस्याविद्याकल्पितत्वे युक्तिमभिधाय प्रमाणमभिधत्ते—त्रय त्विति । यतोऽयमनिरूपिताकारभेदः प्रपञ्चः, ततो हेतोरेतत्सर्वं दृश्यं रूपं नाम च कर्म चेति त्रयं राशीकृत्य श्रुत्या प्रोक्तमिति योजना । "त्रयं वा इदं नाम रूपं कर्म" इत्यस्मिन्ब्राह्मणे हेतूक्तिपूर्वकं शब्दविशेषाणां वाङ्मात्रत्वं, रूपविशेषाणां चक्षुर्मात्रत्वं, कर्मविशेषाणां शरीरमात्रत्वमिति विशेषप्रविलापनेन तत्सामान्यमात्रत्वमभिधाय तदेतत्त्रयं सदेकमयमात्मा, आत्मा एकः सन्नेतत्त्रयम्—इत्यैकात्म्यं सर्वस्य जगत उपसंहृतं, अतो न तत्त्वभेदोऽस्तीत्यर्थः ॥ १० ॥

---

(१) इत्युपाधिभेदव्यतिरेकेण—पाठः । (२) 'कल्पितानेक', कल्पितो ऽनेक'—इत्येव पाठो उपलभ्यते । (३) विद्यावस्था'—पाठः ।

*असदेतत्रयं तस्मादन्योन्येन हि कल्पितम् ।
कृतो वर्णो यथा शब्दाच्छ्रुतोऽन्यत्र धिया बहिः ॥ ११ ॥
दृष्टं चापि यथा रूपं बुद्धेः शब्दाय कल्पते ।
एवमेतज्जगत्सर्वं भ्रान्तिबुद्धिविकल्पितम् ॥ १२ ॥
असदेतत्ततो युक्तं सच्चिन्मात्रं न कल्पितम् ।
वेदश्चापि स एवाद्यो वेद्यं चान्यत्तु कल्पितम् ॥ १३ ॥

उपसंहरति—असदेतदिति ।

उक्तार्थमेतत् । अन्योन्यापेक्षयाऽवगम्यमानस्य मिथ्यात्वे दृष्टान्तमाह—कृत इति । शब्दाच्छ्रुतो वर्ण इन्द्रादिरूपविशेषः सहस्राक्षवज्रबाहुत्वादिः, धिया प्रत्यूह्य, अन्यत्र बहिः कुड्यादौ चित्ररूपेण कृतो यथा कल्पितो मिथ्येति योजना । नहि चित्रे दृश्यमेवंरूपमिन्द्रस्य वा भवति । तथा च मिथ्यार्थगोचरः शब्द इत्यर्थः ॥ ११ ॥

शब्दान्मिथ्यार्थकल्पनामुदाहृत्य मिथ्यार्थाच्छब्दकल्पनामुदाहरति—दृष्ट चापीति ।

भित्तिपटादौ दृष्ट देवतारूपं तथा तद्वदेव बुद्धेस्तद्दर्शनसंस्कृताया आगत्य शब्दाय शब्दव्यपदेशाय कल्पत इति योजना । दार्ष्टान्तिकमाह—एवमिति । एतत्सर्वं जगदेव यथादृष्टान्तमेव, भ्रान्तबुद्ध्या शुक्तौ रजतमिवात्मनि विविधं कल्पितं, न वस्तुसदस्तीत्यर्थः ॥ १२ ॥

जगतो मिथ्यात्वे फलितमाह—असदेतत्तत इति ।

सर्वं कल्पितं चेच्छून्यवादापत्तिरित्याशङ्का न कार्येत्याह—सच्चिदिति । निरधिष्ठानकल्पनानुपपत्तेः सर्वकल्पनास्पदं सच्चिन्मात्रं प्रत्यक्त्वेन कल्पितं

---

* तुलय—१७. १८. (१) यस्मात्—पाठ । (२) कृतो रूपा—पाठः । (३) पश्य—पृ २१६. ४ टिप्पणीम् । (४) प्रत्यक्त्वेन—इति अपपाठः एव ।

**येन वेत्ति स वेदः स्यात्स्वप्ने सर्वं तु मायया ।**
**येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते ॥ १४ ॥**

सर्वसाक्षित्वात्तस्य सर्वकल्पनायाः प्रागेव सिद्धत्वादित्यर्थः । वेदाचार्यादेरात्मतत्त्वप्रतिपत्तिहेतुत्वादकल्पितत्वमस्तीति कथं सच्चिन्मात्रमकल्पितमित्युच्यते तत्राह—वेदश्चापीति । स एवाद्यः पूर्वसिद्ध आत्मा वेदोपि वेदनहेतुः श्रुत्याचार्यरूपेण मायया प्रथते । अर्थप्रकाशनशक्तेरन्यत्र जडेऽसम्भवात् । न ह्यग्निगतप्रकाशनशक्तिव्यतिरेकेण दीपादेरपरा प्रकाशनशक्तिरस्ति । वेद्यं च तत्त्वं स एवाद्य इति सबन्ध । अन्यत्तु विशेषमात्रं कल्पितम् । तथाच कल्पितविशेषानुगतत्वेनात्मन एव बोधकत्वं, सर्वकल्पनापवादावधितया तस्यैव बोध्यत्वं चोपपद्यत इत्यर्थः ॥ १३ ॥

कथं स एवाद्यो वेद्यं वेत्याशङ्क्य स्वप्नदृष्टान्तेन व्युत्पादयति—येनेति ।

स्वप्ने स्थित आत्मा येन स्वाप्नं विषयजातं वेत्ति, स एव वेदः स्यात् । नहि स्वप्ने चिदात्मव्यतिरिक्तं भासकमस्ति, आदित्यादिज्योतिषां तदोपरमात्, स्वयंज्योतिष्ट्वश्रुतेश्च । यत्तु तत्र सर्वं वेद्यं, तदपि मायया स एव । नहि स्वप्ने बाह्यं विषयजातमस्ति, तत्रानवकाशात्, "न तत्र रथाः" इत्यादिश्रुतेश्च । तथाच स एवात्मा स्वसाक्ष्यमायाकृतोपाधिभेदादवच्छिन्नसदात्मना वेद्य, तदनुस्यूतचिदात्मना वेदनरूपश्चेति वेद्यवेदितृभावो मायिक इत्यर्थः । चक्षुरादीन्द्रियाणामुपरमात्स्वप्रभव आत्मा येन पश्यति रूपमुपलभते, तदेव चक्षुरिति योजना । स्वप्ने रूपाकारसंस्कृतमनोऽवस्थचिदविद्यात्मकं रूपं प्रकाशयन् पश्यतीत्युच्यते । एवं श्रोत्रादावप्यूह्यम् ॥ १४ ॥

---

(१) बृ. उ. ४. ३. १०.

येन स्वप्नगतो वक्ति सा वाग्घ्राणं तथैव च ।
रसनस्पर्शने चैव मनश्चान्यत्तथेन्द्रियम् ॥ १५ ॥
कल्प्योपाधिभिरेवैतद्भिन्नं ज्ञानमनेकधा ।
औधिभेदाद्यथा भेदो मणेरेकस्य जायते ॥ १६ ॥
जाग्रतश्च तथा भेदो ज्ञानस्यास्य विकल्पितः ।
बुद्धिस्थं व्याकरोत्यर्थं भ्रान्त्या तृष्णोद्भवक्रियः ॥ १७ ॥

येन स्वप्नगत इति ।
येन स्वप्नगतो जिघ्रति तद्घ्राणमित्यादि यथायोग योज्यम् ॥ १५ ॥
कथमेकरूप चैतन्य वेधनदकचक्षुरादिरूपेण भिद्यत तत्राह—कल्प्योपाधिभिरिति ।
स्वप्नकल्प्योपाधिभेदादनमवट ज्ञानमनेकधा भिन्नमित्यर्थः दृष्टान्तमाह—औधिभेदादिति । मणे स्फटिकाद । आधिभेदान्नीलपीताद्युपाधिभेदात् । तथा ज्ञानमेकमनेकधा जायत इत्यर्थ ॥ १६ ॥
यथा स्वप्ने निर्भेदस्य ज्ञानस्य कल्पितोपाधिभेदादशेषव्यवहारास्पदत्व दृष्ट, एव जागरितेऽप्यशेषव्यवहारास्पदत्व तस्योपपन्नमिति दार्ष्टान्तिकमाह—जाग्रतश्चेति ।
कथ चिद्रूपस्य ज्ञानस्यास्य जाग्रतो विकल्पितत्व तदाह—बुद्धिस्थमिति । आत्मा खल्वज्ञानकञ्चुक प्रथम बुद्धि परिकल्प्य, ततस्तत्कञ्चुक सन्, तदविवेकाद्भ्रान्त्या बुद्धिस्थमेवार्थं व्याकरोति स्वात्मगततया कल्पयन् व्यवहरति । ततश्च भ्रान्तिप्रयुक्ततृष्णाख्यकामोद्भूता क्रिया हानोपादानव्यवहाररूपा यस्य स तथा, अविद्याप्रत्युपस्थापितान्त करणपरिणामावस्थामवभासयस्तदविवेकादनेकरूपप्रपञ्चमात्मनि कल्पयन् व्यवहरतीत्यर्थ ॥ १७ ॥

---

( १ ) तुलय–१८ १२० ( २ ) यथा–पाठ । ( ३ ) जाग्रति–पाठ।

स्वप्ने तद्वत्प्रबोधे यो बहिश्चान्तस्तथैव च ।
आलेख्याध्ययने यद्वत्तदन्योन्यधियोद्भवम् ॥ १८ ॥
यदाऽयं कल्पयेद्भद्रं तत्कामः सन् यथाक्रतुः ।
यत्कामस्तत्क्रतुर्भूत्वा कृतं यत्तत्प्रपद्यते ॥ १९ ॥

स्वप्नदृष्टान्तसिद्धमनूद्य दार्ष्टान्तिकं निगमयत्यर्धेन—स्वप्ने तद्वदिति ।

यद्वत्स्वप्ने व्यवहारः, तद्वत्प्रबोधेऽपि व्यवहारः । यथैव स्वप्नेऽन्तर्बहिर्भावः (वा?), तथैव प्रबोधेऽप्यन्तर्बहिर्भाव इति योजना । अन्तर्बहिर्भावेन प्रथमानो व्यवहारः स्वप्नवत्कल्पित इत्युक्त्वा तत्रैव दृष्टान्तान्तरमाह—आलेख्येति । यथा आलेख्यापेक्षयाऽध्ययनं श्लोकादेः, अध्ययनापेक्षया च पत्रादौ पुनरालेखनं मिथ्यैव, सर्वगतानां निरवयवानां वर्णानां लेखनासंभवादित्यर्थः । एषाऽक्षरयोजना—आलेख्यं च अध्ययनं चालेख्याध्ययनं, तदुभयं यथाऽन्योन्यधियोद्भवमन्तर्बहिर्भावेन परस्परापेक्षबुद्धिजन्यं वर्णगताविशेषाकारेणानुभूतमपेक्ष्यान्तर्बुद्धौ संस्काररूपेणाधीयते, तदपेक्ष्य च बहिः शब्दव्यवहारायालिख्यत इत्यक्षरेषु द्वयोरन्योन्यापेक्षत्वेनालेख्याध्ययनयोरवस्तुत्वं यद्वत्, तद्वदात्मन्यप्यन्तर्बहिर्भावेन दृश्यमानः सर्वो व्यवहारो न वस्तुसन्निति ॥ १८ ॥

बुद्धिनिष्ठमर्थं व्याकुर्वन् "भ्रान्त्या तृष्णोद्भवमिव" (१७) इत्युक्तं प्रपञ्चयति—यदायमिति ।

अयमात्मा पूर्वभ्रान्तिसंस्कारवशाद्यदा बुद्धिकञ्चुकारूढः सन्नविद्यया भद्रं कल्पयेत्, तदा तत्कामः शोभनत्वेनाध्यस्तविषयमदेऽभिलाषवान् सन् यथाक्रतुर्यथाकामं कृतसंकल्पो भवति । क्रतुः संकल्पः, इदमहं साधयिष्य

(१) धियोद्भव—पाठः युक्ततरो भाति । (२) इत्युक्त—पाठः (३) पूर्व-भ्रान्ति—पाठः ।

अविद्याप्रभवं सर्वमसत्तस्मादिदं जगत् ।
तद्गता दृश्यते यस्मात्सुषुप्ते न च गृह्यते ॥ २० ॥
विद्याविद्ये श्रुतिप्रोक्ते एकत्वान्यधियौ हि नः ।
तस्मात्सर्वप्रयत्नेन शास्त्रे विद्या विधीयते ॥ २१ ॥

इत्यध्यवसायरूपः । ततश्च यत्कामः तत्क्रतुर्भूत्वा यत् कामसाधनं कर्म कृतं= तन्निष्पादितं—तत्—फलावस्थं प्रपद्यतं प्राप्नोति । पुनस्तत्संस्कारसचिवो भेदं परिकल्प्य कामक्रतुपूर्वकं कर्मानुष्ठाय फलभागित्येवमन्योन्यधिया हेतुफलात्मना परिकल्पितं संसारमनुभवतीत्यर्थः । तथाच श्रुतिः—"अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तथा क्रतुर्भवति यथा क्रतुर्भवति तत्कर्म कुरुते यत्कर्मकुरुते तदभिसंपद्यते" इति ॥ १९ ॥

उक्तं दृश्यमिथ्यात्वं सोपपत्तिकमुपसंहरति—अविद्याप्रभवमिति ।

तद्गता अविद्यागता यस्माद्दृश्यते, तदभावे सुषुप्ते न च नैव गृह्यते, तस्मात्सर्वमिदं जगदविद्याप्रभवं मिथ्याज्ञानविजृम्भित, असदपरमार्थमिति योजना ॥ २० ॥

तर्हि जगद्धेतुरविद्या कीदृशी ? तन्निवर्तिका विद्या वा कीदृशी ? केन वा विद्याविद्ये ज्ञायेते ? इत्याकाङ्क्षायामाह—विद्याविद्ये इति ।

एकत्वान्यधियौ विद्याविद्ये—ब्रह्मात्मैकत्वधीर्विद्या, तद्भेदधीरविद्या—इति स्वरूपोक्तिः । श्रुतिप्रोक्ते इति ज्ञापकोक्तिः । "अथ योऽन्या देवताम्" इति श्रुत्या भेदधियोऽविद्यात्वं लोकानुभवसिद्धभेदानुवादरूपतयोक्तम् । "किमु तद्ब्रह्मावेत्" इत्याक्षेपपुरःसरं "ब्रह्म वा इदमग्र आसीत्तदात्मा-

---

(१) बृ. उ. ४. ४. ७. (माध्यन्दिनपाठः) । तत्क्रतुर्भवति यत्क्रतुर्भवति—इति काण्व पाठः—बृ. उ. ४. ४. ५. (२) बृ. उ. १. ४. १० (३) किमु तद्ब्रह्मवित्—इत्येव पाठो पुस्तकेषूपलभ्यते, किन्तूपरितन एव पाठः प्रामाणिकः शुद्धश्च । पश्य—बृ. उ. १. ४. ९.

चित्ते ह्यादर्शवद्यस्माच्छुद्धे विद्या प्रकाशते ।
यमैर्नित्यैश्च यज्ञैश्च तपोभिस्तस्य शोधनम् ॥ २२ ॥
शारीरादि तपः कुर्यात्तद्विशुद्ध्यर्थमुत्तमम् ।
मनआदिसमाधानं तत्तद्देहविशोषणम् ॥ २३ ॥

नमेवावेदहं ब्रह्मास्मि " इति प्रभृत्या प्रमाणभूताऽप्रसिद्धार्थबोधिनी श्रुतिरेकत्वज्ञानस्य विद्यात्वं ज्ञापयति नोऽस्माकमित्यर्थः । यस्मादविद्यावद्विद्या लोकस्यानुभवसिद्धा न भवति, तस्मात्सर्वप्रयत्नेनाध्यारोपापवादप्रबन्धनिर्माणेन शास्त्रे विद्या विधीयते प्रतिपाद्यत इति मुमुक्षुः शास्त्रतत्परो भवेदित्यर्थः ॥ २१ ॥

शास्त्रे चेत्सर्वप्रयत्नेन विद्या व्युत्पाद्यते, किमिति तर्हि सर्वोऽपि शास्त्रे न प्रवर्तते, प्रवर्तमानो वा कथं विद्यां न प्राप्नोति ?—इत्यपेक्षायां चित्तशुद्ध्यभावादित्यभिप्रेत्याह—चित्ते हीति ।

तस्माच्चित्तशुद्धिः कर्तव्येति शेषः । तर्हि केरुपायैः चित्तशोधनमित्यपेक्षायामाह—यमैरिति । अहिंसाब्रह्मचर्यादयो यमाः, तैर्नित्यैः शौचादिभिर्नियमैरित्यर्थः । यज्ञैः स्वाश्रमविहितकर्मेरीश्वरसात्कृतैः तपोभिश्च तस्य चित्तस्य शोधनं कार्यमित्यर्थः ॥ २२ ॥

तपःशब्दार्थमाह—शारीरादीति ।

तस्य स्वरूपं भगवतोक्तम्—

" देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥

---

( १ ) नियमैस्तपो'—पाठो युक्ततरः । ( २ ) बृ. उ. १.४. १०. ( ३ ) पा. यो. सू. २.३०, ३२.; वि. पु. ६. ७. ३६–३७. याज्ञ–स्मृ–प्रायश्चित्तप्र. ३१३–३१४; भागवते ११.१९.३३–३४.; योगियाज्ञ-सं. १. ५०., २. १; पत्र पृ. ६.

"मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते" ॥ २४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते" ॥ इति ।

एतान्यपि सात्त्विकान्यनुष्ठेयानि, न राजसतामसानि । तत्र सात्त्विकतपोलक्षणम्—

"श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते" ॥ [2] इति ।

एतदुक्तम्—**उत्तममिति** । तद्विशुद्ध्यर्थं चित्तविशुद्ध्यर्थम् । मनआदीत्यादिपदाद्बाह्येन्द्रियनिग्रहः । समाधानं नैश्चल्यम् । तत्तत्रेत्यस्मिन्नर्थे तत्तच्छब्दः । तेषु तेष्वृतुषु देहविशोषणं शीतोष्णवर्षवातसहनेन कृशीकरणमित्यर्थः ॥ २३ ॥

एवमाराडुपकारकं तप उक्त्वा श्रवणादौ संनिपत्योपकारकं तपोविशेषं स्मृतिवचनपाठेनाह्—**मनसश्चेति** ।

---

(१) मोक्षधर्मे २५०. ४.; वनप. २६०. २५. (२) भ. गी. १७. १६–१७. (३) आरात्संनिपत्येति **पूर्वमीमांसा**परिभाषासञ्ज्ञे । यानि अङ्गानि साक्षात्, परम्परया वा विहितफलसाधनयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनि, तानि **सन्निपत्योपकारकाणि**। आत्मसमवेतापूर्वजनकानि **आराडुपकारकाणि** । सन्निपत्य—द्रव्यादिद्वारेण यागशरीरघटकीभूय, उपकारकाणि यागापूर्वोपयोगीनीत्यर्थः । आरात्—दूरे स्थित्वा यागशरीरमप्राप्येति यावत्, उपकारकाणि स्वापूर्वद्वारा यागापूर्वोपयोगीनीत्यर्थः । अत्र सन्निपत्य=साक्षात्; आरात्=परम्परया ।

दृष्टं जागरितं विद्यात्स्मृतं स्वप्नं तदेव तु ।
सुषुप्तं तदभावं च स्वमात्मानं परं पदम् ॥ २५ ॥
सुषुप्त्याख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः ।
स्वात्मबोधप्रदग्धं स्याद्बीजं दग्धं यथाभवम् ॥ २६ ॥

ऐकाग्र्यं श्रुत्युक्ते वस्तुनि मननद्वारा स्थिरीकरणम् । एतस्यावश्यकर्तव्यत्वाय स्तुतिः क्रियते—तज्ज्याय इति ॥ २४ ॥

एवमुक्तैः साधनैः संशुद्धचित्तः श्रवणादिपरः सन्नवस्थात्रयात्तत्साक्षिणं विविच्य वाक्याद्ब्रह्मात्मत्वेन जानीयादित्याह—दृष्टमिति ।

दृष्टं दर्शनं बाह्येन्द्रियैर्बाह्यार्थोपलम्भनं जागरितं विद्यात् । तदेव तु दृष्टशब्दवाच्यमेव स्मृतं संस्कारवशान्निद्रादशायां भातं स्वप्नं विद्यात् । तदभावं तयोर्दृष्टस्मृतयोरभावो यस्मिंस्तत्सुषुप्तं विद्यात् । एवं दृश्यत्रयं पृथक्कृत्य तत्साक्षिणं स्वं स्वरूपभूतमात्मानं परं पदं सत्यज्ञानादिलक्षणं ब्रह्माहमस्मीति विद्यादित्यर्थः ॥ २५ ॥

नन्ववस्थात्रयहेतावज्ञाने सति कथं तद्विविक्ततया प्रत्यगात्मनो ब्रह्मत्वमुपपद्यत इति तत्राह—सुषुप्त्याख्यमिति ।

तम इति विशेषणेनाज्ञानस्य भावरूपत्वमुच्यते । ततो बीजत्वमुपादानत्वमुपपद्यते । तदज्ञानं स्वात्मनः सम्यग्बोधाग्निना प्रकर्षेण निर्लेपं दग्धं स्यात् । यथा दग्धं बीजमभवं भवशून्यं कार्योत्पादकं न भवति, तथा तत्त्वज्ञानाग्निदग्धमज्ञानं पुनरवस्थाप्ररोहकरं न भवतीति युज्यते एव प्रतीचो ब्रह्मत्वमित्यर्थः ॥ २६ ॥

---

(१) तुल्य–१६.१८.

तदेवैकं त्रिधा ज्ञेयं मायाबीजं पुनः क्रमात् ।
मायाव्यात्माऽविकारोऽपि बहुधैको जलार्कवत् ॥ २७ ॥

अज्ञानस्यावस्थाबीजत्वमुक्तमुपपादयन्नज्ञाननिवृत्त्यैव सर्वसंसारोपाधिनिवृत्तिः, न यत्नान्तरसाध्यत्वं दर्शयति—तदेवैकमिति ।

तदेवैकं मायाख्यं बीजं त्रिधा भिन्नं क्रमात्सुषुप्त्यादिक्रमेणेत्यर्थः । पुनरित्यत्र वीप्सा द्रष्टव्या । सुषुप्तिमारभ्य जागरितपर्यन्तं, तदारभ्य सुषुप्तिपर्यन्तमहस्त्रिधा विक्रियत इत्यर्थः । एतदुक्तं भवति—चिन्मात्राश्रयविषयमक्रमवाज्ञानमनाद्यनिर्वचनीयमनेककार्यविक्षेपसंस्कारोपेतं चैतन्याभासरचितं स्वाश्रयं आत्मन्यध्यात्माधिदैवतभेदेन प्राज्ञेश्वरोपाधिविशिष्टसुषुप्तिप्रलयावस्थाकारं जायते । तथा तैजसहिरण्यगर्भोपाधिसंभिन्नस्वप्नसूक्ष्मवस्थात्मकं भवति । तथा पुनर्विश्ववैश्वानरोपाधिरचितजाग्रत्स्थित्यवस्थारूपमापद्यते । तत्रापि देवतिर्यङ्मनुष्यस्थावरादिभेदेन नानाविधशरीरेन्द्रियान्तःकरणोपाध्याकारं सत् प्रत्यग्ब्रह्मचिदात्मन्यनन्तजीवभेदव्यवहारनिर्वाहकं भवति । यथैकं वटादिबीजं मृदाश्रितं सत् तस्यामेव मृदि अङ्कुरकाण्डविटपशाखापत्रपुष्पफलादिभावमापद्य पुनर्बीजभावं चापद्यते, तथेदमपीति द्रष्टव्यम् । तदेव वृक्षाकारं वस्तु मूलदाहे सति तत्रैव मृद्भावमापद्य पुनर्न भवति यथा, तथा संसारवृक्षमूलाज्ञानस्य तत्त्वज्ञानाग्निना दाहे स्वाश्रयचिदात्मना विलीनत्वात्पुनर्न दर्शनयोग्यो भवति संसार इत्यज्ञानदाहायैव तत्त्वज्ञाने यतितव्यमिति । तदेवैकं त्रिधेत्युक्ते तमोबीजस्य स्वातन्त्र्येण प्रवृत्तिशङ्का स्यात्, तथा सति सांख्यसिद्धान्तापात इत्यतस्तमसोऽपेक्षितमाश्रयं दर्शयति—मायावीति । आत्मा निरुपचरितव्याप्तिमान् स्वप्रकाशचिदेकरसो मायावी—मायादिशब्दवाच्याज्ञानाश्रय इत्यर्थः । मायाश्रयश्चेदात्मा, तर्हि तस्य मायाविक्षिप्तानन्तोपाधिष्वनेकधा विक्षिप्यमाणस्य कथं कूटस्थत्वमित्याशङ्क्य दृष्टान्तेन प्रत्याचष्टे—अविकार इति । एक एवात्मा

वीजं चैकं यथा भिन्नं प्राणस्वप्नादिभिस्तथा ।
स्वप्नजाग्रच्छरीरेषु तद्वदात्मा जलेन्दुवत् ॥ २८ ॥
मायाहस्तिनमारुह्य मायाव्येको यथा व्रजेत् ।
आगच्छंस्तद्वदेवात्मा प्राणस्वप्नादिगोचरः ॥ २९ ॥

स्वगतविकाररहितोऽपि बहुधा विभाव्यमानो भवति जलार्कवत् । यथैक एवार्को जलभेदोपाधिष्वनेकधा विभाव्यमानोऽपि नानेको भवति, न वा जलोपाधिविकारेण विक्रियते, तथाऽयमपीत्यर्थः ॥ २७ ॥

उक्तमेव दृष्टान्तदार्ष्टान्तिकरूपं प्रपञ्चयति—बीजं चेति ।

प्राण इत्यव्याकृतावस्थोक्तिः । स्वप्नादिभिरिति जाग्रदवस्था, मूर्छावस्था च गृह्यते । यथैकमविद्यामायाख्यं बीजमव्याकृताद्यवस्थाभेदेन भिन्नं, तथा स्वप्नजाग्रच्छरीरेषु समष्टिव्यष्टिस्थूलसूक्ष्मशरीरेषु जलेन्दुवच्चिदाभासोऽपि भिन्नो भवति । तत्र तदधिष्ठानभूतश्चिदात्मा चोपाधिगताभासाविवेकात् तद्वद्भिन्नो विभाव्यते—तैजसहिरण्यगर्भविश्ववैश्वानरादिभेदेन प्रकाशत इत्यर्थः ॥ २८ ॥

ननु यद्यात्मनो मायाकल्पितरूपाधिषु बहुत्वं, तर्हि तत्र व्यापारवत्त्वमपि स्यादिति कथं कूटस्थतेत्याशङ्क्य दृष्टान्तेन निराकरोति—मायाहस्तिनमिति ।

यथैव एको मायावी स्वमायानिर्मितं हस्तिनमारुह्य उद्दिष्टदेशमागच्छंश्च भवति, गमनागमनं आचरन्निव भासमानोऽप्यचल एव । तद्वत्तथैवात्मा प्राणस्वप्नादिगतत्वेन विभाव्यमानोऽप्यचलः कूटस्थ एवेत्यर्थः ॥२९॥

(१) गोऽचर —इति टीकानुसारी पाठः (२) तुल्य—तै उ पृ ९२ प्रथमटिप्पणीम् ।

न हस्ती न तदारूढो मायाव्यन्यो यथा स्थितः ।
न प्राणादि न तद्द्रष्टा तथा ज्ञोऽन्यः सदाद्दशिः ॥ ३० ॥
अबद्धचक्षुषो नास्ति माया मायाविनोऽपि वा ।
बद्धाक्षस्यैव सा मायाऽमायाव्येव ततो भवेत् ॥ ३१ ॥

प्राणाद्युपाधिसम्बन्धमात्मनोऽङ्गीकृत्योक्तम्, इदानीं सोऽपि नास्ति वस्तुत इत्याह—न हस्तीति ।

निगदव्याख्यात पद्यम् ॥ ३० ॥

वस्तुत प्राणाद्युपाधिसम्बन्धाभावेऽपि मायासम्बन्धोऽपरिहार्य इत्यत आह—अबद्धेति ।

न बद्ध चक्षुर्यस्य सोऽबद्धचक्षुस्तस्य गौणिकस्य यथा माया नास्ति, मायाविनोऽपि तथा चक्षुर्बन्धाभावान्माया नास्ति। वाशब्द इवार्थे । अपिशब्दाद्वस्तुतत्त्वनिश्चयादपि मायावी न व्यामुह्यतीत्यर्थ । व्यतिरेकमुखेनान्वयमाह—बद्धाक्षस्यैवेति । सा माया बद्धाक्षस्यैव भयहेतुहस्त्यादिरूपा भासत इत्यर्थ । ततस्तस्मादमायावी एव मायोपलक्षित एव भवेत्सुमान्मायावार इत्यर्थ । अयमेव श्लोको दार्ष्टान्तिकेऽपि योज्य —अबद्धचक्षुषो मायानावृतचित्स्वभावस्य मायाविनोऽपि मायाविस्त्वेन विभाव्यमानस्यापि माया नास्ति । व्यामोहहेतुर्हि माया, सा अहमस्मि परं ब्रह्मेति प्रकाशमाने आत्मनि विरोधादेव न भवतीत्यर्थ । वाशब्दो लोकप्रसिद्धमायानिदर्शनार्थ । तथा च ज्ञानावस्थायां कदाचित्प्राणाद्याकारा माया पश्यन्नप्यज्ञानावस्थायामिव न व्यामुह्यति, किंतु सुषुप्तवन्निर्विकार एव भवतीत्यर्थ । समानमन्यत् ॥ ३१ ॥

---

(१) तस्मा मायाव्येव—पाठ । टीकासमत स एवेति भाति ।

साक्षादेवै स विज्ञेयः साक्षादात्मेति च श्रुतेः ।
भिद्यते हृदयग्रन्थिर्न चेदित्यादितः श्रुतेः ॥ ३२ ॥
अशब्दादित्वतो नास्य ग्रहणं चेन्द्रियैर्भवेत् ।
सुखादिभ्यस्तथान्यत्वाद्बुध्या वाऽपि कथं भवेत् ॥ ३३ ॥
अदृश्योऽपि यथा राहुश्चन्द्रे बिम्बं यथाऽम्भसि ।
सर्वगोऽपि तथैवाऽऽत्मा बुद्धावेव स गृह्यते ॥ ३४ ॥

तस्मात्साक्षाद्ब्रह्मात्मज्ञानादमायावी मायातत्कार्यसम्बन्धविनिर्मुक्तो भवतीत्ययमर्थः श्रुतिसिद्धः श्रद्धेयो मुमुक्षुणेत्याह—साक्षादेव इति ।

स सर्वविकारसाक्षी कूटस्थ आत्मा साक्षादेव 'विज्ञानमानन्दं ब्रह्म' इत्युक्तलक्षणो विज्ञेयः । "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इति ब्रह्मात्मैकत्वश्रुतेरित्यर्थः । एवं विज्ञाने लाभं, अविज्ञाने हानिं च श्रुत्या दर्शयति—भिद्यते इति । "न चेदिहावेदीन्महती विनष्टिः" इति । 'आदितः' इत्यादिशब्दात् "एकधैवानुद्रष्टव्यम्", "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिश्रुतयो गृह्यन्ते ॥ ३२ ॥

साक्षादात्मविज्ञानमुक्तमाक्षिपति—अशब्दादित्वत इति ।

बाह्यान्तःकरणाग्राह्यत्वादात्मनः कथं साक्षाद्विज्ञानं स्यादित्यर्थः ॥३३॥

परिहरति—अदृश्योऽपीति ।

यथा स्वरूपेणादृश्योऽपि राहुश्चन्द्रे चन्द्रमण्डले उपरक्तो दृश्यते, यथा वाऽम्भसि जले चन्द्रादेर्बिम्बं दृश्यते, तथैव चक्षुराद्यगोचरोऽपि स परमात्मा सर्वगोऽपि सर्वत्र वर्तमानोऽपि तत्त्वमस्यादिमहावाक्योत्थबुद्धावेव प्रतिबिम्बितः सन् गृह्यते । तत्र प्रतिबिम्बिततया स्वतःस्फुरणमेव ग्रहणं, न

---

(१) साक्षादेव—पाठ (२) बृ उ ३ ४ २७ (३) मु उ २ २ ९
(४) के उ १३ (५) बृ उ ४ ४ २० (६) बृ उ ४ ४ १९

भानोर्बिम्बं यथा चौष्ण्यं जले दृष्टं न चाऽम्भसः ।
बुद्धौ बोधो न तद्धर्मस्तथैव स्याद्विधर्मतः ॥ ३५ ॥
चक्षुर्युक्ता धियो वृत्तिर्या तां पश्यन्नलुप्तदृक् ।
दृष्टेर्द्रष्टा भवेदात्मा श्रुतेः श्रोता तथा भवेत् ॥ ३६ ॥
केवलां मनसो वृत्तिं पश्यन् मन्ता मतेरजः ।
विज्ञाताऽलुप्तशक्तित्वात्तथा शास्त्रं न हीत्यतः ॥ ३७ ॥

विपर्याभाव इत्यर्थः । शास्त्रैकगम्यस्यापि प्रत्यक्षत्वे राहुदृष्टान्त । सर्वसन्निहिततया भासमानस्य सर्वत्र यथावदस्फुरतोऽप्युपाधिविशेष यथावत्स्फुरण प्रतिबिम्बदृष्टान्त इति विवेकः ॥ ३४ ॥

बुद्धौ बोधात्मा गृह्यत चेद्बुद्धिधर्मो बोध इति शङ्का दृष्टान्तेन प्रत्याचष्टे—भानोरिति ।

यथा जले दृष्ट बिम्बमौष्ण्य च भानोरेव, न चाऽम्भसो जलस्य धर्म, तस्य शैत्यस्वाभाव्यात्, तथैव बुद्धौ स्फुरन् बोधो न बुद्धिधर्म स्यात् । कुत ? विधर्मतो विपरीतधर्मतो बुद्धेर्जाड्यधर्मत्वनिश्चयादित्यर्थः ॥ ३५ ॥

न केवल शास्त्रीयबुद्धावेव चिद्धातु परमात्मा स्फुरति, किन्तु लौकिकीष्वपि विषयाकारबुद्धिवृत्तिष्वात्मा स्वतोऽपरोक्ष. साक्षितया स्फुरतीत्याह—चक्षुरिति ।

चक्षुर्द्वारिका रूपाकारा या धियो वृत्तिस्ता पश्यन्नवभासयन्नात्माऽलुप्तदगकुण्ठितज्ञानशक्तिर्दृष्टेर्द्रष्टा भवत । एवमुत्तरत्रापि योज्यम् ॥ ३६ ॥

केवलामिति ।

चक्षुरादिद्वारा बहिरप्रवृत्तामन्तरेव विषयाकारामित्यर्थ. । अजो विकाररहित इत्यर्थ । विज्ञाता अलुप्तशक्तित्वात्—अलुप्तचिच्छक्तित्वादित्यर्थ ।

(१) तथा श्रुते —पाठ (२) बोद्धात्मा—पाठ

ध्यायतीत्यविकारित्वं तथा लेलायतीत्यपि ।
अत्र स्तेनेति शुद्धत्वं तथाऽनन्वागतं श्रुतेः ॥ ३८ ॥
शक्त्यलोपात्सुषुप्ते ज्ञस्तथा बोधेऽविकारतः ।
ज्ञेयस्यैव विशेषस्तु यत्र वेति श्रुतेर्वचः ॥ ३९ ॥

अलुप्तशक्तित्वे श्रुतिमुदाहरति—तथा शास्त्रमिति । एतदित्यस्मिन्नर्थे 'अत'-शब्द, तसे सार्वविभक्तिकत्वाङ्गीकारात् । सप्तम्यर्थेऽयं तसिरिति केचित् । "नहि द्रष्टुर्दृष्टे"." इत्यारभ्य "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इतिश्रुतेरित्यर्थः । दृष्टेर्द्रष्टेत्यादौ च "न दृष्टेर्द्रष्टारं पश्येर्न श्रुते. श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः । एष त आत्मा सर्वान्तरः" इति श्रुतिरुदाहार्या ॥ ३७ ॥

द्रष्टृत्वादिव्यपदेशाद्विकारित्वाशुद्धत्वप्रसक्तिमाशङ्क्याह—ध्यायतीति ।
श्रुतावित्रशब्दाद्ध्यानचलनयोराभासत्वमुच्यते । अतोऽविकारित्वं सिद्ध-मित्यर्थः । "अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा" इति, "अन-न्वागतं पुण्येनानन्वागतं पापेन" इति च श्रुते शुद्धत्वं सिद्धमित्यर्थः ॥३८॥

ननु सुषुप्ते ज्ञानाभावात्, जाग्रत्स्वप्नयोश्च तद्भावात्, आत्मनः कथ-मविकारित्वमित्यत आह—शक्त्यलोपादिति ।

सुषुप्तेऽप्यात्मा ज्ञ एव शक्त्यलोपादिति योजना । "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति" इत्यादिश्रुतेरित्यर्थः । तथा बोधे बोधदशाया जाग्र-त्स्वप्नयोरिति यावत् । ज्ञो ज्ञानस्वरूप एवात्मा निरवयवत्वेनाविकारतो विका-रानुपपत्तेरित्यर्थः । अवस्थात्रयेऽपि निर्विशेषचिद्रूपश्चेदात्मा, कथं तर्हि नाज्ञा-सिषमिति सुषुप्तिपरामर्शः, बोधावस्थायां च कथं जानामीत्यनुभव इत्याशङ्क्य

---

(१) बृ. उ. ४. ३ २३–३०. (२) बृ. उ. ३ ४. २. (३) बृ उ ४. ३. २२. (४) 'विद्यात्मा—पाठ

व्यवधानाद्धि पारोक्ष्यं लोकदृष्टेरनात्मनः ।
दृष्टेरात्मस्वरूपत्वात्प्रत्यक्षं ब्रह्म तत्स्मृतम्[1] ॥ ४० ॥
न हि दीपान्तरापेक्षा यद्वद्दीपप्रकाशने ।
बोधस्यात्मस्वरूपत्वान्न बोधोऽन्यस्तथेष्यते ॥ ४१ ॥
विषयत्वं विकारित्वं नानात्वं वा न हीष्यते ।
न हेयो नाप्युपादेय आत्मा नान्येन वा ततः ॥ ४२ ॥

विषयोपरमानुपरमोपाधिनिबन्धनं तदुभयं, न स्वरूपनिबन्धनं, तथैव श्रुत्योक्तत्वादित्याह—ज्ञेयस्येति । "यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्"[2] इत्यादिका, "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्"[3] इत्यादिका चोदाहरणम् ॥ ३९ ॥

एवं नित्यचैतन्यस्वरूपत्वान्नित्यापरोक्षो निर्विकारश्चात्मेत्युक्तं प्रपञ्चयति श्लोकत्रयेण—व्यवधानाद्धीति ।

अनात्मनो घटादेर्विषयस्य ग्राहिकाया लोकदृष्टेस्तद्ग्राहकचक्षुरादिदृष्टेर्देशतः कालतो वा व्यवधानात्संनिकर्षात् पारोक्ष्यं हि प्रसिद्धमित्यर्थः । न तथाऽऽत्मनो दृष्टिव्यवधानमस्ति दृष्टेरात्मस्वरूपत्वात्, आत्मन एव ब्रह्मत्वात्, तद्ब्रह्म स्वत एव सदा प्रत्यक्षं स्मृतं ब्रह्मविद्भिरिति योजना ॥४०॥

स्वरूपप्रकाशस्यानन्यापेक्षत्वं दृष्टान्तेन स्फुटयति—नहीति ।

स्फुटम् ॥ ४१ ॥

एवमपरोक्षत्वं विशदीकृत्याविकारित्वं विशदीकुर्वन्नात्मनो निर्विशेषत्वमाह—विषयत्वमिति ।

न हीष्यते श्रुतिविरोधादिति शेषः । अन्यस्यासत्त्वाज्जडत्वाच्चेति हेतुरनुसंधेयः । वाशब्दात् स्वेनापीत्यर्थः ॥ ४२ ॥

---

(१) यत्स्मृतम्—पा (२) बृ उ ४ ३ ३१ (३) बृ उ ४ ५ १५.

सबाह्याभ्यन्तरोऽजीर्णो जन्ममृत्युजरातिगः ।
अहमात्मेति यो वेत्ति कुतो न्वेव बिभेति सः ॥ ४३ ॥
प्रागेवैतद्विधेः कर्म वर्णित्वादेरपोहनात् ।
तदस्थूलादिशास्त्रेभ्यस्तत्त्वमेवेति निश्चयात् ॥ ४४ ॥
पूर्वदेहपरित्यागे जात्यादीनां प्रहाणतः ।
देहस्यैव तु जात्यादिस्तस्याप्येवं ह्यनात्मता ॥ ४५ ॥

नन्वेवमपि कुत आत्मनो निर्विकारत्वं नरकपातादिभयदर्शनादित्याशङ्क्याह—सबाह्याभ्यन्तर इति।

सम्यक्पदार्थशोधनपूर्वकं य आत्मतत्त्वं जानाति, स कुतो न्वेव बिभेति, भयहेतोर्द्वितीयस्य बाधितत्वादित्यर्थः ॥ ४३ ॥

तथापि यावज्जीवादिश्रुतिविहितत्वात्कर्मणां, तदकरणे प्रत्यवायभयं विदुषोऽप्यस्तीति तत्परिहारायानुष्ठानं स्यादिति चेन्नेत्याह—प्रागेवेति ।

अस्थूलादिशास्त्रेभ्यो वर्णित्वादेः कर्माधिकारहेतोरपोहनात्, तत्त्वमेवेति वाक्येन ब्रह्मस्वरूपत्वनिश्चयात्, एतद्विधेरेतदात्मतत्त्वविधानात्प्रतिपादनात्प्रागेव पूर्वमेव तथावज्जीवादिशास्त्रविहितं कर्म, नोर्ध्वमिति योजना । अनधिकारिणोऽकरणे प्रत्यवायासंभवान्नानुष्ठानप्राप्तिरिति भावः ॥ ४४ ॥

आत्मनोऽभ्यासं विना न वर्णित्वाद्यस्तीत्यत्र युक्तिमाह—पूर्वेति ।

देहपरित्यागे तदनुरक्तजातेरपि परित्यागादागमापायित्वेन न जात्यादेरात्मधर्मत्वं, किंतु देहस्यैव जात्यादिर्धर्मः । तर्हि देह एवात्मास्त्वित्यत आह—तस्यापीति । एवमागमापायित्वादेव देहस्याप्यनात्मतेत्यर्थः । देहस्य जात्यादेश्च वर्णित्वादिना प्रकारेण कर्माधिकारहेतोरभावादात्मनो न स्वभावतः कर्मकर्तृत्वमुपपद्यत इति भावः ॥ ४५ ॥

---

(१) तुलय–बृ. उ. १. ४. २.

ममाहं चेत्यतोऽविद्या शरीरादिष्वनात्मसु ।
आत्मज्ञानेन हेया स्यादसुराणामिति श्रुतेः ॥ ४६ ॥
दशाहाशौचकार्याणां पारिव्राज्ये निवर्तनम् ।
यथा ज्ञानस्य संप्राप्तौ तद्वज्जात्यादिकर्मणाम् ॥ ४७ ॥
यत्कामस्तत्क्रतुर्भूत्वा कृतं त्वज्ञः मपद्यते ।
यदा स्वात्मदृशः कामाः प्रमुच्यन्तेऽमृतस्तदा ॥ ४८ ॥

शरीरादिष्वात्मात्मीयाभिमानस्य प्रसिद्धत्वेन हेयत्वायोगमाशङ्क्याह—ममाहमिति ।

यत आत्मन्यागमापायाभ्यामनात्मत्वं देहादेर्निश्चितं, अतो हेतोः शरीरादिष्वनात्मसु ममाहं चेत्यभिमानोऽविद्या मिथ्याप्रत्ययः, सा आत्मज्ञानेनात्मतत्त्वब्रह्मात्मानुसन्धानेन हेया स्याद्बाध्या स्यात् । देहात्मदृष्टेरासुरत्वेन निन्दाश्रुतेश्चेत्याह—असुराणामिति । " असुराणां ह्येषोपनिषत् " इति श्रुतेरित्यर्थः ॥ ४६ ॥

तत्त्वज्ञानादूर्ध्वं न कर्म, न वा तत्प्रयोजकं जात्याद्यात्मनोऽस्तीत्येतद्दृष्टान्तेन साधयति—दशाहेति ।

पारिव्राज्ये सति सपिण्डताभिमानाभावात् संन्यासिनो यथाऽऽशौचादेरननुष्ठेयता, तथा ब्रह्मात्मज्ञानस्य संप्राप्तौ सत्यां जात्याद्यभिमानाभावाद्विदुषः कर्मानुष्ठानाभाव इत्यर्थः ॥ ४७ ॥

यस्मादेवमात्मनो ब्रह्मात्मत्वाज्ञानमूलो देहाद्यध्यासनिबन्धनः संसारः, तस्मात्तत्त्वज्ञानात्प्राक् कामादियुक्तो धर्माधर्मद्वारा संसरति । ब्रह्मात्मज्ञाने च सति कामादेरभावान्मुक्तो भवेदित्याह—यत्काम इति ।

---

( १ ) तुल्य—१७. १६. ( २ ) छां. उ. ८. ८. ५.

आत्मरूपविधेः कार्यं क्रियादिभ्यो निवर्तनम् ॥
न साध्यं साधनं वाऽऽत्मा नित्यतृप्तेः स्मृतेर्मतः ॥ ४९ ॥
उत्पाद्याप्यविकार्याणि संस्कार्यं च क्रियाफलम् ।
नातोऽन्यत्कर्मणा कार्यं त्यजेत्तस्मात्ससाधनम् ॥ ५० ॥

स्वे स्वरूपे ब्रह्मण्यवात्मदृष्टिर्यस्य स स्वात्मदृक्, तस्य स्वात्मदृश इति विग्रहः ।

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवति[3] ॥"

इति श्रुतेः हृदय्याः कामाः हृदयाध्यासबाधनेन बाधिताः सन्तो यदा प्रकर्षेण मुच्यन्ते, तदा प्रवृत्तिबीजाभावात्स्वात्मस्थ आत्माऽमृतो मुक्तसंसारबन्धनो भवतीत्यर्थः ॥ ४८ ॥

"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति[4]", "नित्यतृप्तो निराश्रयः" इत्यादिश्रुतेरात्मनो नित्यतृप्तत्वावगमात्, तस्य साध्यसाधनविलक्षणत्वेन स्वतः क्रियादिसंस्पर्शित्वाभावादध्यासमूलस्य क्रियातत्कारकयोगस्येति निश्चित्य, आत्मतत्त्वावबोधनेन क्रियादि त्याज्यमित्याह—आत्मरूपेति ।

विधिर्विधानं तत्स्वरूपावधारणम् ॥ ४९ ॥

यद्यपि विज्ञातात्मतत्त्वस्य क्रियाहेत्वभावात्तदभावः, तथापि जिज्ञासोर्मुमुक्षोर्मोक्षाय क्रियानुष्ठानं स्यादित्याशङ्क्य मोक्षस्य क्रियाफलविलक्षणत्वान्न तस्यापि क्रियासंभव इत्याह—उत्पाद्येति ।

ससाधनं जायापत्यवित्तशिखायज्ञोपवीतादिसाधनसहितं कर्म विधि-

---

(१) तृप्तत्वं—पाठ (२) भ. गी. ४. २० (३) बृ. उ. ४. ४. ७
(४) बृ. उ. ४. ३. ३२ (५) ? (६) तुल्य—मत्प्र. वाक्य ४४

तापान्तत्वादनित्यत्वादात्मार्थत्वाच्च या बहिः ।
संहृत्यात्मनि तां प्रीतिं सत्यार्थी गुरुमाश्रयेत् ॥ ५१ ॥
शान्तं प्राज्ञं तथा मुक्तं निष्क्रियं ब्रह्मणि स्थितम् ।
श्रुतेराचार्यवान्वेद तद्विद्धीति स्मृतेस्तथा ॥ ५२ ॥

लक्षणं त्यजेन्मुमुक्षुरिति शेषः। कृतकस्यानित्यत्वात्, मोक्षस्य च नित्यात्मस्वरूपावस्थानरूपत्वान्न मुमुक्षोरपि कर्मणा कृत्यमस्तीति भावः ॥ ५० ॥

किं ससाधनकर्मत्यागमात्रेण मुक्तिसिद्धिः ? किं वाऽन्यत्किमपि कृत्यम् ?—इत्यपेक्षायामात्मतत्त्वज्ञानाय गुरूपसत्तिः कर्तव्येत्याह—तापान्तेति। यद्वा—यस्मात्सर्वकर्मनिबन्धना प्रीतिरनित्या दुःखान्ता स्वार्थप्रयुक्ता च, तस्मात्तन्निमित्तां प्रीतिमनात्मविषयामात्मन्येवोपसंहृत्य नित्यपुरुषार्थी गुरुं संश्रयेतेति मुमुक्षुं शिक्षयति—तापान्तत्वादिति।

या बहिरात्मनोऽन्यत्र जायापुत्रादौ प्रीतिः, तां प्रीतिमात्मन्युपसंहृत्यात्मसात्कृत्वेत्यर्थः ॥ ५१ ॥

उपगन्तव्यं गुरुं विशिनष्टि—शान्तमिति।

शान्तमक्षुब्धचित्तं, प्राज्ञं मेधाविनं, यथा परित्यक्तबन्धसजातीयेन पुनर्बद्धो न भवति तथा मुक्तं निष्किञ्चनमित्यर्थः, निष्क्रियमैहिकामुष्मिकार्थप्रवृत्तिरहितं, ब्रह्मणि स्थितं स्वस्वरूपानन्दानुभवेन सर्वत्रोदासीनमित्यर्थः । गुरोराश्रयणीयत्वे प्रमाणमाह—श्रुतेरिति। "आचार्यवान्पुरुषो वेद" इति च श्रुतेः,

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" ॥

इति स्मृतेश्चेत्यर्थः ॥ ५२ ॥

---

(१) बन्धो—पाठः (२) छा. उ. ६.१४.२. पश्य पृ. ८ (३) भ. गी. ४.३४.

स गुरुस्तारयेद्युक्तं शिष्यं शिष्यगुणान्वितम् ।
ब्रह्मविद्याप्लवेनाशु स्वान्तध्वान्तमहोदधिम् ॥ ५३ ॥
दृष्टिः स्पृष्टिः श्रुतिर्घ्रातिर्मतिर्विज्ञातिरेव च ।
शक्तयोऽन्याश्च भिद्यन्ते चिद्रूपत्वेऽप्युपाधिभिः ॥ ५४ ॥

उक्तप्रमाणानुसारेणोक्तविशेषणगुरूपगमने फलं निरतिशयं दर्शयति—स गुरुरिति ।

युक्तं समाहितम् । शिष्यगुणाः 'प्रशान्तचित्ताय जितेन्द्रियाय' इत्यत्रोक्ता गुणाः, 'अमानित्वादयश्च' भगवद्गीतोक्ताः, तैरन्वितमित्यर्थः । ब्रह्मविद्यैव प्लवो ब्रह्मविद्याप्लवः, तेनेत्यर्थः । स्वान्तमन्तःकरणम् । उपाधिवचनेनोपाधीयमानो जीवो लक्ष्यते । तस्य ध्वान्तमात्मस्वभावावरणात्मविक्षेपलक्षणमनाद्यनिर्वाच्याज्ञानं, तदेव महानुदधिरपर्यन्तत्वात्, तमित्यर्थः ॥ ५३ ॥

कथमुक्तलक्षणो गुरुरुक्तलक्षणं शिष्यं सम्यग्ज्ञानेन सद्यः संसारसागरं तारयेत् ?—इत्यपेक्षायां, प्रथमं पदार्थविवेकं कारयित्वा वाक्यार्थज्ञानोपदेशेनेत्यभिप्रेत्य संक्षेपतः पदार्थविवेकमाह—दृष्टिः स्पृष्टिरिति ।

अन्याश्च रसयतिवक्तिगत्याद्याश्च शक्तय इत्यर्थः । एता दृष्ट्यादिशक्तयो यद्यप्यखण्डचिद्रूपा एव, तथापि तत्तदिन्द्रियद्वारकबुद्धिवृत्तिभेदोपाधिभिर्भिद्यन्ते, न वस्तुतो भेदोऽस्तीति तत्तद्वृत्त्यंशपरित्यागेन सर्ववृत्तिसाक्षितयानुगतप्रकाशस्वभाव एवात्मा त्वंपदार्थ इति प्रथमं ग्राहयेदित्यर्थः ॥५४॥

---

(१) १६. ७२. शमान्विताय—इति पाठे मु. उ. १. २. १३. (२) भ. गी. १३. ७. पश्य पृ. ९. (३) 'क्षुब्धस्वान्तध्वान्त' इत्यादिना निपातनात्—पा. सू. ७. २. १८. (४) विशेषणं—पाठः

अपायोद्भूतिहीनाभिर्नित्यं दीप्यन् रविर्यथा ।
सर्वदृक् सर्वगः शुद्धः सर्वं जानाति सर्वदा ॥ ९५ ॥
अन्यदृष्टिः शरीरस्थस्तावन्मात्रो ह्यविद्यया ।
जलेन्द्वाद्युपमाभिस्तु तद्धर्मा च विभाव्यते ॥ ९६ ॥

कथमुपाधिभिरेव चिच्छक्तिभेदः, स्वरूपत एव भेदो यथानुभवमस्त्विति चेत्, नैवम्, आत्मनो विकारित्वापत्तेः, कल्पनागौरवाच्च—इत्यभिप्रेत्य दृष्टान्तेनाखण्डरूपता साधयति—अपायेति ।

यथा रविरपायोद्भूतिहीनाभिर्विनाशजन्मशून्याभिः स्वरश्मिभिः सर्वं ब्रह्माण्डं दीप्यन्प्रकाशयन्नेक एवाविकृतो वर्तते, तथाऽऽत्माप्यपायोद्भूतिहीनाभिरेव स्वरूपभूतचिच्छक्तिभिस्तत्तद्बुद्धिवृत्त्युपाधिभेदाद्भिन्नाभिः सर्वं विषयजातं विशेषतो जानाति, सर्वदा सर्वदृक् सामान्येनापि सर्वं पश्यन्नास्ते । यतः सर्वगतः सर्वदृक्तथाविज्ञानत्वेन सर्वाव्यभिचारी, तस्माच्छुद्धो निर्विकार इति योजना ॥ ९५ ॥

यद्येवमुक्तलक्षण आत्मा, कथं तस्य संसारोपलब्धृता परिच्छेदप्रतिभासश्च ?—इत्यत आह—अन्यदृष्टिरिति ।

अविद्यया शरीरस्थः स्थूलसूक्ष्मशरीरयोरेवोपलभ्यमानत्वात्तत्र वर्तमानस्तावन्मात्रः—शरीरं यावत्तावन्मात्रोऽहमिति मन्यमानः, अन्यदृष्टिर्देहादिभ्योऽन्याभूतात्मदृष्टिस्तद्गतधर्मैरात्मनो धर्मवत्तद्दृष्टिरपि सन् परिच्छिन्नः संसारीव चावभासत इत्यर्थः । एतदेव दृष्टान्तेन स्पष्टयति—जलेन्द्वादीति । यथा चन्द्रादिर्जले प्रतिबिम्बितो जलोपाधिभेदाद्भेदवानिव, जलकम्पादिना कम्पादिमानिव चाविवेकादेव विभाव्यते, तथैताभिरुपमाभिस्तद्धर्मेत्याद्युक्तार्थम् ॥ ९६ ॥

---

(१) सर्वज्ञः सर्वदृक्—पाठ० । तुलय–१०. १.

दृष्ट्वा बाह्यं निमील्याथ स्मृत्वा तत्सविहाय च ।
अथोन्मील्यात्मनो दृष्टिं ब्रह्म प्राप्नोत्यनध्वगः ॥ ९७ ॥

तदेवमुपाधिपरामर्शमन्तरेणात्मनि भेदसंसारादेरनुपलम्भात्, उपाधीनां चात्मनो बहिः स्वातन्त्र्येण सत्तायां प्रमाणाभावात्, अविद्यामयत्वे सति नित्यशुद्धः परिपूर्ण एव चिदात्मेत्यवान्तरवाक्यैरवधारित आत्मैव सत्यज्ञानादिलक्षणं ब्रह्मेति महावाक्येनाचार्यादवगतात्मतत्त्वो मुमुक्षुः, अवस्थात्रयात्मकस्यैव सर्वदृश्यत्वात्, तदपोहेन तत्साक्षितया तदधिष्ठानतया चाव्यभिचारि चिदेकरसं ब्रह्मात्मेति स्वानुभवमापादयन्मुच्यत इत्यभिप्रेत्यानुसन्धानप्रकारमाह—दृष्ट्वेति ।

बाह्यं जागरितं पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं समष्टिव्यष्टिरूपं सर्वं विषयजातं दृष्ट्वा द्रष्टृदृश्यान्वयव्यतिरेकाभ्यां कार्यकारणान्वयव्यतिरेकाभ्यां चालोच्याथ निमील्य दृश्यं तत्सर्वं द्रष्टृमात्रत्वेन कार्यं सर्वं कारणभूततन्मात्रत्वेन विलाप्येत्यर्थः । अथानन्तरं स्मृत्वा जाग्रद्दृष्टवासनाकार्यं स्वप्नदर्शनं स्मृतिस्तां स्मृत्वा *विश्ववैश्वानरसहितं* स्थूलोपाधिं तद्वासनामये लिङ्गे सूक्ष्मभूतसहिते प्रविलाप्य वासनामयं स्वप्नमात्रमेव तदित्यनुसन्धायेत्यर्थः । तदपि लिङ्गशरीरं वासनामयं प्रविहाय च वासनासहितस्य मनःप्राणेन्द्रियसंघातस्यापि तत्कारणपञ्चतन्मात्राद्व्यतिरेकात्तावन्मात्रेण प्रविलाप्य, तेषां चोत्पत्तिक्रमवैपरीत्येन तत्कारणसाभासाज्ञानमात्रत्वेन प्रविलाप्यावस्थानं तद्धानं—तत्कृत्वेत्यर्थः । अथानन्तरं सुषुप्तौ बीजात्मकमज्ञानमात्रं यदुर्वरितं, तदपि सदसत्त्वभिन्नाभिन्नादिप्रकारनिरूपणासहत्वादिवान्धपरिकल्पितान्धकारवदर्किंचिदिति विवेकेन बाधित्वा, आत्मनः सर्वावस्थासाक्षितयाऽनुस्यूतसच्चिदानन्दमात्रस्य दृष्टिं ज्ञानप्रकाशस्वरूपामुन्मील्य निरु-

(१) 'कारणमात्र'—पाठः

प्राणाद्येवं त्रिकं हित्वा तीर्णोऽज्ञानमहोदधिम् ।
स्वात्मस्थो निर्गुणः शुद्धो बुद्धो मुक्तः स्वतो हि सः ॥ ५८ ॥
अजोऽहं चामरोऽमृत्युरजरोऽभय एव च ।
सर्वज्ञः सर्वदृक् शुद्ध इति बुद्धो न जायते ॥ ५९ ॥
पूर्वोक्तं यत्तमोबीजं तन्नास्तीति विनिश्चयः ।
तदभावे कुतो जन्म ब्रह्मैकत्वं विजानतः ॥ ६० ॥

पाधिकां कृत्वा स्थितो ब्रह्म प्राप्नोति—सत्यज्ञानादिलक्षणं ब्रह्मैव भवतीति यावत् । अनध्वगोऽर्चिरादिकमध्वानं न प्राप्नोति—ब्रह्मण आत्मत्वान्न गत्यायत्ता ब्रह्मप्राप्तिरित्यर्थः ॥ ५७ ॥

अनध्वगो ब्रह्म प्राप्नोतीत्युक्तमेव विशदयन्निरुपचरितैवास्य मुक्तिः, नोपास्यकस्येवापेक्षिकीति द्योतयति—प्राणादीति द्वाभ्याम् ।

सुषुप्त्यादीत्यर्थः । स्वात्मस्थो नार्चिरादिमार्गस्थः, तथा निर्गुणः स्वात्मनि प्रविलापितसकलगुण इत्यर्थः । शुद्धो निरुपाधिकोऽतः स्वतः स्वभावत एव मुक्त इत्यर्थः ॥ ५८ ॥

अजोऽहमिति ।

एवंविधोऽहं ब्रह्मास्मीति यो बुद्धोऽज्ञाननिद्राया निर्गतः स न जायते, पुनः शरीरं न गृह्णातीत्यर्थः ॥ ५९ ॥

प्रबुद्धस्य पुनर्जन्माभावे हेतुमाह—पूर्वोक्तमिति ।

" सुषुप्त्याख्यं तमोऽज्ञानम् " इत्यादिना यत्पूर्वोक्तमज्ञानं तत्कालत्रयेऽपि नास्तीति निश्चयः कस्मिन्नपि काले सतो ज्ञानमात्रात्तिरोभावासंभ-

(१) पश्य गौ. का. १. २. सभाष्याम्; अत्रैव च १७. २८–३० (२) यतः—पाठः (३) १७. २६.

क्षीरात्सर्पिर्यथोद्धृत्य क्षिप्तं तस्मिन्न पूर्ववत् ।
बुध्यादेर्ज्ञस्तथाऽसत्यान्न देही पूर्ववद्भवेत् ॥ ६१ ॥
सत्यं ज्ञानमनन्तं च रसादेः पञ्चकात्परम् ।
स्यामदृश्यादिशास्त्रोक्तमहं ब्रह्मेति निर्भयः ॥ ६२ ॥

वात्, अस्य तु ज्ञानोदयमात्र एव तिरोधानाच्छुक्तिरजतवदित्यर्थ । तदभाव इति । कारणाभावात्कार्याभाव इत्यर्थ ॥ ६० ॥

अहं ब्रह्मास्मीत्यात्मान साक्षात्पश्यतोऽपि पूर्ववद्व्यवहारदर्शनात्तत्कृतधर्माधर्मनिबन्धन पुन शरीरग्रहण स्यात्—इत्याशङ्क्य बाधितानुवृत्तिमात्रत्वाज्ज्ञानिनो व्यवहारस्य, न तन्निबन्धन पुन शरीरग्रहणादिससार इति दृष्टान्तपूर्वकमाह—क्षीरादिति ।

यथा सर्पिर्नवनीत क्षीराद्दुपायेनोद्धृत्य तस्मिन्नेव नि सारीकृते क्षीर क्षिप्त न पूर्ववदविविक्त भवति, तथाऽसत्यात् बुद्ध्याद संघातात् प्रथममात्मा विविक्तो ज्ञानमात्ररूपेणोद्धृतो ब्रह्माहमस्मीति वाक्यादवगतब्रह्मभाव पूर्ववत्पुनर्देही देहद्वयसघाताभिमानवान् तस्मिन्विद्यमानोऽपि न भवेदित्यर्थ । साहंकारस्य हि कर्म बन्धहेतुर्न निरहंकारस्य । तथा चोक्त भगवता—

"यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाल्लोकान्न हन्ति न निबध्यते" ॥ इति ॥६१॥

पदार्थपरिशोधनपूर्वक वाक्यादहं ब्रह्मास्मीति प्रतिबुद्धस्य पुन संसारभयशङ्का नास्तीत्युक्तेऽर्थे "आनन्द ब्रह्मणो विद्वान् । न बिभेति कुतश्चन" इति श्रुतिमर्थत पठति—सत्य ज्ञानमिति ।

रसादेरन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्यकोशपञ्चकात्पर त-

(१) विद्यमान—पाठ (२) भ गी १८ १७ (३) तै उ २ ९

यस्माद्भीताः प्रवर्तन्ते वाङ्मनःपावकादयः ।
तदात्मानन्दतत्त्वज्ञो न बिभेति कुतश्चन ॥ ६३ ॥
नामादिभ्यः परे भूम्नि स्वाराज्ये चेत्स्थितोऽद्वये ।
प्रणमेत्कं तदाऽऽत्मज्ञो न कार्यं कर्मणा तदा ॥ ६४ ॥

दाधारभूत "ब्रह्म पुच्छं प्रतिष्ठा" इति निर्दिष्टं यत्तदेव "अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते" इति शास्त्रोक्तं ब्रह्माहं स्याम्—अस्मीति पश्यन्निर्भयो भवतीति योजना ॥ ६२ ॥

भयकराणामपि भयकरब्रह्मात्मभूतस्य कुतो भयशङ्कावकाश इति ब्रह्मज्ञस्य पुनः संसाराभावमुक्तं द्रढयति—यस्मादिति ।

यदि "वाश्विनौ पावकादयः" इति पाठस्तदा इनः सूर्यः । आदिपदादिन्द्रमृत्यू गृह्येते । तथा च श्रुतिः—"भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः ॥" इति । "वाङ्मनःपावकादयः" इति पाठेऽध्यात्मं वागादयः, अधिदैवमग्न्यादयश्च यस्माद्भीताः प्रवर्तन्त इत्यर्थः । तथा च श्रुतिः—

"केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥"
"भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥" इति ॥ ६३ ॥

ननु विदुषोऽपि हरिहरहिरण्यगर्भादीनां नमस्कार्यत्वात्, तदतिक्रमभयसंभवात्कार्यशेषो विद्यत इति चेन्नेत्याह—नामादिभ्य इति ।

---

(१) तै. उ. २. ५ (२) तै. उ. २. ७ (३) तै. उ. २. ८. तुलय— भागवते ३. २५. ४१–४४. (४) के. उ. १. १ (५) कठ. उ. ६. ३.

विराड्वैश्वानरो बाह्यः स्मरन्नन्तः प्रजापतिः ।
प्रविलीने तु सर्वस्मिन् प्राज्ञोऽव्याकृतमुच्यते ॥ ६५ ॥
वाचारम्भणमात्रत्वात्सुषुप्तादि त्रिकं त्वसत् ।
सत्यो ज्ञश्चाहमित्येवं सत्यसन्धो विमुच्यते ॥ ६६ ॥

नामवाङ्मनआदिप्राणान्तेभ्य उत्तरोत्तरं भूयस्त्वेन श्रुतेभ्यः परे परस्मिन्भूम्नि सर्वव्यवहारातीतेऽमृते सुखरूपेऽद्वये स्वे महिम्नि स्वाराज्ये चेदहमस्मि भूमा ब्रह्मेति व्यवस्थित आत्मज्ञो विद्वान्, तदा तस्यान्यं प्रति गुणभावाभावात् कं प्रणमेत् प्रणम्यानामात्मभूतत्वात् । अतः परिपक्वज्ञानस्य कृतकृत्यत्वान्न कर्मणा किमपि कार्यमस्तीत्यर्थः ॥ ६४ ॥

भूम्नो नामादिभ्यः परत्वेऽपि कथमद्वयत्वमित्याशङ्क्य नामादेरवस्थात्रयरूपस्याध्यस्तत्वेन मिथ्यात्वात्, तत्साक्षिणस्तुरीयस्य भूम्नोऽद्वयत्वमिति वक्तुमवस्थात्रयमनुवदति—विराडिति ।

अध्यात्माधिदैवतयोरभेदाभिप्रायेण विराड्वैश्वानर इत्युक्त, विश्ववैश्वानर इत्यर्थः । बाह्यो वहिःप्रज्ञ इत्यर्थः । अन्तः स्मरन्निति स्वप्ने वासनामयविषयदर्शी प्रजापतिर्हिरण्यगर्भस्तैजस इति योज्यम् । अव्याकृतमायोपाधीश्वराख्यं तत्त्वं प्राज्ञ उच्यत इत्यर्थः ॥ ६५ ॥

एतदवस्थात्रयात्मक जगदपोह्य तत्साक्षिणो वस्तुभूतस्याहं ब्रह्मेति सम्यग्ज्ञानान्मुक्तो भवतीत्याह—वाचेति ।

ज्ञः साक्षी सत्यः परमात्मा सोऽहमेवेत्येवं सत्यसन्धोऽनायासेन मुच्यत इत्यर्थः ॥ ६६ ॥

---

( १ ) के. उ. १. १–८. ( २ ) 'तस्भू'—पाठः ( ३ ) स्वराजि—पाठ.

भारूपत्वाद्यथा भानोर्नाहोरात्रे तथैव च ।
ज्ञानाज्ञाने न मे स्यातां चिद्रूपत्वाविशेषतः ॥ ६७ ॥
शास्त्रस्यानतिशङ्क्यत्वाद्ब्रह्मैव स्यामहं सदा ।
ब्रह्मणो मे न हेयं स्याद्ग्राह्यं वेति च संस्मरेत् ॥ ६८ ॥
अहमेव च भूतेषु सर्वेष्वेको नभो यथा ।
मयि सर्वाणि भूतानि पश्यन्नेवं न जायते ॥ ६९ ॥
न बाह्यं मध्यतो वाऽन्तर्विद्यतेऽन्यत्स्वतः क्वचित् ।
अबाह्यान्तःश्रुतेः किंचित्तस्माच्छुद्धः स्वयंप्रभः ॥ ७० ॥

आत्मतत्त्वाज्ञानाध्यस्तः संसारस्तज्ज्ञानान्निवर्तत इत्युक्ते ज्ञानाज्ञानयोरात्मधर्मत्वं स्यादित्याशङ्क्य दृष्टान्तेन प्रत्याह—भारूपत्वादिति ।

ज्ञानाज्ञानयोरपि साक्ष्यत्वात्कल्पितत्वे सति नात्मधर्मत्वमिति भावः ६७

आत्मनो निर्विशेषत्वादेः शास्त्रप्रामाण्यादेव सिद्धेर्नात्र युक्तिकल्पनया मनः खेदनीयमित्यभिप्रेत्याह—शास्त्रस्येति ।

स्पष्टम् ॥ ६८ ॥

किं तद्ब्रह्मपरं शास्त्रं, किं वा सर्वदाऽहेयानुपादेयब्रह्मात्मज्ञाननिष्ठस्य फलमित्यपेक्षायां 'यस्तु सर्वाणि भूतानि' इत्यादिमन्त्रार्थमुदाहरति—अहमेवेति ।

स्पष्टम् ॥ ६९ ॥

आत्मनोऽद्वितीयब्रह्मरूपत्वे शास्त्रमर्थत उदाहृत्य निर्विशेषब्रह्मरूपत्वेऽप्युदाहरति—न बाह्यमिति ।

"तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः" इति श्रुतेरित्यर्थः । सर्वानुभूरित्यस्यार्थः स्वयंप्रभ इति ॥ ७० ॥

(१) तु—पाठः (२) ई. उ. ६. (३) °पत्वे—पाठः । (४) बृ. उ. २.५.१९.

नेति नेत्यादिशास्त्रेभ्यः 'प्रपञ्चोपशमोऽद्वयः'।
अविज्ञातादिशास्त्राच्च नैव ज्ञेयो ह्यतोऽन्यथा ॥ ७१ ॥
सर्वस्यात्माऽहमेवेति ब्रह्म चेद्विदितं परम्।
स आत्मा सर्वभूतानामात्मा ह्येषामिति श्रुतेः ॥ ७२ ॥
जीवश्चेत्परमात्मानं स्वात्मानं देवमञ्जसा।
देवोपास्यः स देवानां पशुत्वाच्च निवर्तते ॥ ७३ ॥

सामान्येन सर्वप्रपञ्चसंस्पर्शरहितत्वे श्रुतिमुदाहरति—नेतीति।
प्रपञ्चनिषेधद्वारेणैवात्मा विज्ञेयः, न पुनर्विषयतया सप्रपञ्चतया वेत्यत्र 'अन्यदेव तद्विदितादथो अविदितादधि'[3], 'यस्यामतं तस्य मतं मतं यस्य न वेद सः'[4], 'अविज्ञातं विजानताम्' इत्यादिशास्त्रमुदाहरति—अविज्ञातादीति ॥ ७१ ॥

"तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विदुः"[5] इति श्रुतिरेवमद्वयादिलक्षणमात्मानं जानतो देवाः फलप्राप्तिं विघ्नन्तीति चेन्नैवम्। देवानामप्यात्मभूतत्वाद्विदुषो विघ्नश्रुतेरविद्वद्विषयत्वादित्यभिप्रेत्याह—सर्वस्येति।
"तस्य ह न देवाश्च नाभूत्या ईशते। आत्मा ह्येषां स भवति"[6] इति श्रुतेरित्यर्थः ॥ ७२ ॥

एवं ब्रह्मात्मज्ञानवतो देवैरप्युपास्यत्वसिद्धेर्न तस्य देवपशुत्वशङ्कापीत्यतो न कुतश्चिद्भयमस्तीत्यत्र श्रुतिमर्थतः पठति—जीवश्चेदिति।

"यदैतमनुपश्यत्यात्मानं देवमञ्जसा।
ईशानं भूतभव्यस्य न तदा विजुगुप्सते ॥"[7]

---

(१) बृ. उ. २. ३. ६. (२) गौ. का. २. ३५. (३) के. उ. १. ३. (४) के. उ. २. ३. (५) बृ. उ. ३. ८. ११. (६) बृ. उ. १. ४. १०. (७) बृ. उ. १. ४. १०. (८) कठ. उ. ४. ५.

अहमेव सदात्मब्रः शून्यस्त्वन्यैर्यथाम्बरम् ।
इत्येवं सत्यसंधत्वादसद्वातो न वध्यते ॥ ७४ ॥
कृपणास्तेऽन्यथैवातो विदुर्ब्रह्म परं हि ये ।
स्वराड्योऽनन्यदृक् स्वस्थस्तस्य देवा असन्वशे ॥ ७५ ॥

" सर्वेऽस्मै देवा बलिमावहन्ति ", " तमेवं विद्वानमृत इह भवति "
इति च श्रुतिभ्य इत्यर्थः ॥ ७३ ॥

यदुक्तं " सत्यसंधो विमुच्यते " इति तत्स्फुटयति—अहमेवेति ।
सदात्मा चासौ ब्रह्मेति सदात्मब्रः " तत्सत्यं स आत्मा " इति श्रुति-
रिहोदाहरणम् । अन्यैः शून्य इति वाचारम्भणश्रुत्यर्थो दर्शितः। यथाम्बर-
मिति दृश्यसंसर्गशून्यत्वाच्छुद्ध इत्यत्र दृष्टान्तोक्तिः । असद्वाताऽनृताभि-
संधिरहितोऽतस्कर इव न वध्यते—बन्धानर्थहीनो भवति " स यथा तत्र न
दाह्येतैतदात्म्यमिदं सर्वम् " इत्यादिश्रुतिरिहोदाहार्या ॥ ७४ ॥

एवंविधज्ञानाभावादितरे पशुभूताः शोच्या भवन्तीति दर्शयन् " अथ
येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति " इति श्रुत्यर्थमाह—
कृपणा इति ।

ये परं ब्रह्मातोऽन्यथैवोक्तवैपरीत्येनानात्मभूततया विदुः, ते हि कृपणाः
शोच्या एवेति योजना । अभेददर्शी तु न कृपण इत्याह—स्वराडिति ।
' एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भ-
वति ' इति श्रुतिरिहोदाहरणम् । "तस्य सर्वेषु लोकेषु कामचारो भवति"
इति श्रुत्यर्थं मन्त्रभागोदाहरणेन द्योतयति—तस्येति । आसन्नित्यर्थे

(१) असद्वानाश—पाठः (२) तै. उ. १. ५. (३) तै. आ. ३. १. ३.
(४) श्लो. ६६. (५) छां. उ. ६. ८. ७. (६) छां. उ. ६. १६. ३.
(७) छां. उ. ७. २५. २. (८) श्रुत्यर्थे...णेनात्मरतिं द्यो—पाठः

हित्वा जात्यादिसंबन्धान्वाचोऽन्याः सह कर्मभिः ।
ओमित्येवं स्वमात्मानं सर्वं शुद्धं प्रपद्यथ ॥ ७६ ॥
[1] सेतुं सर्वव्यवस्थानामहोरात्रादिवर्जितम् ।
तिर्यगूर्ध्वमधः सर्वं सकृज्ज्योतिरनामयम् ॥ ७७ ॥

असन्निति छान्दसम् । "यस्त्वेव ब्राह्मणो विद्यात् । तस्य देवा असन्वशे"[2] इति मन्त्र । अस्यायमर्थ —यस्त्वेव ब्राह्मणो ब्रह्मनिष्ठ एव "वेदाहमेतं पुरुषं महान्तम्"[3] इत्युक्तप्रकारेण ब्रह्मात्मानं विद्यात्, तस्य विदुषो देवा वशगा भवन्तीति ॥ ७५ ॥

यस्माद्यथोक्तात्मज्ञानादेव कृतकृत्यता, तस्मान्मुमुक्षुभिस्तदर्थं यत्नवद्भिर्भवितव्यमिति तान्छिक्षयन्नाह—हित्वेति ।

'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः'[4] ॥

"ओमित्येवं ध्यायथ आत्मानम्"[5]

इति च वाक्यद्वयमत्रोदाहरणम् । अन्या वाचोऽनात्मविषया प्रवृत्तिपरा । सर्वं सर्वाधारभूतं शुद्धं विविक्तं निर्विशेषमित्यर्थः ॥ ७६ ॥

तमेव प्रतिपत्तव्यमात्मानं श्रुत्यन्तरेण विशिनष्टि—सेतुमिति ।

सर्वव्यवस्थानां वर्णाश्रमादिमर्यादानां सेतुं विधारकम् । "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैतं सेतुमहोरात्रे तरतः · सकृद्विभातो ह्येवैष ब्रह्मलोकः"[6] इति श्रुतिरत्रोदाहरणम् ॥ ७७ ॥

---

(१) °संबन्ध—पाठ. (२) सन्नतमान–पाठ (३) तै. आ ३. १३ (४) मु. उ २. २. ५. (५) मु. उ. २. २ ६. (६) छा उ. ८. ४. १—२.

धर्माधर्मविनिर्मुक्तं भूतभव्यात्कृताकृतात् ।
स्वमात्मानं परं विद्याद्विमुक्तं सर्वबन्धनैः ॥ ७८ ॥
अकुर्वन्सर्वकृच्छुद्धस्तिष्ठन्नत्येति धावतः ।
मायया सर्वशक्तित्वादजः सन् बहुधा मतः ॥ ७९ ॥

पुनः किंलक्षणमात्मानं प्रपद्यते इत्यपेक्षायाम्—

'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥'

इतिश्रुत्यर्थमाह—धर्माधर्मेति ।

कृताकृतात्कार्यकारणादित्यर्थः ॥ ७८ ॥

ननु कथं सर्वबन्धनैर्मुक्त आत्मा ?—तस्य कर्तृत्वादिश्रवणादित्याशङ्क्याकर्तृत्वादेरपि सहैव श्रवणाद्विरुद्धोभयस्वभावस्यैकस्मिन्नयोगात् स्वभावप्राप्तं कर्तृत्वादिकं मायामयं, प्रमाणावधेयमकर्तृत्वादिकमात्मस्वभाव इति विशेषमभिप्रेत्य विरुद्धधर्मवादिनीः श्रुतीरुदाहरति—अकुर्वन्निति ।

"अनेजदेकं मनसो जवीयः" इति मन्त्रभागार्थः अकुर्वन्सर्वकृदित्युक्तः । "शुद्धमपापविद्धम्" इत्यस्यार्थः शुद्ध इति । "तद्धावतोऽन्यानत्येति तिष्ठत्" इत्यस्यार्थमाह—तिष्ठन्निति । धावतो वेगतोऽन्यान् मनःप्राणादीनत्येति—अतीत्य गच्छति । यत्र मनःप्राणादि गच्छति, तत्र सर्वत्रात्मचैतन्यस्याभिव्यक्तिनियमादात्मा तिष्ठन्नपि गच्छतीव भासत इत्यर्थः । "अजायमानो बहुधा विजायते" इति मन्त्रार्थमाह—अजः सन् बहुधा मत इति । सर्वत्र हेतुः—मायया सर्वशक्तित्वादिति । नहि मायायामसंभावनीयमस्तीति भावः ॥ ७९ ॥

---

(१) कठ. उ. २. १४. (२) ई. उ. ४, ८, ४. (३) तै. आ. ३. १३.

राजवत्साक्षिमात्रत्वात्सांनिध्याद्भ्रामको यथा ।
भ्रामयञ्जगदात्माहं निष्क्रियोऽकारकोऽद्वयः ॥ ८० ॥
निर्गुणं निष्क्रियं नित्यं निर्द्वन्द्वं यन्निरामयम् ।
शुद्धं बुद्धं तथा मुक्तं तद्ब्रह्मास्मीति धारयेत् ॥ ८१ ॥
बन्धं मोक्षं च सर्वं यत इदमुभयं हेयमेकं द्वयं च
ज्ञेयं ज्ञेयाभ्यतीतं परममधिगतं तत्त्वमेकं विशुद्धम् ।
विज्ञायैतद्यथावच्छ्रुतिमुनिगदितं शोकमोहावतीतः
सर्वज्ञः सर्वकृत्स्याद्भवभयरहितो ब्राह्मणोऽवाप्तकृत्यः ॥ ८२ ॥

*अक्रियस्यापि क्रियावत्तोपचारमुक्तं दृष्टान्तेन प्रपञ्चयति—राजवदिति। स्पष्टम् ॥ ८० ॥*

यस्मादेवमात्मा स्वतो नित्यशुद्धत्वादिस्वभावः शास्त्रन्यायाभ्यामवगतः, तस्मात्तं तथैव जानीयान्नान्यथेत्युपसंहरति—निर्गुणमिति ।

नैतेषु श्लोकेषु पुनरुक्तं दोषावहं, यतः प्रतिपाद्यवस्तुनो दुर्बोधत्वान्मुमुक्षूपकाराय कारुणिक आचार्यः कचिच्छास्त्रतः, कचित्कलकथनेन, कचिद्विद्वदनुभवाभिनयनेन, पुनःपुनः प्रतिपादयति, 'भूयोऽपि पथ्यं वक्तव्यम्' इति न्यायात् ॥ ८१ ॥

उक्तं प्रकरणार्थं प्रतिपत्तिसौकर्यार्थं संक्षिप्य कथयति–बन्धं मोक्षमिति ।

बन्धं मोक्षं च सर्वं यथावद्विज्ञाय भवभयरहितः स्यादित्यन्वयः । बन्धः प्रमातृत्वकर्तृत्वादिप्रतिभासलक्षणः । मोक्षो ब्रह्मस्वरूपावस्थानम् । सर्वमिति

---

(१) ज्ञेयाज्ज्ञेया—पाठः (२) तुलय—
पौनरुक्त्यं न दोषोऽत्र शब्देनार्थेन वा भवेत् ।
अभ्यासेन गरीयस्त्वमर्थस्य प्रतिपाद्यते ॥
—मानसोल्लासे ८. ४.

न स्वयं स्वस्य नान्यैश्च नान्यस्यात्मा च हेयगः ।
उपादेयो न चाप्येवमिति सम्यङ्मतिः स्मृता ॥ ८३ ॥

निःशेषं पूर्वोक्तप्रकारमित्यर्थः । इदमुभयं बन्धं मोक्षं च यतो हेतोरज्ञाना- ज्ज्ञानाच्च भवतः, ते अपि विज्ञायेति संबन्धः । तथा एकमनुवृत्तं कारणं, द्वयं व्यावृत्तं कार्यं च यज्ज्ञेयं विषयभूतं,—तत्सर्वं हेयं बाध्यं विज्ञायेत्यन्वयः । ज्ञेयाभ्यतीतं दृश्यात्सम्यक् पृथक्कृतं परमं निरतिशयं विशुद्धं एकं ब्रह्म यद्वेदान्तेष्वधिगतं तत्त्वं परमार्थं, तदपि यथावद्विज्ञायात्मत्वेनोपादाय । किंलक्षणम् ? श्रुतिमुनिगदितं श्रुतिवाक्येन मुनिना गुरुणोपदिष्टमित्यर्थः । एवमात्मानात्मतत्त्वं ज्ञात्वाऽनात्मापोहेनात्मतत्त्वनिष्ठः शोकमोहावतीतः स्यात् " तत्र को मोहः कः शोक एकत्वमनुपश्यतः " इति श्रुतेः । सर्वं हि ब्रह्म, तज्जानन् सर्वज्ञः स्यात्, सर्वं स्वात्मन्येक करोतीति सर्वकृत्स्यात् । तथा च मुक्तविषया श्रुतिः ' अहं विश्वं भुवनमभ्यभवा३मिं ' इति । दैर्घ्यं गानार्थम् । अभ्यभवमभिभूतवानात्मसात्कृतवानस्मीति श्रुत्यर्थः । भवभयर- हितः " न बिभेति कुतश्चन " इति श्रुतेः । ब्राह्मणो मुख्यया वृत्त्या ब्राह्म- णशब्दाभिधेयः । " अमौनं च मौनं च निर्विद्याऽथ ब्राह्मणः " इति । " अथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः " इति च श्रुतेः । अज्ञातकृत्यः प्राप्तसर्वक्रियाफल इत्यर्थः । "सोऽश्नुते सर्वान्कामान्स- ह । ब्रह्मणा विपश्चिता " इति श्रुतेरित्यर्थः ॥ ८२ ॥

एवमात्मानं जानतः कृतकृत्यत्वमुक्तं प्रकटयति—न स्वयमिति ।

स्वयमात्मा स्वस्य न हेयगस्त्यक्तव्यकोटौ पतितः, न चाप्युपादेयः, एक- स्मिन्कर्मकर्तृत्वासंभवात्, स्वरूपस्य स्थितौ नाशे वा स्वविषयहानोपादानयो

( १ ) नान्यस्य नान्यश्चात्मा—पाठः ( २ ) ई. उ. ७. ( ३ ) तै. उ. ३.१०. ( ४ ) तै. उ. २. ९. ( ५ ) बृ. उ. ३. ५. १. ( ६ ) बृ. उ. ३. ८. १०. ( ७ ) तै. उ. २. १.

आत्मप्रत्यायिका ह्येषा सर्ववेदान्तगोचरा ।
ज्ञात्वैतां हि विमुच्यन्ते सर्वसंसारबन्धनैः ॥ ८४ ॥
रहस्यं सर्ववेदानां देवानां चापि यत्परम् ।
पवित्रं परमं ह्येतत्तदेतत्संप्रकाशितम् ॥ ८५ ॥

रसंभवाच्च । तथाऽन्यश्च न स्वस्य हेयगः, अद्वैतेऽन्यस्यैवाभावात्; नाप्युपादेयोऽत एव । तथाऽन्यस्यापि स्वयमुपादेयो हेयगो वा न भवत्यात्मान्तराभावात्, अनात्मनश्च बाधितत्वादचैतन्याच्चेति योजना । इत्येवं या निष्ठा सा सम्यङ्मतिः सम्यग्ज्ञानं स्मृता ब्रह्मविद्भिरित्यर्थः ॥ ८३ ॥

कूटस्थचैतन्यैकरसे पूर्णे वस्तुनि हानाद्यसंभवान्निरायासं परं ब्रह्मैवास्मीत्येवंविधाया धियः सम्यङ्मतित्वे हेतुमाह—आत्मप्रत्यायिकेति ।

आत्मानं ब्रह्मत्वेन प्रत्याययतीत्यात्मप्रत्यायिका हि यस्मादेषा मतिः, स्वानुभवसिद्धेति वा । सर्ववेदान्तगोचरेति प्रमाणमूलत्वमस्या दर्शयति । एतां ज्ञात्वा लब्ध्वा सर्वसंसारबन्धनैर्विमुच्यन्ते कृतकृत्या भवन्तीत्यर्थः । तथाच भगवद्वचनं—

"इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥"

इति ॥ ८४ ॥

प्रकरणोक्तं ज्ञानमिदानीं प्रशंसन्नस्योपादेयत्वं द्रढयति—रहस्यमिति ।

रहस्यमुपदेशव्यतिरेकेणाविज्ञेयं "आचार्यवान्पुरुषो वेद", "सर्वे वेदा यत्पदमामनन्ति" इति च श्रुतेः । "देवैरत्रापि विचिकित्सितं पुरा न हि

(१) इद रहस्य—पाठः । तुलय—१६. ७०. (२) दुर्लभम्—पाठः (३) भ. गी. १५. २०. (४) छां. उ. ६. १४. २. (५) कठ. उ. २. १५.

नैतद्देयमशान्ताय रहस्यं ज्ञानमुत्तमम् ।
विरक्ताय प्रदातव्यं शिष्यायानुगताय च ॥ ८६ ॥
ददतश्चात्मनो ज्ञानं निष्क्रयोऽन्यो न विद्यते ।
ज्ञानमिच्छंस्तरेत्तैस्माद्युक्तः शिष्यगुणैः सदा ॥ ८७ ॥
ज्ञानं ज्ञेयं तथा ज्ञाता यस्मादन्यन्न विद्यते ।
सर्वज्ञः सर्वशक्तिर्यस्तस्मै ज्ञानात्मने नमः ॥ ८८ ॥

सुविज्ञेयमणुरेषधर्मः " इति श्रुतेर्देवानां चापि रहस्यमित्यर्थः । परं सर्वोत्तमं पवित्रं पावनं "क्षीयन्ते चास्य कर्माणि", "एवंविदि पापं कर्म न श्लिष्यते" इत्यादिश्रुतेः । हि यस्मात्परमं परमपुरुषार्थरूपं निरतिशयानन्दप्रकाशमिति यावत् । यदेवंरूपं सम्यग्ज्ञानं, तदेतत्सम्यक् प्रकाशितं प्रकटीकृतमस्मिन्प्रकरण इत्यर्थः ॥ ८५ ॥

एतस्य गोपनीयत्वं सूचयति—नैतदिति । यद्वा—अस्य दुर्विज्ञेयत्वेन दुर्धरत्वात्तद्धारणसमर्थमधिकारिणं निर्दिशन्ननधिकारिभ्यो विवेचयति—नैतद्देयमिति ॥ ८६ ॥

यस्मादेवंलक्षणज्ञानद आचार्यः कृतकृत्यो न प्रलोभादिना ज्ञानं प्रयच्छति, तस्मान्मुमुक्षुरमानित्वादिशिष्यगुणयुक्तः स्यात्, यथाचार्यः कृपया विद्यां दद्यादित्येतमर्थमाह—ददतश्चेति ।

न विद्यते यस्मादिति योज्यम् । तस्माच्छिष्यगुणैः सदा युक्तो ज्ञानमिच्छन् संपादयंस्तरेत्संसारमिति शेषः ॥ ८७ ॥

आदावेवोपसंहारेऽपि देवताचार्यनमस्कारौ तद्भक्तैर्विद्यां प्रत्यन्तरङ्गत्वख्यापनाय कार्याविति दर्शयति श्लोकद्वयेन—ज्ञानमित्यादिना ।

(१) भवेत्—पाठ. (२) कठ. उ. १. २१. (३) मुं. उ. २. २.८. (४) छां. उ. ४. १४. ३. (५) भ. गी. १३. ७—११. पद्य-गद्यप्रबन्धे ५ वाक्यम्।

विद्यया तारिताः स्मो यैर्जन्ममृत्युमहोदधिम् ।
सर्वज्ञेभ्यो नमस्तेभ्यो गुरुभ्योऽज्ञानसंकुलम् ॥ ८९ ॥

इति सम्यङ्मतिप्रकरणम् ।

## १८ तत्त्वमसिप्रकरणम् ।

येनात्मना विलीयन्ते उद्भवन्ति च वृत्तयः ।
नित्यावगतये तस्मै नमो धीप्रत्ययात्मने ॥ १ ॥

ज्ञानात्मने चित्सदानन्दरूपायेत्यर्थः ॥ ८८ ॥
विद्ययेति ।
अज्ञानसंकुलमिति च्छेदः ॥ ८९ ॥

इति सप्तदश सम्यङ्मतिप्रकरणम् ॥ १७ ॥

---

पूर्वस्मिन्प्रकरणे ब्रह्मात्मविषयमपरोक्षज्ञानं मोक्षसाधनं वेदान्तेभ्यो भवतीत्युक्तम्, तदयुक्तं, वेदान्तानामपि स्वर्गकामादिवाक्यवत् परोक्षज्ञानजनकत्वात्, अतोऽपरोक्षज्ञानाय प्रसंख्यानमेष्टव्यमिति केचित्प्रतिपेदिरे । तन्मतनिराकरणेन पूर्वोक्तं सर्वं स्वसिद्धान्तं श्रौतमुपपत्तितः स्फुटमुपपादयितुं प्रकरणान्तरमारभमाणो देवतानमस्कारव्याजेनान्तःकरणवृत्तिभावाभावसाक्षिणं कूटस्थचिदेकतानमेवात्मानं नित्यापरोक्षं वेदान्ताः ब्रह्मेति प्रतिपादयन्तो न परोक्षं ब्रह्म समर्पयन्तीति सूचयन् प्रकरणप्रतिपाद्यं दर्शयति—येनेति ।

वृत्तयो धीपरिणामाः अलातचक्रमिवाग्न्यात्मना येन चैतन्यज्योतिःस्वरूपेण विलीयन्ते सुषुप्तौ, अवस्थान्तरे उद्भवन्ति च चिदात्मन्यात्मा इत्यर्थः । धीप्रत्ययाः साभासबुद्धिवृत्तय, तेषामात्मने तदध्यासाधिष्ठानायेत्यर्थः । नित्यश्चासाववगतिश्चेति विग्रहः ॥ १ ॥

---

(१) तत्त्वमतिप्रकरणम्—पाठः । (२) धीप्रत्ययात्मने—पाठः ।

प्रमथ्य वज्रोपमयुक्तिसंभृतैः
श्रुतेररातीञ्शतशो वचोसिभिः ।
ररक्ष वेदार्थनिधिं विशालधीः
नमो यतीन्द्राय गुरोर्गरीयसे ॥ २ ॥

नित्यमुक्तः सदेवास्मीत्येवं चेन्न भवेन्मतिः ।
किमर्थं श्रावयत्येवं मातृवच्छ्रुतिरादृता ॥ ३ ॥
सिद्धादेवाहमित्यस्माद्युष्मद्धर्मो निषिध्यते ।
रज्ज्वामिवाहिधीर्युक्त्या तत्त्वमित्यादिशासनैः ॥ ४ ॥

इदानीं श्लोकेऽर्थे मुमुक्षूणां निश्वासार्थं स्वाचार्यगुणोपवर्णनपूर्वकं संप्रदायशुद्धिं कथयति—प्रमथ्य वज्रेति ।

सम्भृतैरभेद्यतया घटितैः श्रुतेर्वचोसिभिर्वेदान्तवाक्यरूपनिस्त्रिंशैः अरातीन् भेदतत्त्वारण्यवासिनोऽद्वैतरत्नापहारिणः शत्रून् प्रमथ्य समूलमुन्मूल्य, यो विशालधीरप्रतिहतदीर्घबुद्धिर्वेदान्तार्थनिधिं वेदान्तमञ्जूगतं निधिं—निधीयतेऽस्मिन्सर्वमिति निधिरद्वयं ब्रह्मात्मतत्त्वं—तं ररक्ष, तस्मै यतीन्द्राय गुरोर्गरीयसे परमगुरवे नम इति योजना ॥ २ ॥

एवं नमस्कारव्याजेन प्रकरणार्थं स्वसंप्रदायशुद्धिं चोक्त्वा, तत्त्वमस्यादिवाक्यादेवापरोक्षज्ञानमात्मनीति प्रकरणसिद्धान्तं तावदाह—नित्यमुक्त इति।

सदेवाहमहमेव सदस्मि नित्यमुक्त इत्येवं चेत्तदपरोक्षा मतिर्वेदान्तवाक्यान्न भवेत्, तर्ह्येवं सिद्धवन्निर्देशेन तत्त्वमसीति श्रुतिः किमर्थं कस्मादादृता आदरवती पुनःपुनर्मातेव पुत्रहितैषिणी श्रावयेदित्यर्थः ॥ ३ ॥

नित्यापरोक्षस्वभावात्मस्वरूपत्वाद्ब्रह्मणो वाक्यादेवापरोक्षज्ञानमारोपितानर्थनिवृत्तिफलमुत्पद्यत इत्याह—सिद्धादेवेति ।

---

(१) वचोबलैः—पाठः। (२) रादरात्—पाठः।

शास्त्रप्रामाण्यतो ज्ञेया धर्मादेरस्तिता यथा ।
विषापोहो यथा ध्यानाद्ध्‌ हुतिः स्यात्पाप्मनस्तथा ॥ ५ ॥
सद्ब्रह्माहं करोमीति प्रत्ययावात्मसाक्षिकौ ।
तयोरज्ञानजस्यैव त्यागो युक्ततरो मतः ॥ ६ ॥

अहमित्यग्राह्यशब्दलक्ष्यादपरोक्षतया स्वतःसिद्धादात्मनः सकाशात् युष्मद्धर्मैः परागर्थोऽहंकारादिः तत्त्वमित्यादिशासनैर्युक्त्या सहितैः शोधितार्थैरिति यावत् । निषिध्यते भ्रमगृहीतपारोक्ष्यसद्वयत्वाकारविलापनेनात्मतत्त्वं प्रतिपाद्यत इत्यर्थः । तत्र दृष्टान्तार्थः स्पष्टः ॥ ४ ॥

तन्निवृत्तिं दृष्टान्ताभ्यां स्पष्टयति—शास्त्रेति । यद्वा—नित्यापरोक्षात्मैव ब्रह्म, तदवगमश्चानर्थनिवृत्तिहेतुरित्येतत्क्रमेण दृष्टान्ताभ्यां साधयति—शास्त्रेति ।

तथा ब्रह्मण एवात्मत्वेनास्तिता "अनेन जीवेनात्मनानुप्रविश्य"[2], "तत्त्वमसि"[3] इति शास्त्रप्रामाण्यतो ज्ञेयेति दार्ष्टान्तिकं योज्यम् । ध्यानाद्गरुडादिमन्त्रबीजस्मरणाद्विषापोहः सद्यो विषनिवृत्तिः, तथा पाप्मनोऽविद्याद्यनर्थरूपस्य वाक्यादात्मतत्त्वावगममात्रेण सद्य एव हुतिर्बोधरूपा निवृत्तिः स्यादित्यर्थः ॥ ५ ॥

ननु वाक्योत्थाहंब्रह्मास्मीतिप्रत्ययवत् अहं करोमीत्यपि प्रत्ययोऽनुभवसिद्धः, तत्र को हेतुरयमेवापरेण बाध्यत इत्यत्रेति शङ्कते—सद्ब्रह्माहमिति ।

तत्र नियामकं हेतुं वदन्नुत्तरमाह—तयोरिति । युक्ततर इति तरपोऽयमर्थः—यथा पूर्वप्रवृत्तयागविनियोजकश्रुत्या पश्चात्प्रवृत्ता लिङ्गादयोऽप्राप्ता एव बाध्यन्ते, यथा वा पूर्वमेव प्रकृतेर्विकृतावतिदेशप्राप्तानाम-

(१) निर्वृत्तिः पा—पाठ. युक्ततरः । (२) छां. उ. ६. ३. २. (३) छां उ. ६. ८. ७.

सदस्मीति प्रमाणोत्था धीरन्या तन्निभोद्भवा ।
प्रत्यक्षादिनिभा साऽपि बाध्यते दिग्भ्रमादिवत् ॥ ७ ॥
कर्ता भोक्तेति यच्छास्त्रं लोकबुद्ध्यनुवादि तत् ।
सदस्मीति श्रुतेर्जाता बाध्यतेऽन्यैर्नैव धीः ॥ ८ ॥

ज्ञाना विकृतविगतविशेषोपदेशेन पाश्चात्यत्न बाध इति युक्तत्वऽप्यनियमो बाध्यबाधकयो पूर्वापरीभावस्य, न तथास्य न्यायस्येति ( ? त्यागस्येति ) युक्ततर इत्युक्तमिति ॥ ६ ॥

अत्र क प्रमाणज प्रत्यय ? को वाऽज्ञानज ? इति वीक्षाया विविच्य दर्शयति—सदस्मीति ।

वीस्तरनमसीति निर्दुष्टवास्यप्रमाणोत्था, अन्या कर्ताहमित्यादिधीस्त निभोद्भवा प्रमाणाभाससमुद्भूता अविवेकदोषास्कन्दितत्वादित्यर्थ । वाक्य-जन्यज्ञानस्यापि प्रत्यक्षाभासबाधन दृष्टान्तेन बुद्धिमारोहयति—प्रत्य-क्षादीति ॥ ७ ॥

ननु ब्रह्मास्मीति बुद्धिवत् कर्तृत्वादिबुद्धेरपि “ सत्य वद । धर्मं चर, ” “ स हि कर्ता ”, “ भोक्तेत्याहुर्मनीषिण ” इत्यादिवचनाच्छास्त्रसिद्धत्व तुल्यमिति कथ तस्या बाध्यत्वमित्याशङ्क्याह—कुरु ( कर्ता ) भोक्तेति ।

शास्त्रानभिज्ञाना तदभिज्ञसगतिहीनानामपि कर्ता भोक्ताहमस्मीति निय सिद्धत्वात् ‘ कुरु ’ इत्यादिशास्त्र लोकसिद्धार्थानुवादि, नाऽनधिग तार्थबोधकमित्यर्थ । सदस्मीति धीस्तु श्रुतेरनन्यसिद्धार्थाया सकाशा-

( १ ) कुरु पाठ । तुलय–१२ ४, १७ ( २ ) बऽन्या नैव—पाठ ( ३ ) तै. उ १ ११ ( ४ ) बृ उ ४ ३ १० ( ५ ) कठ उ ३ ४

सदेव त्वमसीत्युक्ते नात्मनो मुक्तता स्थिरा ।
प्रवर्तते प्रसंचक्षामतो युक्त्याऽनुचिन्तयेत् ॥ ९ ॥
सकृदुक्तं न गृह्णाति वाक्यार्थज्ञोऽपि यो भवेत् ।
अपेक्षतेऽत एवान्यदवोचाम द्वयं हि तत् ॥ १० ॥
नियोगोऽप्रतिपन्नत्वात्कर्मणां स यथा भवेत् ।
अविरुद्धो भवेत्तावद्यावत्संवेद्यताऽदृढा ॥ ११ ॥

ज्ञातेत्यर्थः । तस्मादेतयैव निरवकाशया सदस्मीति श्रुतिजातया धियैवान्या सावकाशानुवादवाक्यजन्या बाध्यते, बाध्यत एवेति वाऽन्वयः ॥८॥

तदेवं वाक्यादेवापरोक्षज्ञानमात्मविषयमुत्पद्यते, तच्च निरपेक्षमेवानर्थनिवृत्तिहेतुरिति स्वमतमुपन्यस्य स्वयूथ्यमतमुत्थापयति—सदेवेति ।

प्रसंचक्षां प्रसंख्यानं शब्दावृत्तिं युक्त्या सहाभ्यस्येदित्यर्थः ॥ ९ ॥

उक्तमेव साधयति—सकृदिति ।

योऽपि वाक्यार्थज्ञः सकृदुक्तं न गृह्णाति—न जानाति—न सम्यक् प्रतिपद्यते यतः, अत एवान्यत्सहकारिभूतमपेक्षते, यदपेक्षते तद्द्वयं—वाक्यानुचिन्तनं, युक्त्यालोचनं च—पूर्वश्लोके वयमवोचामेत्यर्थः ॥ १० ॥

ननु तत्त्वमस्यादिवाक्येषु विधिं नोपलभामहे, ब्रह्मस्वभावस्य च स्वत एव सिद्धेर्मुमुक्षोर्नियोगोऽपि न घटत इत्याह—नियोग इति ।

वाक्यमात्रादैकात्म्यस्याप्रतिपन्नत्वात् साक्षात्कृतत्वाभावात् तावन्नियोगोऽविरुद्धो भवेत्, यावत्संवेद्यता ब्रह्मात्मैकताऽदृढा दृढा न प्रतीयत इति योजना । स नियोगः कर्मणामग्निष्टोमादीनां यथा भवेद्वाक्यादवगतानामपि फलप्राप्तय इति दृष्टान्तार्थः ॥ ११ ॥

चेष्टितं च यतो मिथ्या स्वच्छन्दः प्रतिपद्यते ।
प्रसंख्यानमतः कार्यं यावदात्मानुभूयते ॥ १२ ॥
सदस्मीति च विज्ञानमक्षजो बाधते ध्रुवम् ।
शब्दोत्थं दृढसंस्कारो दोषैश्चाकृष्यते बहिः ॥ १३ ॥
श्रुतानुमानजन्मानौ सामान्यविषयौ यतः ।
प्रत्ययावक्षजोऽवश्यं विशेषार्थौ निवारयेत् ॥ १४ ॥

किंच विधिमन्तरेण चेद्ब्रह्मात्मैक्यं वाक्यात्स्वयमेव प्रतिपद्येत, तदा यमनियमादिकमनुष्ठीयमानं मिथ्या स्यादुपकार्याभावादित्याह—चेष्टितमिति ।

चेष्टितमनुष्ठितं यमादि, स्वच्छन्दः स्वेच्छावाननियुक्त इति यावत्, प्रतिपद्यते चेदित्यध्याहारः । आत्मानुभूयते साक्षात्क्रियत इत्यर्थः ॥ १२ ॥

इतोऽपि प्रसंख्यानं विधितोऽनुष्ठेयमित्याह—सदस्मीति ।

सदस्मीतिशब्दोत्थं विज्ञानमक्षजः प्रत्यक्षप्रत्ययः कर्ता भोक्तेत्येवमाद्याकारो बाधते, ध्रुवं निश्चितमेतत् । अक्षजस्य प्राबल्ये हेतुगर्भं विशेषणं—दृढसंस्कार इति । किंच तेन मुमुक्षुर्दोषै रागादिभिश्च बहिराकृष्यते बहिर्मुखीक्रियते, अतः प्रसंख्यानं दोषनिवृत्तये च कार्यमित्यर्थः ॥ १३ ॥

न केवलं चिरं निरूढवासनाघटितत्वेन प्रत्यक्षप्राबल्यम्, अपि तु विशेषविषयत्वाच्चेत्याह—श्रुतेति ।

श्रुतः शब्दः, अनुमानं लिङ्गज्ञानम् । विप्रलिप्साभ्रान्त्योरपि तत्र संभाव्यमानत्वाद्वृत्त्यन्तरसंभवाच्च, प्रत्यक्षस्य तदभावाद्युक्तं बाधकत्वमित्यर्थः॥१४॥

---

( १ ) तथा–पाठः

वाक्यार्थप्रत्ययी कश्चिन्निर्दुःखो नोपलभ्यते ।
यदि वा दृश्यते कश्चिद्वाक्यार्थश्रुतिमात्रतः ॥ १५ ॥
निर्दुःखोऽतीतदेहेषु कृतभावोऽनुमीयते ।
चर्या नोऽशास्त्रसंवेद्या स्यादनिष्टं तथा सति ॥ १६ ॥
सदसीति फलं चोक्त्वा विधेयं साधनं यतः ।
न तदन्यत्प्रसंख्यानात्प्रसिद्धार्थमिहेष्यते ॥ १७ ॥

यदि वाक्यार्थज्ञानमात्रात्कृतकृत्यता कस्यचिद्दृश्येत, तदा प्रसंख्यानकल्पनमनर्थकं स्यात्, ननु तथा कश्चिद्दृश्यते; अतः प्रसंख्यानमावश्यकमित्याह—वाक्यार्थप्रत्ययीति ।

"तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे"[1], "तद्धास्य विजज्ञौ"[2] इत्यादौ वाक्यार्थज्ञानमात्राद्वामदेवादिः कृतकृत्यो दृश्यत इति चेत्तत्राह—यदि वेति । दृश्यते 'निर्दुःखः' इत्युत्तरश्लोकगतेनान्वयः ॥ १५ ॥

निर्दुःखोऽतीतेति ।

वाक्यार्थश्रवणमात्रात् कश्चिद्यदि निर्दुःखो दृश्यते श्रुतिपुराणादौ, सोऽतीतदेहेषु कृतभावोऽनुष्ठितप्रसंख्यानोऽनुमीयते निर्दुःखत्वलिङ्गेनेत्यर्थः । किंच–सकृद्विज्ञातवाक्यार्थस्य विध्यनभ्युपगमे नोऽस्माकं चर्या परमहंसाश्रमाचारः अशास्त्रसंवेद्या स्यात् शास्त्रविहिता न स्यात् । तथा सत्यनिष्टं स्यात्—यत्याश्रमचर्यापरित्यागेऽप्यारूढपतितता[3] न भवेदित्यनिष्टप्रसङ्ग इत्यर्थः ॥ १६ ॥

कस्तर्हि प्रसंख्यानविधिपक्षे सिद्धब्रह्मोपदेशस्यार्थः स्यादित्यत आह—सदसीति ।

त्वं सद्ब्रह्मासीति वर्तमानोपदेशेन फलमिदं साधनविधानार्थमुच्यते ।

---

(१) बृ. उ.१.४.१०. (२) छां.उ.६.७.६.; ६.१६.३. (३) 'पतितो न–पाठः

तस्मादनुभवायैव प्रसंचक्षीत यत्नतः ।
त्यजन्साधनतत्साध्यविरुद्धं शमनादिमान् ॥ १८ ॥
नैतदेवं रहस्यानां नेति नेत्यवसानतः ।
क्रियासाध्यं पुरा श्राव्यं न मोक्षो नित्यसिद्धतः ॥ १९ ॥

यतो यस्मात्सर्वत्र फलमुक्त्वा साधनं विधेयमतो ब्रह्मात्मैक्यकामः प्रसंचक्षी-तेति सार्थको विधिर्भवेदित्यर्थः । प्रसंख्यानमेव किमिति विधीयते ? ज्यो-तिष्टोमादि कस्माद्ब्रह्मभावाय न विधीयते ?—इत्यत आह—न तदन्य-दिति । प्रसंख्यानादन्यदिह वेदान्तेषु प्रसिद्धार्थं सिद्धार्थाभिव्यञ्जनसमर्थं साधनं यत्तच्छ्रूयते । ज्योतिष्टोमादेर्व्यञ्जकत्वसामर्थ्याभावादित्यर्थः ॥१७॥

पूर्वपक्षमुपसंहरति—तस्मादिति ।

किं कुर्वन् ? साधनतत्साध्यविरुद्धं त्यजन्—साधनं प्रसंख्यानं, तत्साध्यं—तत्फलं—आत्मैक्यसाक्षात्कारः, तद्विरुद्धं कर्मनिवृत्त्यम् । शमनं शमः । आदिपदाद्दमोपरमादित्यादिग्रहः । शमादियुक्तश्च सन्नित्यर्थः ॥१८॥

सिद्धान्तमुपक्रमते—नैतदेवमिति ।

किं वेदान्तेषु प्रसंख्यानं साक्षाद्विधीयते ? किंवा वर्तमानोपदेशेन फल-वचनानुपपत्त्या कल्प्यत इति ? तत्र नाद्य इत्याह—रहस्यानामिति । उप-निषद्वाक्यानामित्यर्थः । नेति नेति [ इति ] दृश्यनिषेधद्वारा तदवधिमात्रे ब्रह्मात्मस्वरूपे पर्यवसानदर्शनाद्वेदान्तानां न विध्यर्थतेत्यर्थः । द्वितीयं प्र-त्याह—क्रियासाध्यमिति । यत्क्रियासाध्यं फलं, तत्पुरा पूर्वकाण्डे श्राव्यं, नोपनिषत्सु । अत्र श्रूयमाणो मोक्षो न क्रियासाध्यः । कुतः ? नित्यसिद्ध-तोऽसाध्यत्वादित्यर्थः ॥ १९ ॥

---

( १ ) प्रसिद्धार्थाभिं—पाठ. ( २ ) तुलय—१. १७; १४. ११.

पुत्रदुःखं यथाध्यस्तं पित्राऽदुःखे स्व आत्मनि ।
अहंकर्ता तथाऽध्यस्तो नित्यादुःखे स्व आत्मनि ॥ २० ॥
सोऽध्यासो नेति नेतीति प्राप्तवत्प्रतिषिध्यते ।
भूयोऽध्यासविधिः कश्चित्कुतश्चिन्नोपपद्यते ॥ २१ ॥
आत्मनीह यथाऽध्यासः प्रतिषेधस्तथैव च ।
मलाध्यासनिषेधौ खे क्रियेते च यथाऽबुधैः ॥ २२ ॥

तत्त्वमस्यादिवाक्यं अपरोक्षाद्वितीयब्रह्मात्मज्ञानद्वारा तदज्ञानं तदध्यस्तं च दुःखित्वादिसंसारं निवर्तयतीति वक्तुमज्ञानाध्यस्तं दुःखादीत्यत्र दृष्टान्तमाह—पुत्रेति ।

अदुःखे स्वरादिदुःखरहित इत्यर्थः । दार्ष्टान्तिकमाह—अहंकर्तेति । नित्यादुःखे सदा दुःखादिसंसाररहिते स्वे स्वरूपे आत्मनि निरुपाधिके अहंकर्ता साभासान्तःकरणाविविक्तो दुःखादिधर्मकोऽविवेकलक्षणयाऽविद्यया तथाऽध्यस्त इत्यर्थः । 'अहंकर्त्रा' इति पाठे 'स्व आत्मनि' इत्यत्र दुःखादिरिति शेषः ॥ २० ॥

आत्मनो ब्रह्मस्वभावाज्ञानेनाध्यस्तः संसारस्तत्स्वभावज्ञानमात्रात् "नेति नेति"[1], "तत्त्वमसि"[2] इति च शास्त्रोत्थान्निवर्तते, तदात्मनः सर्वक्रियाधिकारनिवृत्तेः सुषुप्ताविव पुनरध्यासबीजाभावात्कृतकृत्यस्य न प्रसंख्यानविध्यवसर इति फलितमाह—सोऽध्यास इति ।

प्राप्तवदिति वतिप्रयोगाद्वस्तुवृत्त्या प्राप्त्यभावादारोपितत्वं द्रढयति ॥२१॥

नन्वविषये ब्रह्मात्मनि विषयधर्माणां दुःखित्वादीनां कथमध्यासः संभाव्यते, यतः पुरोऽवस्थिते विषयभूते शुक्तिकादौ रजताद्यध्यासो दृष्ट इत्याशङ्क्य व्यभिचारान्नैवं नियम इत्याह—आत्मनीति ।

---

(१) बृ. उ. २. ३. ६. (२) छां. उ. ६. ८. ७

प्राप्तश्चेत्प्रतिषिध्येत मोक्षोऽनित्यो भवेद्ध्रुवम् ।
अतोऽप्राप्तनिषेधोऽयं दिव्यग्निचयनादिवत् ॥ २३ ॥

यथा देहव्यतिरिक्तात्मवादिनामात्मनीह पुरःस्थिते देहजरामरणाद्यध्यासस्तत्प्रतिषेधश्च, यथा चेन्द्रियाविषयेऽपि खे मलाद्यध्यासनिषेधावबुधैः क्रियेते, तथैव च प्रत्यगात्मनि ब्रह्मण्यविषये संसाराध्यासनिषेधौ स्यातामित्यर्थः । 'आत्मनीह तथाध्यासः' इति पाठे दृष्टान्तदार्ष्टान्तिकपरतयोत्तरार्धपूर्वार्धौ स्पष्टार्थौ । अधिष्ठानस्वरूपमात्रस्फुरणमध्यासेऽपेक्ष्यते, न विषयत्वेन स्फुरणं; तदिह स्वप्रकाशे आत्मनि स्वतःसिद्धमिति नानुपपत्तिरिति भावः ॥ २२ ॥

प्राप्तवत् प्रतिषिध्यत इत्युक्तं प्रपञ्चयति—प्राप्तश्चेति ।

प्रमाणसिद्धश्चेत्संसारः प्राप्तवत्प्रतिषिध्येत, तर्हि संसारबन्धनिवृत्तिरूपस्य मोक्षस्यागन्तुकत्वाद्ध्रुवं निश्चितं मोक्षोऽनित्यो भवेत् । परमार्थवृत्त्याऽऽत्मगतस्य बन्धस्य परमार्थत एव निवृत्तौ तस्यात्मनोऽवस्थान्तरापत्त्या विकारित्वादनित्यत्वमावश्यकं, तथाऽनादिभावरूपस्य बन्धस्य परमार्थत्वे तन्निवृत्तिरेवासंभाविनी । सादित्वाभ्युपगमे तु तस्यात्मनैव कृतत्वान्निवृत्तसजातीयस्य पुनस्तस्मिन् पूर्ववदुत्पत्त्युपपत्तेरनित्यो मोक्षः प्रसज्येतैवेति बन्धस्याविद्यकत्वमवश्यमेष्टव्यम् । तस्य च ज्ञानादेव निवृत्तेर्निरर्थकं प्रसंख्यानमित्यभिप्रेत्योपसंहरति—अत इति । यथा "नान्तरिक्षे न दिव्यग्निश्चेतव्यः" इति पृथिव्यामिवाग्निचयनमन्तरिक्षाद्यावारोप्याप्राप्तमेव प्रतिषि-

(१) तै. सं. ५. २. ७. अयमभिसंधिः—प्रसक्तं हि सर्वत्र निषेध्य, नाप्रसक्तम् । यत्तु क्वचिदप्रसक्तस्यापि निषेधः, यथा—" नान्तरिक्षे न दिवि " इत्यत्र, तत्र गत्यन्तरं नास्ति । न च तत्रापि निषेधपरत्वं, अर्थवादो ह्ययं रुक्मोपधानस्य, " रुक्ममुपदधाति " इत्यनेनैकवाक्यत्वात् । तस्माद्यथाकथंचन तत्स्तुतावेव तात्पर्यम् । अत्र तु द्वैतनिषेधपरत्वमिति वैषम्यम् । तदिहापि प्रसक्तद्वैतप्रपञ्चनिषेधपरत्वं युक्तं, नाप्रसक्तेश्वरनानात्वनिषेधपरत्वमिति ।

संभाव्यो गोचरे शब्दः प्रत्ययो वा न चान्यथा ।
न संभाव्यौ तदात्मत्वादहंकर्तुस्तथैव च ॥ २४ ॥
अहंकर्त्रात्मनि न्यस्तं चैतन्ये कर्तृतादि यत् ।
नेति नेतीति तत्सर्वं साहंकर्त्रा निषिध्यते ॥ २५ ॥

ध्यते, तथा संसारबन्धरहित एवात्मनि तदारोपनिषेधाविति दृष्टान्तेनाह—दिव्यधीति । आदिपदादाकाशमालिन्यं लौकिकं गृह्यते ॥ २३ ॥

आत्मनि बन्धसंबन्धबोधकप्रमाणाभावादपि न तत्र बन्धस्य सत्यताप्राप्तिरस्तीत्याह—संभाव्य इति ।

*अयमर्थः*—आत्मनि बन्धसंबन्धबोधकं प्रमाणं शब्दः, प्रमाणान्तरं वा सर्वथापि नोपपद्यत इत्याह—शब्दः प्रत्ययो वेति । प्रत्ययः प्रमाणान्तरजन्यः । शब्दो वा प्रत्ययो वा लोके गोचरे विषये संभाव्यः संभावनायोग्यः, न चान्यथा—विषयत्वायोग्ये । तथा च षष्ठीजातिगुणक्रियादिशब्दप्रवृत्तिनिमित्तरहितस्यात्मनो न शब्दगोचरत्वं संभाव्यते, येनायमात्मा संसारीति बोधः शब्दादुत्पद्येतेति । तथा रूपादिहीनत्वान्न बाह्येन्द्रियवर्गस्तस्मिन् क्रमते । अत एव न तत्स्वरूपसंबन्धतया लिङ्गविशेषाग्रहणादनुमानार्थापत्ती तस्मिन् संभवतः, अवयवाद्यभावान्नोपमानं, भावरूपत्वादेव नानुपलब्धिरपीति प्रतीतिमात्रं परिशिष्यते—इति न प्रमाणसिद्धो बन्धसंबन्धः—इयतो न संभाव्यावात्मन्यपि शब्दप्रत्ययाविति । किंच—शब्दप्रत्यययोः प्रमाणत्वाभिमतयोः, तथैव चाहंकर्तुः प्रमातृत्वाभिमतस्य च—तदात्मत्वाद्ब्रह्मात्मत्वात्—न तद्गोचरत्वमुपपद्यते । न ह्यागन्तुकयोः शब्दप्रत्यययोः, अहंकर्तुर्वा चिदात्मनः पृथक्स्वरूपमस्ति, स्वात्मनि तु क्रियानुपपत्तिरित्यर्थः ॥ २४ ॥

तस्मादध्यस्तनिषेध एव वक्तव्य इति सिद्धमित्याह—अहंकर्त्रेति ।

उपलब्धिः स्वयंज्योतिर्दृशिः प्रत्यगसदाक्रियः ।
साक्षात्सर्वान्तरः साक्षी चेता नित्योऽगुणोऽद्वयः ॥ २६ ॥
संनिधौ सर्वदा तस्य स्यात्तदाभोऽभिमानकृत् ।
आत्मात्मीयं द्वयं चातः स्यादहंममगोचरः ॥ २७ ॥

चैतन्ये चित्स्वरूप आत्मनि यदहंकर्त्रा साभासान्तःकरणाविवेकेन कर्तृत्वादि न्यस्तमारोपितं, तत्सर्वं, नेति नेतीति निषिध्यते साहंकर्त्रा अहंकर्त्रा सहेत्यर्थः ॥ २५ ॥

अध्यस्तनिषेध एव चेच्छास्त्रेण क्रियते, कथं तर्ह्यात्मनः स्वरूपोपलब्धिरित्यत आह—उपलब्धिरिति ।

अनुपलब्ध्यादिस्वरूपत्वे प्रमाणाभावादितरत्र च साक्षादित्यादिनोत्तरार्धसूचितश्रुतीनां प्रमाणत्वात्स्वप्रकाश एवात्मा सदा स्वतःसिद्ध इत्यर्थः ॥ २६ ॥

नन्वात्मात्मीयमिति च द्वयमहंममप्रत्ययगोचरत्वेन प्रसिद्धं, तथा सति कथमात्मा स्वतःसिद्धः?—इत्याशङ्क्योपाधिवशात् तथा प्रसिद्धिरित्याह—संनिधाविति ।

अभिमानकृदहंकारस्तस्य चिदात्मनः सर्वदा संनिधौ सति तदाभश्चैतन्यप्रकाशयुक्ततया तदाकारः स्यात्, अतो हेतोरात्मात्मीयं द्वन्द्वं च स्यात्—अहं ममेति व्यवहारगोचर इत्यर्थः । तथाच साभासान्तःकरणतद्वृत्त्यविवेकादात्मा अहमिति ममेति च भासमानोऽपि स्वतःसिद्ध एव स्वभावत इति भावः ॥ २७ ॥

---

( १ ) बृ. उ. ३. ४. १, २; ३. ५. १. ( २ ) सूचित'—पाठः

जातिकर्मादिमत्त्वाद्धि तस्मिञ्शब्दास्त्वहंकृति ।
न कश्चिद्वर्तते शब्दस्तदभावात्स्व आत्मनि ॥ २८ ॥
आभासो यत्र तत्रैव शब्दाः प्रत्यग्दृशि स्थिताः ।
लक्षयेयुर्न साक्षात्तमभिदध्युः कथंचन ॥ २९ ॥
न ह्यजात्यादिमान्कश्चिदर्थः शब्दैर्निरूप्यते ॥ ३० ॥

एवमहंप्रत्ययादेरन्यविषयत्वोपपादनेन 'संभाव्यो गोचरे शब्दः' इति श्लोकोक्तं प्रत्ययागोचरत्वमात्मनः प्रतिपादितम् । इदानीं शब्दस्यापि विषयान्तरं दर्शयंस्तदगोचरत्वमुपपादयति—जातीति ।

तस्मिन्नहंकृति अहंकारे साभासे हि निश्चितं जातिकर्मादिशब्दप्रवृत्तिनिमित्तवत्त्वाच्छब्दाः प्रवर्तन्ते, तदभावात्प्रवृत्तिनिमित्तजात्याद्यभावात् स्वे स्वरूपभूते आत्मनि निरुपाधिके कश्चिदपि शब्दो न प्रवर्तते तं विषयीकुर्वन्नित्यर्थः । अत आत्मा स्वतःसिद्ध इति भावः ॥ २८ ॥

स्वतःसिद्धस्वरूप आत्मनि प्रवृत्तिनिमित्तजात्याद्यभावात् कश्चिदपि शब्दो न प्रवर्तते चेत्, कथं तस्य वेदान्तवेद्यतयौपनिषदत्वमुद्धुष्यते?—इत्यत आह—आभास इति ।

यत्राहंकाराद्यावाभासश्चैतन्यप्रतिबिम्बोदयः, तत्रैवाभासाविविक्तऽन्तःकरणादौ वाचकत्वेन स्थिता आत्मादिशब्दाः प्रत्यग्दृशि प्रत्यक्तया भासमानं दृशिमात्मानं शुद्धं लक्षयेयुर्लक्षणया ज्ञापयेयुः, नतु तं साक्षादभिदध्युः कथंचन विशेषणादिप्रकारेणापीत्यर्थः । अतो नौपनिषदत्वप्रसिद्धिविरोध इति भावः ॥ २९ ॥

कथं नाभिदध्युरित्यत्र हेतुमाह—न हीत्यर्धेन ॥ ३० ॥

---

(१) १८. २४.

आत्माभासो यथाहंकृदात्मशब्दैस्तथोच्यते ।
उल्मुकादौ यथाऽयर्थाः परार्थत्वान्न चाञ्जसा ॥ ३१ ॥
मुखादन्यो मुखाभासो यथाऽऽदर्शानुकारतः ।
आभासान्मुखमप्येवमादर्शाननुवर्तनात् ॥ ३२ ॥

ननु लक्षणयाऽपि यत्र शब्दस्य तात्पर्यं, स एव शब्दार्थः। तथा चात्मादिशब्दानामहंकारातिरिक्ते प्रत्यगात्मनि चेद्वृत्तिः, कथं तर्हि लोका अहंकारादावात्मशब्दं प्रयुञ्जते ?–इत्यपेक्षायामुपचारादिति सदृष्टान्तमाह—आत्माभास इति श्लोकेन ।

अहंकृदहंकारो वस्तुतोऽनात्माप्यात्माभास आत्मवदस्मत्प्रत्ययालम्बनो भासते यथा, तथात्मादिशब्दैरपि यथाप्रतिभासमुच्यते । वस्तुगत्या तु शब्दप्रत्यययोः शुद्ध एवात्मनि पर्यवसानम्, यथा अयर्थाः शब्दा दहत्यादयः 'उल्मुकं दहति', 'अयो दहति' इत्युल्मुकादौ प्रयुज्यमाना अञ्जसा साक्षादुल्मुकादौ न च पर्यवस्यन्ति, तेषां दाहाश्रयत्वानुपपत्तेः । दहत्यादिशब्दानां परार्थत्वात्तदभिव्यक्ताग्न्यर्थत्वात्तेऽग्नावेव पर्यवस्यन्ति । तथाऽहंकारस्यात्माभिव्यञ्जकत्वार्थत्वात्तस्मिन्खण्डे परिच्छिन्ने पराधीनप्रकाशे आत्मादिशब्दाश्चित्सदानन्दानन्तार्था अनुपपद्यमाना विचार्यमाणे शुद्ध एव पर्यवस्यन्तीति सर्वमुपपन्नमित्यर्थः ॥ ३१ ॥

'आभासो यत्र' इति श्लोके सिद्धान्तिनाभासोऽङ्गीकृतः, स च भेदविपर्यासविशिष्टतया भासमानः परमार्थोऽपरमार्थो वेति वादिविप्रतिपत्त्या संशये न परमार्थत इति सिद्धान्तं वक्तुं दृष्टान्तमाह—मुखादन्य इति ।

यथा मुखाभासो मुखप्रतिबिम्ब आदर्शानुकारत आदर्शभावाभावयोरनुकारादादर्शान्वयव्यतिरेकानुविधायित्वादिति यावत् । मुखाद्ग्रीवास्थानाद-

(१) १८. २९.

अहंकृत्यात्मनिर्भासो मुखाभासवदिष्यते ।
मुखवत्स्मृत आत्मान्योऽविविक्तौ तौ तथैव च ॥ ३३ ॥
संसारी च स इत्येक आभासो यस्त्वहंकृतिः ।
यस्तु च्छाया स्मृतेरन्यन्मावुर्यादि च कारणम् ॥ ३४ ॥

नागमापायितया स्थितादन्यः, न पुनः स्वरूपेणेति योज्यम् । तथा सति बिम्ब-चेष्टया विनापि प्रतिबिम्बश्चेष्टेतेत्यर्थः । आभासान्मुखमप्येवमन्यदेव कुतः ? आदर्शाननुवर्तनादादर्शनिरपेक्षसत्तास्फुरणयोगादित्यर्थः । तथाच ग्रीवास्थ-स्यैव मुखस्यादर्शे प्रतिबिम्बितस्यादर्शस्थतावैशिष्ट्येन भासमानत्वमेवाभा-सत्वम् । तच्च न सत्यं, मुखवियुक्तादर्शे तिर्यङ्निरीक्ष्यमाणे वा तस्मिन्नदर्श-नात् । नाप्यसत्, अपरोक्षप्रतिभासात् । तस्मादनिर्वचनीय एवाभासः, तस्माच्चान्यन्मुखमिति भावः ॥ ३२ ॥

दार्ष्टान्तिकमाह—अहंकृतीति ।

अहंकृत्यहंकारे आत्मनिर्भासश्चेतनावत्त्वावभासः, मुखाभासवत्—मु-खान्मुखप्रतिबिम्बवत्, शुद्धादात्मनोऽभिन्न इष्यते । आत्मा शुद्ध आभासा-दन्यः स्मृतो ज्ञातः, प्रतिबिम्बान्मुखवदित्यर्थः । मुखस्य मुखाभासस्यादर्शस्य चाभासाश्रयस्य प्रतीतितो भेदेऽपि वस्तुतो भेदाभाववदात्माभासतदाश्र-यान्तःकरणादीनां प्रतिभासतो भेदेऽपि वस्तुतो नात्मातिरिक्तं किंचिद-स्तीति न परमार्थो भेद इत्यभिप्रेत्याह—अविविक्तौ तौ तथैव चेति । तावात्मात्माभासौ तथैव मुखमुखाभासाविव वस्तुतोऽविविक्तौ परमार्थभेद-रहिताविल्यर्थः । चकारादाभासाश्रयान्तःकरणं च न तद्विविक्तमिति योज्यम् ॥ ३३ ॥

एवं चिन्मात्रं तत्रानाद्यविद्यायां तत्कार्ये चाहंकारादौ प्रतिबिम्बितं तदेव चिदात्मस्वरूपमुपाधिस्थतावैशिष्ट्याध्यासवशात्संसारीति स्वमतमुक्त्वा तद्दृ-ढीकरणायैकदेशिमतं दूषयितुमुत्थापयति—संसारीति ।

ब्रह्मैकदेशो विकारो वा तदाभासाश्रयः परे ।
अहंकर्तैव संसारी स्वतन्त्र इति केचन ॥ ३५ ॥

यस्त्वहङ्कृत्याभासोऽस्माभिः पृथगुक्तः, स एव संसारीत्येके मन्यन्त इत्यर्थः । नन्वाभासस्यावस्तुत्वात्कथं तस्य बन्धमोक्षभागितया संसारित्वमित्याशङ्क्य, आभासशब्देन चिच्छायाया अभिप्रेतत्वात्, तस्याश्च वस्तुत्वात्, नानुपपत्तिरित्यभिप्रेत्याह—वस्तु च्छायेति । छाया वस्तु-परमार्थो 'नाक्रामेत्कामतश्छायां गुर्वादेः' इति स्मृतेरिति योजना । तथा च याज्ञवल्क्यः—

'देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियः ।
नाक्रमेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनादि च ॥' इति ।

न केवलं स्मृतिवचनादेव छायाया वस्तुत्वावगमोऽस्ति, अन्यच्च कारणमाह—माधुर्यादि—छायायामासीनस्य सुखमाधुर्योपलम्भे शैत्योपलम्भश्चेत्यर्थः ॥३४॥

पुनरन्यदर्शिमतत्रयमाह—ब्रह्मैकदेश इति ।

ब्रह्म चित्सदानन्दपरमात्मनः एकदेशः संसारी "ममैवांशो जीवलोके जीवभूतः सनातनः ।" इति स्मृतेरिति पक्षे । अग्निविस्फुलिङ्गदृष्टान्तेन 'सर्वे एत आत्मानो व्युच्चरन्ति" इति श्रुतेः परमात्मनो विकारः संसारीति अपरे । परे तु तदाभासाश्रयः चिदात्माभासविशिष्टोऽहंकार एव संसारी "तन्मनो दिश दिशः पतित्वा" इतिश्रुतेरित्याहुरित्यर्थः । सांख्यादिमतमाह—अहं कर्तैवेति । स्वतन्त्रो न परमात्मांशादिरूप इत्यर्थः ॥३५॥

---

(१) मनु स्मृ ४ १३० (२) आचाराध्याये ६ १५२ (३) भ गी। १५ ७ (४) बृ उ २ १ २० माध्यन्दिनपाठः । "सर्वाणि भूतानि व्युच्चरन्ति"—इति काण्वपाठः । (५) छा उ ६. ८ २

अहंकारादिसंतानः संसारी नान्वयी पृथक् ।
इत्येवं सौगता आहुस्तत्र न्यायो विचार्यताम् ॥ ३६ ॥
संसारिणां कथा त्वास्तां प्रकृतं त्वधुनोच्यते ।
मुखाभासो य आदर्शे धर्मो नान्यतरस्य सः ।
द्वयोरेकस्य चेद्धर्मो वियुक्तेऽन्यतरे भवेत् ॥ ३७ ॥

बौद्धमतमाह—अहंकारादीति ।

संतानोऽविरलोदयतयाऽविच्छिन्नानि क्षणिकज्ञानान्येवात्मा संसारी, न तत पृथक् अन्वय्येको विज्ञानोत्पत्तिविनाशद्रष्टाऽस्तीत्येवं सौगता आहुरित्यर्थः । एवमुक्तेषु पक्षेषु—वस्तुविषयत्वाद्विरोधाच्च—विकल्पसमुच्चययोरसंभवात्, अन्यतमस्यैव कस्यचिदुपादेयत्वम्,—अथवाऽस्मदुक्तस्य ब्रह्मात्मविद्ययाऽहंकारादिगताभासाविवेकात्संसारीत्येतस्य, इति निर्धारय न्यायो विचार्यतामित्याह—तत्रेति ॥ ३६ ॥

प्रासङ्गिकीं संसारिचिन्तां हित्वा प्रकृतमाभासनिरूपणं प्रतिजानीते—संसारिणामिति ।

स्पष्टम् । प्रकृतमाभासमेव निरूपयन्नादौ मुखाभासं दृष्टान्तत्वेनापरमार्थमुक्तं विशदयति—मुखाभास इति । योऽयमादर्शे मुखाभासो दृश्यते, स किं मुखादर्शयोरन्यतरस्य यस्य कस्यचिद्धर्मः, किंवा मुखस्यैव धर्मः, अथवा द्वयोरपि धर्मो वस्त्वन्तरं किंचित्[1]?—इति विकल्प्याद्यं निराकरोति—धर्मो नान्यतरस्य स इति । एतदेव स्पष्टयति—द्वयोर्मध्ये एकस्यान्यतरस्य चेदाभासो धर्मः स्यात्, तदा वियुक्तेऽन्यतरे सति दर्पणवियुक्ते मुखे तद्गतरूपादिवद्दर्शनगोचरो भवेत्, मुखवियुक्ते वा दर्पणे दृश्यो भवेत्, न चैवमस्ति, अतो नान्यतरस्य धर्म इत्यर्थः ॥ ३७ ॥

---

(१) क्वचित्—पाठः ।

मुखेन व्यपदेशात्स मुखस्यैवेति चेन्मतम् ।
नादर्शानुविधानाच्च मुखे सत्यविभावतः ॥ ३८ ॥
द्वयोरेवेति चेत्तन्न द्वयोरेवाप्यदर्शनात् ।
अदृश्यस्य सतो दृष्टिः स्याद्राहोश्चन्द्रसूर्ययोः ॥ ३९ ॥
राहोः प्रागेव वस्तुत्वं सिद्धं शास्त्रप्रमाणतः ।
छायापक्षे त्ववस्तुत्वं तस्य स्यात्पूर्वयुक्तितः ॥ ४० ॥

कल्पान्तरमुत्थापयति—मुखेनेति ।

दूषयति—नेति । यद्यपि मुखाभास इति मुखेन व्यपदिश्यते, तथापि न मुखधर्म आभासः आदर्शानुविधानात्, मुखैकधर्मत्वे तदयोगात् । किंच सत्यपि मुखे दर्पणवियुक्तेऽभिभावतोऽदर्शनादित्यर्थः ॥ ३८ ॥

तृतीयं कल्पमनूद्य प्रत्याह—द्वयोरेवेति चेदिति ।

द्वयोरप्यदर्शनादेवेति संबन्धः । नहि मुखादर्शयोर्वियुक्तयोराभासो दृश्यते, नापि संयुक्तयोरयं धर्मो यथाकथंचन संयुक्तयोरपि तद्दर्शनप्रसङ्गात्न तथा दृश्यते, तस्मान्न द्वयोर्धर्म इत्यर्थः । तर्ह्यस्तु परमार्थवस्त्वन्तरमेवाभास इति चतुर्थं पक्षं दृष्टान्तेन शङ्कते—अदृश्यस्येति । सतो विद्यमानस्यैव सर्वैः करणैरदृश्यस्य राहोश्चन्द्रे सूर्ये चोपाधौ कदाचिद्दृष्टिर्दर्शनं यथा, तथा मुखाभासस्यापि वस्तुभूतस्य सतो मुखसन्मुखदर्पणोपाधौ दर्शनं स्यादित्यर्थः ॥ ३९ ॥

वैषम्येण दूषयति—राहोरिति ।

चन्द्राद्युपरागात्प्रागेव ज्योतिःशास्त्रप्रमाणतः, पुराणादिशास्त्रप्रमाणतो वा राहोः सैंहिकेयस्य वस्तुत्वं सिद्धं निश्चितं, नेह तथा निश्चायकं प्रमाण-

---

(१) सत्यप्यमावतः । सत्यप्यभासतः—पाठौ. (२) सतः दृ°—पाठः ।

छायाक्रान्तेर्निषेधोऽयं न तु वस्तुत्वसाधकः ।
न ह्यर्थान्तरनिष्ठं सद्वाक्यमर्थान्तरं वदेत् ॥ ४१ ॥
माधुर्यादि च यत्कार्यमुष्णद्रव्याद्यसेवनात् ।
छायाया न त्वदृष्टत्वादपामेव च दर्शनात् ॥ ४२ ॥

मस्तीति शेषः । नहि मुखदर्पणयोः संबन्धात्पूर्वमूर्ध्वं वा तद्व्यतिरिक्तवस्तुता मुखाभासस्य केनचित्प्रमाणेन क्वापि संभावितेत्यर्थः । राहोर्वस्तुत्वमङ्गीकृत्य दार्ष्टान्तिकाननुगुणत्वमुक्तं, इदानीं तस्यापि नास्ति वस्तुत्वमित्याभासस्य वस्तुत्वे नायं दृष्टान्त इत्याह—छायापक्षे त्विति । भूम्यादिच्छाया राहुरिति केषांचित्पक्षः, तस्मिन् छायापक्षे तु तस्य राहोरवस्तुत्वं स्यात्, 'मुखाभासो य आदर्शे' इत्यादौ पूर्वोक्तयुक्तितो युक्तिसंचारादित्यर्थः॥४०॥

'वस्तु च्छाया स्मृतेः' इत्यत्र छायाया वस्तुत्वे स्मृतिः प्रमाणमित्युक्तं तत्राह—छायाक्रान्तेरिति । न त्वित्यत्र छायाया इति शेषः । ननु छायालङ्घनप्रतिषेधपरमपि वचनं तस्याः वस्तुत्वमपि बोधयिष्यतीति चेत्, तत्र वक्तव्यं—साक्षादेव ? उतार्थादिति ? नाद्य इत्याह—न हीति । एकस्य वाक्यस्योभयार्थत्वे वाक्यभेदप्रसङ्गादित्यर्थः । न द्वितीयः । निषेधस्य प्राप्तिमात्रसापेक्षत्वान्निषेध्यविषयादेर्वस्तुत्वाभावे निषेधानुपपत्तिरित्यत्र नियामकाभावादिति द्रष्टव्यम् ॥ ४१ ॥

यदप्युक्तं माधुर्यादिकार्यदर्शनादर्थक्रियाकारित्वेन छायाया वस्तुत्वमिति, तदप्यन्यथासिद्धमित्याह—माधुर्यादीति ।

छायायामुपविष्टस्य यन्माधुर्यादिकार्यं दृश्यते, तदुष्णद्रव्याद्यसेवनान्निमित्तात्, न तु छायाया हेतुभूतायास्तन्माधुर्यादिकार्यम् । कुतः ? अदृष्ट-

(१) १८. ३७. (२) १८. ३४. (३) 'भावेऽपि—पाठः ।

**आत्माभासाश्रयाश्चैवं मुखाभासाश्रया यथा ।**
**गम्यन्ते शास्त्रयुक्तिभ्यामाभासासत्त्वमेव च ॥ ४३ ॥**

दरात्—तातप्यमानशिलाकूटच्छायायां माधुर्यादेरदर्शनादपामेव च दर्शनादयं धर्मस्तास्वेव, अव्यभिचारात् । अतः छायायामुपविष्टस्य निवृत्ततापसंसर्गस्य स्वाभाविकस्यो(?को)दकमाधुर्याभिव्यक्तौ छाया मधुरेति विभ्रम इत्यर्थः ॥ ४२ ॥

तदेवं यथा मुखं, तदाभासः, तदाश्रयश्च—इत्येते त्रयो व्यवहारदृष्ट्या विभक्ता अवभासन्ते, न परमार्थदृष्ट्या; तथात्मा, तदाभासः, तदाश्रयश्च—इत्यर्थत्रयं मिथो विलक्षणं गम्यते व्यवहारदृष्ट्येति दार्ष्टान्तिकमाह—आत्माभासाश्रयाश्चैवमिति ।

आत्मा त्वंपदलक्ष्यश्चिद्धातुः । तस्यानाद्यविद्यातत्कार्यप्रतिबिम्बिततया तदुपाधिस्थत्ववैशिष्टयं जीवत्वमाभासः । अविद्यातत्कार्योपाधिराश्रय इति त्वंपदार्थः । शास्त्रयुक्तिभ्यामिति । "रूपं रूपं प्रतिरूपो बभूव", "इन्द्रो मायाभिः पुरुरूप ईयते", "अनीशया शोचति मुह्यमानः" इत्यादिश्रुतेः, "एको वशी सर्वभूतान्तरात्मैकं रूपं बहुधा यः करोति" इत्यादिश्रुतेश्च; तथा बुद्धयादेर्विषयान्तस्यागमापायिनो दृश्यस्य नित्यसिद्धसाक्ष्यात्मनन्यथ्यासव्यतिरेकेण स्फुरणसत्तयोरनुपपत्तेरित्यादियुक्तेश्च प्रत्यगात्मन एकस्यैव सत्त्वं, आभासादेरसत्त्वं, परमार्थसत्त्वाभावश्च गम्यते निश्चीयते इत्यर्थः ॥ ४३ ॥

---

(१) बृ. उ. २. ५. १९.; कठ. उ. ५. ९,१०. (२) बृ. उ. २. ५. १९.; ऋ. सं. ६. ४७. १८.; जैमि. उ. ब्रा. १. ४४. १. (३) मुं. उ. ३. १. २; श्वे. उ. ४. ७. (४) कठ. उ. ५. १२.

न दृशेरविकारित्वादाभासस्याप्यवस्तुतः ।
नाचितित्वादहंकर्तुः कस्य संसारिता भवेत् ॥ ४४ ॥
अविद्यामात्र एवातः संसारोऽस्त्वविवेकतः ।
कूटस्थेनात्मना नित्यमात्मवानात्मनीव सः ॥ ४५ ॥

नन्वेवं सति त्वन्मते संसारमोक्षयोराश्रयाभावादनुपपत्तिरेव, नह्यात्म-तदाभासतदाश्रयाणामन्यतमस्य, मिलितानां वा, संसाराद्याश्रयत्वं घटत इति शङ्कते—न दृशेरिति ।

संसारो नाम ज्ञातृत्वकर्तृत्वभोक्तृत्वादिलक्षणो विकाररूप उपचयः, तदात्यन्तिकापचयश्च मोक्षः । तथा च ताभ्यां क्रमेण संबध्यमानो विकारी स्यात्, तत्र दृशेश्चैतन्यैकरसस्यापि न संसारिता भवेदिति संबन्धः । तत्र हेतुः—अविकारित्वादिति । कूटस्थत्वादित्यर्थः । तथाऽऽभासस्यापि न संसारिता भवेदिति पूर्वनकारमादायान्वयः । तत्र हेतुः—अवस्तुत इति । पूर्वोक्तयुक्त्या तस्यावस्तुत्वनिश्चयादवस्तुनः शून्यस्य न कोऽप्यतिशयसंभव इत्यर्थः । अहंकर्तुः अहंकारस्याभासाश्रयत्वेनाभिमतस्य अचितित्वाज्जड-त्वान्न संसारिता भवेत्, न हि ज्ञातृत्वसुखदुःखादिभोक्तृत्वस्वरूपस्य संसा-रस्य जडाश्रयत्वसंभवः । अतस्त्वन्मते कस्य संसारिता भवेत्, मोक्षो वेति च योज्यम् । न कस्यापीति वदतोऽनुभवविरोध इत्यभिप्रायः ॥ ४४ ॥

सिद्धान्ती, यद्येवमनिरूपिताश्रयौ संसारमोक्षौ, तर्हि मा भूतां परमार्थौ कस्यापि, इति परिहरति—अविद्येति ।

यत एवं, अतः संसारोऽविद्यामात्र एव भ्रान्तिमात्र एव स्वप्नवदस्तु । अविवेकत आत्मस्वरूपाविवेकात्संसार आत्मनीवात्मधर्म इवावभासत इति योजना । अवस्तुभूतस्यात्मन्यपरोक्षतया संदिति प्रतिभासे निमित्तमाह—कूटस्थेनेति । तत्राध्यस्तत्वात्तत्सत्तया सत्तावानित्यर्थः । नित्यमित्यन्याधी-नात्मवतस्तत्राध्यस्ततां सूचयति ॥ ४५ ॥

रज्जुसर्पो यथा रज्ज्वा सात्मकः प्राग्विवेकतः ।
अवस्तुसन्नपि ह्येष कूटस्थेनात्मना तथा ॥ ४६ ॥
आत्माभासाश्रयश्चात्मा प्रत्ययैः स्वैर्विकारवान् ।
सुखी दुःखी च संसारी नित्य एवेति केचन ॥ ४७ ॥
आत्माभासापरिज्ञानाद्याथात्म्येन विमोहिताः ।
अहंकर्तारमात्मेति मन्यन्ते ते निरागमाः ॥ ४८ ॥

आत्मसत्तया सत्तावानात्मधर्म इव भासते संसार इत्येतद्दृष्टान्तेन स्पष्टयति—रज्जुसर्पो यथेति ।

स्पष्टार्थ ॥ ४६ ॥

मतान्तरमाश्रित्य कल्पनालाघवेन शङ्कते—आत्माभासाश्रय इति ।

चकार एवकारार्थ । आत्मैवात्माभासाश्रय आत्माभासत्वाभिमतस्य जीवत्वस्याश्रय, अत स एव स्वै स्वधर्मभूतै प्रत्ययैर्विकारवान्सुखी दुःखी चेत्येव ससारी भवति । तथापि नित्य एव, तरङ्गादिभिर्विक्रियमाणस्यापि समुद्रस्य स्थैर्यदर्शनात् । अत आभासतदाश्रयात्मना भेदकल्पनात्—तदविवेककल्पनात्—तद्वशाद्वाऽऽत्मनि ससारकल्पना च गुर्वी, आत्मैव ससारीति कल्पना लघीयसीति केचन मन्यन्त इत्यर्थ ॥ ४७ ॥

उक्त पुरस्तादस्माभि 'सभाव्यो गोचर शब्द'[1] इत्यत्रात्मनि ससारित्वग्राहक प्रमाण नास्तीति तत्र विस्मर्तव्य त्वयेत्यभिप्रेत्योत्प्रेक्षामात्रमूलैवैषा कल्पना, न प्रमाणमूलेति परिहरति—आत्माभासापरिज्ञानादिति ।

आत्मा परमार्थ कूटस्थनित्य, आभासस्तच्छायारूपोऽन्यत्र स-

---

(१) १८ २४.

संसारो वस्तुसंस्तेषां कर्तृभोक्तृत्वलक्षणः ।
आत्माभासाश्रयाज्ञानात् संसरन्त्यविवेकतः ॥ ४९ ॥

भ्रान्तो मिथ्याभूतः—इत्यात्माभासयोर्याथात्म्येनापरिज्ञानान्मोहिताः सन्तोऽहंकर्तारं साभासान्तःकरणमेवात्मेति ते मन्यन्ते, यतो निरागमाः आगमरहस्यपरिचयशून्या इत्यर्थः । "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्", "साक्षी चेता केवलो निर्गुणश्च", "कृत्स्नः प्रज्ञानघन एव", "अत्रायं पुरुषः स्वयंज्योतिः" इत्यादिनित्यशुद्धत्वादिपरश्रुतिसंदर्भं, तथा "अनीशया शोचति मुह्यमानः", "अविद्यायामन्तरे वर्तमानाः", "अनृतेन हि प्रत्यूढाः" इत्यादिश्रुतिसंदर्भं चात्मन आविद्यकसंसारित्वानुवादपरं ते न पश्यन्ति, अतः स्वोत्प्रेक्षया यत्किंचिदेव वदन्तीत्यभिप्रायः ॥ ४८ ॥

मोक्षोऽप्येषां दुर्लभ इत्याह—संसार इति ।

तेषां मते संसारो वस्तुसन् परमार्थसन् भवेत्, तथा च "नासतो विद्यते भावो नाभावो विद्यते सतः" इति नियमस्मृतेरविनाशी संसार इति तेषां मते मोक्षासिद्धिरित्यर्थः । यदि मोक्षाप्राप्तिभयात्संसारस्यावस्तुत्वं तेऽपि मन्येरन्, तर्ह्यस्मदुक्तप्रकार एव स इत्यनुजानाति—आत्माभासाश्रयाज्ञानादिति । आत्मादित्रयाणां तत्त्वाज्ञानादविवेकतो भेदाग्रहात्संसरन्तीति योजना ॥ ४९ ॥

---

(१) श्वे. उ. ६. १९. (२) श्वे. उ. ६. ११. (३) बृ. उ. ४. ५. १३. (४) बृ. उ. ४. ३. ९. (५) मुं. उ. ३. १. २.; श्वे. उ. ४. ७. (६) मुं. उ. १. २. ८. कठ. उ. २. ५. (७) छां. उ. ८. ३. २. (८) परमार्थः इत्यन्यपाठः (९) भ. गी. २. १६.

चैतन्याभासता बुद्धेरात्मनस्तत्स्वरूपता ।
स्याच्चेत्तं ज्ञानशब्दैश्च वेदः शास्तीति युज्यते ॥ ५० ॥
प्रकृतिप्रत्ययार्थौ यौ भिन्नावेकाश्रयौ यथा ।
करोति गच्छतीत्यादौ दृष्टौ लोकप्रसिद्धितः ॥ ५१ ॥

परपक्षे मोक्षहानिं दोषमुक्त्वा स्वपक्षे स्वाभासाभ्युपगमे लाभविशेषमाह—चैतन्येति ।

बुद्धेरन्तःकरणस्य चैतन्याभासता आत्मनश्चैतन्यस्वरूपता च चेत्स्याद्भवेत्, तदा वेदस्तमात्मानं ज्ञानशब्दैर्ज्ञानसत्यानन्तानन्दात्मादिभिः शब्दैः शास्ति प्रतिपादयतीति युज्यते घटत इत्यक्षरार्थः । अयं भावः—प्रकाशस्वभावं वस्तु यत्र प्रतिबिम्ब्यते, तत्र प्रकाशाभासोदयहेतुस्तद्भवति, यथा जले प्रतिबिम्बितः सविता । तथा बुद्धौ प्रतिबिम्बितं चैतन्यं तत्र चित्प्रकाशोदयहेतुर्भवति । ततः साभासाया बुद्धौ गृहीतसम्बन्धैर्ज्ञानादिशब्दैर्वेद आत्मानं लक्षणया बोधयतीति संगच्छते, अन्यथा निर्धर्मके आत्मनि शब्दप्रवृत्त्यनुपपत्तेर्वेदान्तवेद्यता तस्य न सिध्येत्, मानान्तरं च तत्र न क्रमत इति असिद्धिरेवात्मनः स्यादित्याभासाभ्युपगमः श्रुतिस्मृतिन्यायविद्भिः कर्तव्य इति ॥ ५० ॥

यद्यप्येवमाभासाभ्युपगमे वेदप्रवृत्तिरात्मन्युपपद्यते, तथाप्यस्मिन् जानात्यादिशब्दा न प्रवर्तेरन्निति व्यवहारासिद्धिः प्रसज्येतेति शङ्कते,—ननु ज्ञानशब्दो व्युत्पाद्यमान आत्मनि मुख्यां वृत्तिं लभत एव, अतः कथं साभासबुद्धिवाचकः सन् आत्मनि लक्षणया वर्तिष्यत इति कल्प्यत इति वा शङ्कते—प्रकृतीति ।

---

(१) मोक्षक्षतिदो', क्षे हानि-पाठौ ( २ ) 'हेतुर्भवति-पाठः । ( ३ ) कल्प्यते-पाठः ।

नानयोर्द्व्याश्रयत्वं च लोके दृष्टं स्मृतौ तथा ।
जानात्यर्थेषु को हेतुर्द्व्याश्रयत्वे निगद्यताम् ॥ ५२ ॥
आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्च धियः क्रिया ।
उभयं चाविवेकेन जानातीत्युच्यते मृषा ॥ ५३ ॥

प्रकृत्यर्थः क्रिया । प्रत्ययार्थः कर्तृत्वम् । तावुभौ स्वरूपतो भिन्नावेकस्मिन्नाश्रये स्थितौ करोतिगच्छतीत्यादौ लोके दृष्टौ यथा, तथा लोकप्रसिद्धित एव जानातिकरोतीत्यादेरप्यात्मैकाश्रयत्वं युक्तमित्यर्थः ॥ ५१ ॥

यथैकाश्रयत्वमनयोर्दृष्टं, तथा भिन्नाश्रयत्वमपि क्वचित् किं न स्यादित्यत आह—नानयोरिति ।

अनयोः प्रकृतिप्रत्यययोः द्व्याश्रयत्वं न लोकप्रयोगेषु दृष्टं, तथा स्मृतौ व्याकरणरूपायामपि न दृष्टम्, अतो जानात्यर्थेषु द्व्याश्रयत्वाभ्युपगमे को हेतुः ? स निगद्यतामित्यर्थः ॥ ५२ ॥

प्रकृतिप्रत्यययोरेकाश्रयत्वमात्रमस्मन्मते न सङ्गच्छत इत्युच्यते ? किंवा परमार्थतस्तयोरेकाश्रयत्वम् ? तत्र नाद्य इत्याह सिद्धान्ती—आत्माभास इति ।

तुशब्दः शङ्कानिषेधार्थः । आत्माभासो बुद्धिगतः, तिङ्वाच्यः प्रत्ययवाच्यः । धियो बुद्धेः क्रिया वृत्तिरूपा, धात्वर्थः प्रकृत्यर्थः । तथा चात्माभासो बुद्धिश्चेत्युभयं चाविवेकेन परमार्थात्माविवेकेन मृषैव जानातीत्युच्यते । तथा चात्माभासव्याप्तक्रियावद्बुद्ध्यैक्याध्यासादात्मा जानातीत्येकाश्रयत्वावभासः प्रकृतिप्रत्यययोरिहापि नानुपपन्न इत्यर्थः ॥ ५३ ॥

---

(१) तुलय—तै. उ. वार्तिकं २. १. ९०–९४; गद्यप्र. वाक्यानि ७६–८५.

न बुद्धेरवबोधोऽस्ति नात्मनो विद्यते क्रिया ।
अतो नान्यतरस्यापि जानातीति च युज्यते ॥ ५४ ॥
नाऽप्यतो भावशब्देन ज्ञप्तिरित्यपि युज्यते ।
न ह्यात्मा विक्रियामोक्तो नित्य आत्मेति शासनात् ॥ ५५ ॥

द्वितीयं प्रत्याह—न बुद्धेरिति ।

सम्यग्विचार्यमाणे क्रियावत्या बुद्धेरवबोधश्चित्प्रकाशो नास्ति, नाप्यात्मनोऽवबोधस्वभावस्य क्रिया विद्यते, अतो नान्यतरस्यापि जानात्यवगच्छतीति निर्देशो युज्यते । तथाच प्रतीतिमात्रशरणैरारोपिततदैक्यविषयत्वं जानात्यादेराश्रयणीयमिति न लोकव्यवहारविरोधः, स्मृतिविरोधो वा भवतीत्यर्थः ॥ ५४ ॥

यथा—जानातीति ज्ञ इति कर्तृव्युत्पत्त्या बुद्ध्यात्मनोरेकैकस्मिन् जानात्यर्थानुपपत्तिः, नापि मीलितयोस्तदुपपत्तिः, परमार्थतो जडाजडयोरैक्यायोगात्; नाप्यन्यतरसन्निधिनिमित्ता अन्यतरस्मिन्नुभयाश्रयतेति घटते, अध्यासव्यतिरेकेण सन्निधेरनिरूपणात्—तथा ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्यापि ज्ञानशब्दप्रयोग आत्मनि न घटत इत्याह—नाऽप्यत इति ।

भावशब्देन धात्वर्थसामान्यवचनेन ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्यापि ज्ञानशब्दप्रयोग आत्मनि न युज्यते । अत इत्युक्त हेतुं व्यनक्ति—नहीति । क्रियामात्रत्वे पारतन्त्र्येणात्मनोऽनित्यत्वप्रसङ्गः, तचानिष्टं, नित्य आत्मेति श्रुतिशासनादित्यर्थः ॥ ५५ ॥

---

(१) 'मात्र-पाठः । (२) कठ उ. २. १८, ५. १३. मुं. उ. १.६; नृ. उ. ९. इत्यादौ.

न बुद्धेर्बुद्धिवाच्यत्वं करणं न ह्यकर्तृकम् ।
नापि ज्ञायत इत्येवं कर्मशब्दैर्निरुच्यते[1] ॥ ५६ ॥
न येषामेक एवात्मा निर्दुःखोऽविक्रियः सदा ।
तेषां स्याच्छब्दवाच्यत्वं ज्ञेयत्वं चात्मनः सदा ॥ ५७ ॥

यथा जानातीति ज्ञ इति कर्तृव्युत्पत्त्या, ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्या चात्मनि ज्ञानशब्दानुपपत्तिः, तथा ज्ञायतेऽनेनेति करणव्युत्पत्त्या, ज्ञायत इति ज्ञानमिति कर्मव्युत्पत्त्या चात्मनि ज्ञानशब्दप्रवृत्तिर्न युज्यत इत्याह—न बुद्धेरिति ।

बुध्यतेऽनयेति बुद्धिरिति व्युत्पत्त्या बुद्धिशब्दवाच्यत्वं बुद्धेरन्तःकरणस्य स्यात्, नात्मन इति योजना । तत्र हेतुः—करणमिति । करणव्युत्पत्तिपक्षे बुद्धिशब्दवाच्यस्यात्मनः करणत्वापत्तौ कर्त्रन्तराभावादकर्तृकं करणं स्यात् । नहि करणमकर्तृकं क्वचिद्दृष्टमित्यर्थः । तथा ज्ञायते इति ज्ञानमिति-कर्मशब्दैरप्यात्मा न निरुच्यते', न सम्यगुच्यते । स्वस्य स्ववेद्यत्वानुपपत्तेर्ज्ञात्रन्तरस्याभावाच्च न कर्मव्युत्पत्तिरपीहेत्यर्थः । ज्ञायतेऽस्मिन्निति ज्ञानमिति व्युत्पत्त्यन्तरमस्तीति चेत्, तत्र वक्तव्यं—ज्ञेयाधारत्वमात्रं ज्ञानशब्देनेहोच्यते ? ज्ञातृत्वे सति ज्ञेयाधारत्वं वा ? नाद्यः, ज्ञेयघटाद्याधारभूतलादेरपि व्युत्पत्तियोगाज्ज्ञानशब्दाभिधेयत्वप्रसङ्गात् । न द्वितीयः, आत्मनो ज्ञातृत्वस्य निराकृतत्वादित्ययं पक्षोऽतिस्थूल इत्याचार्यैरुपेक्षित इति द्रष्टव्यम् ॥ ५६ ॥

एवं मुख्यया वृत्त्या ज्ञानादिशब्दवाच्यत्वमात्मनो नोपपद्यत इति प्रतिपादिते तथाप्येतत्तुल्यमित्याशङ्क्येष्टापत्त्या परिहरति—न येषामिति ।

येषां मते एक एवात्मा सदा निर्दुःखादिलक्षणोऽभ्युपगतः, तेषामात्मनः

---

(१) निरुच्यते—पाठः ।

यदाहंकर्तुरात्मत्वं तदा शब्दार्थमुख्यता ।
नाशनायादिमत्त्वात्तु श्रुतौ तस्यात्मतेष्यते ॥ ५८ ॥
हन्त तर्हि न मुख्यार्थो नापि गौणः कथंचन ।
जानातीत्यादिशब्दस्य गतिर्वाच्या तथापि तु ॥ ५९ ॥
शब्दानामयथार्थत्वे वेदस्याप्यप्रमाणता ।
सा च नेष्टा ततो ग्राह्या गतिरस्य प्रसिद्धितः ॥ ६० ॥

सदा शब्दवाच्यत्वं ज्ञेयत्वं च न स्यात् परमार्थत इति योजना । यद्वा—आत्मनि मुख्यशब्दप्रवृत्त्यभावमुक्तं व्यतिरेकमुखेनोपपादयति—न यथा मिति । यथा मत एवं एव यथानिर्दिष्ट आत्मा न भवति, तथा शब्दवाच्यत्वं ज्ञेयत्वं चात्मन सदा स्यान्नित्विति योजना । तत्र कर्त्रादित्वुयुक्त सम्भवात्, न त्वकात्मवाद श्रौते तत्सम्भव इत्यर्थान् सिद्धमित्यर्थ ॥ ५७ ॥

तर्ह्यस्तु शब्दार्थमुख्यत्वाय सविकार एवात्मेति शङ्कते—यदेति ।

अङ्ग एतत्पाद्यभिमन्यमानाकारस्यात्मत्वमेव नास्तीति परिहरति—नेति। "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वा" इति श्रुत्वात्मनोऽशनायातीतत्वस्वाभाव्यावगमात्, अशनायादिधर्मवत्त्वादहंकर्तुस्तस्यात्मता नेष्यत इति योजना । अतो ज्ञानादिशब्दा आत्मनि न साक्षात्प्रवर्तन्त इत्याभासद्वारेत्यस्मदुक्ता तथा सिद्धेति भाव ॥ ५८ ॥

नन्वेवमुक्तरीत्या यदि ज्ञानात्यादरात्मन्यन्यत्र च मुख्यता न सम्भवत्, तर्हि वृत्त्यन्तरेणाप्यात्मनि प्रवृत्तिरनुपपन्ना । नहि क्वाप्यमुख्य कचिदुपचर्यत इति सम्भवतीति शङ्कते—हन्त तर्हीति (चतुर्भि)। स्पष्टम् ॥५९॥

मास्तु मुख्याभावाद्गौणोऽपि, तथापि किमिति गतिर्वाच्येति चेत्तत्राह—शब्दानामिति ।

---

(१) बृ उ ३ ५ १

प्रसिद्धिर्मूढलोकस्य यदि ग्राह्या निरात्मता ।
लोकायतिकसिद्धान्तः स चानिष्टः प्रसज्यते ॥ ६१ ॥
अभियुक्तप्रसिद्धिश्चेत्पूर्ववद्दुर्विवेकता ।
गतिशून्यं न वेदोऽयं प्रमाणं संवदत्युत ॥ ६२ ॥
आदर्शमुखसामान्यं मुखस्येष्टं हि मानवैः ।
मुखस्य प्रतिबिम्बो हि मुखाकारेण दृश्यते ॥ ६३ ॥

न केवलं लौकिकशब्दानामेव जानात्यादीनामप्रमाणता, किंतु वेदस्यापीत्यपिशब्दयोजना । लोकसिद्धव्युत्पत्त्यपेक्षत्वाद्वेदबोधकत्वस्येत्यभिप्रायः । सा वेदस्याप्रमाणता नेष्टा । चकाराद्वेदस्यैवात्मनि प्रमाणतेष्टेति समुच्चीयते । अतो वेदप्रामाण्याङ्गीकारलोभादेव गतिर्वाच्येत्यर्थः । तर्हि प्रसिद्धैव गतिः, किमिह वक्तव्यमिति सिद्धान्तिनः शङ्कां गृह्णाति—ततो ग्राह्येति । प्रसिद्धित इति । चेदिति शेषः ॥ ६० ॥

तत्र वक्तव्यं—प्राकृतजनप्रसिद्धया गतिराश्रीयते ? पाणिन्याद्यभियुक्तप्रसिद्धया वा ? तत्राद्यमनूद्य दूषयति—प्रसिद्धिर्मूढलोकस्येति ।

प्राकृतप्रसिद्ध्यभ्युपगमे देहात्मप्रसिद्धेरप्यभ्युपगमान्निरात्मवादाद्यापत्तिरनिष्टा प्रसज्येतेत्यर्थः ॥ ६१ ॥

द्वितीयमनूद्य प्रत्याह—अभियुक्तेति ।

पूर्ववदिति बुद्धेरात्मनो वा ज्ञातृत्वं दुर्निरूपमिति प्रागुक्तदोषप्रसङ्ग इत्यर्थः । यद्येवं तर्ह्यात्मनो गतिशून्यमिव ज्ञातृत्वं वेदोऽनुवदिष्यतीति तत्राह—गतीति । प्रमाणमिति हेतुगर्भं वेदविशेषणम् ॥ ६२ ॥

चिदात्मन्येवौपाधिको जानात्यादिशब्दप्रयोगः संभवतीत्यभिप्रेत्य सिद्धान्ती दृष्टान्तमाह—आदर्शेति ।

---

( १ ) सा···द्य–पाठः । ( २ ) आदर्शे मुखं–पाठः ।

यत्र यस्यावभासस्तु तयोरेवाविवेकतः ।
जानातीति क्रियां सर्वो लोको वक्ति स्वभावतः ॥ ६४ ॥
बुद्धेः कर्तृत्वमध्यस्य जानातीति ज्ञ उच्यते ।
तथा चैतन्यमध्यस्य ज्ञत्वं बुद्धेरिहोच्यते ॥ ६५ ॥
स्वरूपं चात्मनो ज्ञानं नित्यं ज्योतिःश्रुतेर्यतः ।
न बुद्ध्या क्रियते तस्मान्नात्मनाऽन्येन वा सदा ॥ ६६ ॥

आदर्शे दृश्यमानं यन्मुखं तेन सामान्यं समानत्वमेकत्वं मुखस्यादर्शाद्बहिस्स्थितो मानवैरिष्टं हि प्रसिद्धमित्यक्षरार्थः । आदर्शे मुखव्यक्त्यन्तरोत्पादानुपपत्तिसहकृततया मदीयं मुखमिति प्रत्यभिज्ञया बिम्बप्रतिबिम्बभावेनोपाधितो भेदावभासेऽपि मुखैक्यं मानवैरिष्यत एवेत्युक्तं भवति । उक्तमेवैकत्वं स्फुटयति—मुखस्येति ॥ ६३ ॥

यथा कल्पितमुखस्य परमार्थमुखस्य चान्योन्याविवेकान्मलिनं मुखमल्पं वक्रमित्यादिव्यपदेश उपाधिनिबन्धनः, तथाऽऽत्मन्यपि ज्ञातृत्वादिव्यपदेश उपाधिनिबन्धन इत्युपपन्नमिति दार्ष्टान्तिकमाह—यत्रेति ।

अवभास आभासः प्रतिबिम्बभाव इति यावत् ॥ ६४ ॥

यच्छब्दाभ्यामुक्तमर्थं स्पष्टयति—बुद्धेरिति ।

बुद्ध्यात्मनोस्तादात्म्याध्यासे सति, अन्योन्यधर्मसंकरादात्मा जानाति अहं जानामीति च व्यपदेशो भवतीति समुदायार्थः ॥ ६५ ॥

ननु बुध्यादिभिरात्मनि ज्ञानमुत्पाद्यते, ततः कथमिदमुच्यते आत्मचैतन्यं बुद्धावध्यस्यत इति तत्राह—स्वरूपं चेति ।

ज्ञानमात्मनः स्वरूपं "तद्देवा ज्योतिषां ज्योतिः[1]", "आत्मैवास्य

---

(१) बृ. उ. ४. ४. १६.

देहेऽहंप्रत्ययो यद्वज्जानातीति च लौकिकाः ।
वदन्ति ज्ञानकर्तृत्वं तद्वद्बुद्धेस्तथात्मनः ॥ ६७ ॥
बौद्धैस्तु प्रत्ययैरेवं क्रियमाणैश्च चिन्निभैः ।
मोहिताः क्रियते ज्ञानमित्याहुस्तार्किका जनाः ॥ ६८ ॥

ज्योतिः[1]", "अत्रायं पुरुषः स्वयंज्योतिः[2]", "साक्षी चेता[3]" इत्यादिश्रुतेः । अतश्च नित्यमेव यतः, तस्मान्न बुद्धया ज्ञानं क्रियते । आत्मना वान्येन वा चक्षुरादिना ज्ञानं सदा कदापि न क्रियत इत्यर्थः ॥ ६६ ॥

बुद्ध्यात्मनोरन्योन्यधर्माध्यासेनैव व्यवहार इत्युक्तेऽर्थे दृष्टान्तमाह—देहे इति ।

रूपादिमत्त्वेन घटादिवदहंप्रत्ययायोग्येऽपि देहे चेतनाभ्यस्य यथा 'अहं मनुष्यः कृशः स्थूलः' इत्यादिप्रत्ययो दृश्यते, तथा बुद्धेर्जडत्वेन ज्ञातृत्वायोग्यत्वेऽपि चिदाभासव्याप्त्या ज्ञातृत्वमारोप्य जानामीति लौकिका वदन्ति व्यवहरन्ति । दार्ष्टान्तिकमाह—तथात्मन इति । विकाररहितस्याप्यात्मनो विकारिचित्ताविवेकाद्विकारित्वादिव्यपदेशसिद्धिरित्यर्थः[4] । यद्वा—स्थूलदेहे यद्वदहंप्रत्ययो मनुष्योऽहमित्येवमादिरहंप्रत्ययायोग्येऽपि व्यवह्रियते सर्वैः, लौकिकाश्च शास्त्रसंस्काररहिताः 'देवदत्तो जानाति मनुते' इति च देहस्यैव ज्ञातृत्वं वदन्ति, तद्वद्बुद्धेर्ज्ञानकर्तृत्वं, तथाऽऽत्मनो ज्ञानाश्रयत्वं विकारवत्त्वं च व्यवहारास्पदं भवतीत्यर्थः ॥ ६७ ॥

ननु तार्किका ज्ञानस्योत्पत्तिविनाशौ पश्यन्तो ज्ञानमात्मना क्रियत इत्याहुः । तत्कथं नित्यं ज्ञानमात्मस्वरूपमित्युक्तम् ? इत्यत आह—बौद्धैस्त्विति ।

---

(१) बृ. उ. ४. ३. ६. (२) बृ. उ. ४. ३. ९. (३) श्वे. उ. ६. ११.
(४) विकारिचित्तोऽवि'—पाठः । तस्य 'बुद्धिधर्मानुकारिचिदाभासस्य'—इत्यर्थः ।

तस्माज्ज्ञाभासबुद्धीनामविवेकात्प्रवर्तिता: ।
जानातीत्यादिशब्दश्च प्रत्ययो या च तत्स्मृति: ॥ ६९ ॥
आदर्शानुविधायित्वं छायाया अस्यते मुखे ।
बुद्धिधर्मानुकारित्वं ज्ञाभासस्य तथेष्यते ॥ ७० ॥

एवं पूर्वोक्तप्रकारेणात्मबुद्धयोरन्योन्याध्यासात् चित्रिभैः चिच्छायापत्त्या चिदिव भासमानैर्बुद्धिप्रभवैः क्रियमाणैः प्रत्ययैर्वृत्तिविशेषैर्मोहितास्ताकिका ज्ञना ज्ञानं क्रियते जायते इत्याहुर्वदन्ति, तेषा बुद्धयात्माविवेक एवापराध:,न तु ज्ञानं क्रियते। तथा सति प्रत्ययोत्पत्तिविनाशयोरसाक्षिकतया असिद्धिप्रसङ्गादिति भाव: ॥ ६८ ॥

यस्मादेवं विचार्यमाणे प्रमाणसिद्धकौटस्थ्यस्यात्मनो न विकारित्वं प्रामाणिकं, यस्माच्च ज्ञानमात्मस्वरूपत्वश्रवणान्नित्यमेवेति न केनापि क्रियते, यस्माच्च बुद्धिसंसर्ग विनात्मनो न ज्ञातृत्वमुपलभ्यते सुप्तावदर्शनात्, बुद्धिश्च नात्मनः पृथग्ज्ञातृत्वाद्याकारेणोपलभ्यते, तस्मादात्मबुद्धितत्स्थाभासानामविवेकाद्यथाप्रसिद्धमेव व्यावहारिकं बुद्धयात्मनोरेकत्वं गृहीत्वा जानात्यादिव्यपदेश उपपद्यते, न परमार्थतो मुख्यमन्यदालम्बनमस्तीति प्रकृतमुपसंहरति—तस्मादिति ।

जानातीत्यादिशब्दश्च, तदनन्तरभावी तद्विषयः प्रत्ययश्च, या च तत्संस्कारजा स्मृतिः सा चेति त्रयोऽर्थाः ज्ञाभासबुद्धीनामविवेकात् प्रवर्तिता इति योजना ॥ ६९ ॥

ज्ञाभासबुद्धीनामविवेकमूलः सर्वो व्यवहारः, न पारमार्थिक इत्युक्तमर्थं दृष्टान्तेन स्पष्टयति—आदर्शेति ।

छायाया मुखाभासस्य यदादर्शानुविधायित्वं, तन्मुखे अस्यतेऽध्यस्यते यथेति शेषः । तथाऽध्यस्तस्य चिदाभासस्य बुद्धिधर्मानुकारित्वं ज्ञे आत्मनीष्यते—अध्यस्य व्यवह्रियत इत्यर्थः ॥ ७० ॥

बुद्धेस्तु प्रत्ययास्तस्मादात्माभासेन दीपिताः ।
ग्राहका इव भासन्ते दहन्तीवोल्मुकादयः ॥ ७१ ॥
स्वयमेवावभास्यन्ते ग्राहकाः स्वयमेव च ।
इत्येवं ग्राहकास्तित्वं प्रतिषेधन्ति सौगताः ॥ ७२ ॥
यद्येवं नान्यदृश्यास्ते किं तद्वारणमुच्यताम् ।
भावाभावौ हि तेषां यौ नान्यग्राह्यौ सता यदि ॥ ७३ ॥

यस्मादेवं चिदाभासाविविक्ता बुद्धिः, तस्मात्तत्परिणामेषु ग्राहकत्व-प्रतिभाससिद्धिरित्याह—बुद्धेस्त्विति ।

निगदव्याख्यातं पद्यम् ॥ ७१ ॥

एवमाभासविविक्तपदार्थस्वरूपाज्ञानाद्यथा तार्किकाणां व्यामोहः—ज्ञानं क्रियते—इति, तथा बौद्धानामपि बुद्धिव्यतिरिक्तो ग्राहको नास्तीति व्यामोह एवेत्याह—स्वयमेवेति ।

स्वयमेव च प्रत्यया इति शेषः ॥ ७२ ॥

यद्येवं प्रत्ययानां ग्राहकमन्यं स्थिरमनादृत्य प्रत्ययमेव ग्राह्यग्राहकाकारं बौद्धा मन्यन्ते, तर्हि तन्मतस्यानुभवानुसारित्वादाभासानभ्युपगमे कथं ते निराकर्तव्या इत्याशयेन स्वयूथ्यं पृच्छति—यद्येवमिति ।

ते प्रत्यया नान्यदृश्याः, अन्येन साक्षिणा नित्यसिद्धेन न ग्राह्या इति यद्येवं बौद्धा वदन्ति, तन्मतवारणं किमस्ति तदुच्यताम्—इत्युक्ते स्वयूथ्यः प्रत्याह—भावाभावाविति । तेषां प्रत्ययानां यौ भावाभावौ उत्पत्तिविनाशौ सता—स्वतःसिद्धेन साक्षिणा—अन्येन [न] ग्राह्यौ यद्यपि, तथापि यस्मिन्प्रत्ययानां भावाभावौ, सोऽहमिति प्रत्यभिज्ञानबलात्तेषां ग्राहकोऽन्वयी स्थाय्यात्मा सिध्यति, किमाभासकल्पनया ?—इति योजना ॥७३॥

अन्वयी ग्राहकस्तेषाम् इत्येतदपि तत्समम् ।
अचितित्वस्य तुल्यत्वादन्यस्मिन् ग्राहके सति ॥ ७४ ॥
अध्यक्षस्य समीपे तु सिद्धिः स्यादिति चेन्मतम् ।
नाध्यक्षेऽनुपकारित्वादन्यत्रापि प्रसङ्गतः ॥ ७५ ॥

एवं स्वयूथ्येनोक्ते नैतावता बौद्धो वारयितुं शक्यत इति दूषयति—एतदपीति ।

एतदपि प्रत्यभिज्ञानसिद्धमपि ग्राहकरूपं तत्समं प्रत्ययसमं जडमेवेत्यत्र हेतुमाह—अचितित्वस्येति । अयमर्थः—प्रत्ययग्राहकः अप्रकाशः ? स्वप्रकाशो वा ? आद्यं प्रत्याह—अचितित्वस्येति । अन्यस्मिन् ग्राहके सति ग्राह्यकोटिपतितत्वेन जाड्यापरिहारात् स्वयमप्यसिद्धः कथं प्रत्ययानां ग्राहक इत्यर्थः । अथवा—अन्यस्मिन् ग्राहकेऽसति, स्वतःसिद्धे साक्षिण्यविद्यमाने, प्रत्यभिज्ञाग्राह्यस्याप्यचितित्वस्य तुल्यत्वाद्ग्राहकत्वासिद्धिरित्यर्थः । द्वितीये स्वप्रकाशस्य साक्षिणो निर्विकारत्वाभाससिद्धिरिति द्रष्टव्यम् ॥ ७४ ॥

स्वप्रकाशे साक्षिण्यसति प्रत्ययानां भावाभावासिद्धिश्चेत्, तर्हि साक्षिसांनिध्यमात्रेणैव तत्सिद्धेः, कृतमाभासाभ्युपगमेनेति शङ्कते—अध्यक्षस्येति ।

तत्र वक्तव्यं—किं साक्षिसंनिधानमात्रं प्रत्ययसिद्धिहेतुः ? किंवा तत्कृतविशेषयोगोऽपीति ? तत्र द्वितीयं तावद्दूषयति—नेति । निर्विकारेऽध्यक्षे उपकारित्वानिरूपणादित्यर्थः । पाठान्तरे अध्यक्ष्ये साक्ष्येऽहंकारादौ अनुपकारित्वादुपकारपदवाच्यातिशयाजनकत्वादित्यर्थः । प्रथमं दूषयति—अन्यत्रापीति । साक्षिणः पूर्णतया सर्वत्र सदा सान्निध्याविशेषात् काष्ठलोष्टादीनामपि सिद्धिप्रसङ्गादित्यर्थः ॥ ७५ ॥

---

( १ ) अचितित्वस्यापि तु—पाठः ।

अर्थी दुःखी च यः श्रोता स त्वध्यक्षोऽथवेतरः ।
अध्यक्षस्य च दुःखित्वमर्थित्वं च न ते मतम् ॥ ७६ ॥
कर्ताध्यक्षः सदस्मीति नैव सद्ग्रहमर्हति ।
सदेवासीति मिथ्योक्तिः श्रुतेरपि न युज्यते ॥ ७७ ॥
अविविच्योभयं वक्ति श्रुतिश्चेत्स्याद्ग्रहस्तथा ।
अस्मदस्तु विविच्यैव त्वमेवेति वदेद्यदि ।
प्रत्ययान्वयिनिष्ठत्वमुक्तदोषः प्रसज्यते ॥ ७८ ॥

एवमाभासानभ्युपगमे बौद्धादिमतसाम्यदोषपरिहारानुपपत्तिं स्वयूथ्यान् प्रत्युक्त्वा, शास्त्रीयो बन्धमोक्षव्यवहारोऽपि तेषां न सिध्यतीति वक्तुं विकल्पयति—अर्थीति ।

यो दुःखित्वेन मोक्षार्थित्वेन च प्रसिद्धो गुरूपदेशश्रोता, स एवाध्यक्षो मतः ? ततोऽन्यो वा ?—इति विकल्पार्थः । आद्ये निरनुग्रहाध्यक्षवादिनः तवापसिद्धान्तप्रसङ्ग इति दूषयति—अध्यक्षस्येति । आत्माभासानङ्गीकारवादिनस्ते द्वाराभावादविद्यातत्कार्यसम्बन्धासिद्धेः, तेन च विनार्थित्वाद्यसिद्धेः, आभासाभ्युपगमप्रसङ्ग इत्यर्थः ॥ ७६ ॥

द्वितीयं दूषयति—कर्तेति ।

श्रोतुरर्थिनः, अध्यक्षस्य च, भेदपक्षे कर्ता कर्तृत्वादिधर्मको विकारी श्रोता जडवर्गपतितत्वात्, सदहमध्यक्षोऽस्मीति सद्ग्रहः—सदादिशब्दनिर्दिष्टब्रह्मात्मग्रहः—नार्हतीति विरोधादित्यर्थः । यद्वा—सदध्यक्षो निर्विकार आत्माहमस्मीति सद्ग्रहं यथार्थबोधं नार्हति न लभत इत्यर्थः । श्रुतिबाधप्रसङ्गाच्चायं पक्षो न युक्त इत्याह—सदेवेति ॥ ७७ ॥

चिदाभासानभ्युपगमपक्षे बन्धमोक्षानुपपत्तिमुपपाद्य स्वपक्षे तदुपपत्तिमाह—अविविच्येति ।

त्वमित्यध्यक्षनिष्ठश्चेदहमध्यक्षयोः कथम् ।
संबन्धो वाच्य एवात्र येन त्वमिति लक्षयेत् ॥ ७९ ॥

उभयमात्मानमहंकारं च द्वयमाभासद्वारेण विवेकापन्नमविविच्य विवि-क्तमकृत्वा यथाप्राप्तमर्थित्वाद्युपादाय श्रोतृत्वेन स्थितं प्रति 'तत्त्वमसि' इति श्रुतिर्वक्त्यात्मतत्त्वमिति चेत्पक्षस्तदा तथा, यथा श्रुत्युक्तस्य ग्रहो ग्रहणं स्यादिति योजना । अयमभिप्रायः—अन्तःकरणादौ चिदाभासोदयेऽपि सति, तद्गतविकाराध्यासादविविक्ताहंकार आत्मार्थित्वादिसंपन्नो मुमुक्षुतां प्रतिपद्यते । तं तथैवाविवेकावस्थं त्वमित्यनूद्य, आभासद्वारा साभासान्तः-करणसाक्षितया लक्षयित्वा, तेजोबन्नादिजगत्कारणत्वेनोपलक्षितं सच्छब्द-वाच्यं ब्रह्म तदित्यनूद्य, जीवेनात्मनां नामरूपसंघातानुप्रविष्टत्वेनापरो-क्षप्रत्यक्तया लक्षयित्वा, त्वं तदसीति श्रुतिरुपदिशति आत्मतत्त्वमिति तथा ग्रहणमुपपद्यत इति । अहंकार एव श्रोता स्यात्, किमात्माभासाभ्यु-पगमेन ?—इति सांख्यमतमनूद्य दूषयति—अस्मदस्त्विति । प्रत्ययान्व-य्यहंकारः । यदि वाक्यमस्मदः प्रत्यक्चैतन्यादहंकारं विविच्यैव त्वमेवेति प्रत्ययान्वयिनिष्ठत्वं वदेत्, तदोक्तो दोषः—श्रुतेर्मिथ्योक्तित्वप्रसङ्गरूपः—प्रसज्यत इत्यर्थः ॥ ७८ ॥

तर्ह्यहंकर्तृविषयोऽप्युपदेशोऽध्यक्षे पर्यवस्यतीत्याशङ्काभासानभ्युपगमे त-दपि दुर्घटमित्याह—त्वमिति ।

त्वमिति पदं अहंकारवाचि सत् अध्यक्षं बोधयति चेत्, अहंकाराध्य-क्षयोः संबन्धग्रहमन्तरेण वाक्यार्थबोधानुपपत्तेः, अहमध्यक्षयोः संबन्धोऽत्र वाच्य एव—स कथमुपपद्यते ? येन संबन्धेन त्वमिति पदमध्यक्षं लक्षये-दित्यर्थः ॥ ७९ ॥

---

(१) छां. उ. ६. ३. २.

> द्रष्टृदृश्यत्वसंबन्धो यद्यध्यक्षेऽक्रिये कथम् ॥ ८० ॥
> अक्रियत्वेऽपि तादात्म्यमध्यक्षस्य भवेद्यदि ।
> आत्माध्यक्षो ममास्तीति संबन्धाग्रहणे न धीः ॥ ८१ ॥
> संबन्धग्रहणं शास्त्रादिति चेन्मन्यसे न हि ।
> पूर्वोक्ताः स्युस्त्रिधा दोषा ग्रहो वा स्यान्ममेति च ॥ ८२ ॥

अस्ति संबन्ध इहेत्याशङ्क्य परिहरति—द्रष्टृदृश्यत्वेति ।

यदि द्रष्टृदृश्यत्वसंबन्धोऽभ्युपगम्यते, तदापि संबन्धग्रहणमनुपपन्नम् । अहंकारस्य जडत्वात्संबन्धग्रहणायोगात्, अध्यक्षस्य तद्ग्रहणमिति वक्तव्यम् । अक्रिये निर्विकारेऽध्यक्षे कथं संबन्धग्रहणकर्तृत्वमित्यर्थः ॥ ८० ॥

मास्तु संबन्धग्रहणं, तथापि तादात्म्योपदेशो भविष्यतीति शङ्कामनूद्य दृष्टविरोधान्नैवमिति परिहरति—अक्रियत्वेऽपीति ।

यथा लोके घटस्य शौक्ल्यमिति घटशौक्ल्ययोः संबन्धाग्रहणे शुक्लो घट इति वाक्यात् तादात्म्यधीर्नोदेति, तथा ममात्मा अध्यक्षोऽस्तीति संबन्धाग्रहणे सति न तादात्म्यधीः श्रुतितो जायेतेत्यर्थः ॥ ८१ ॥

"एष म आत्मान्तर्हृदये अणीयान्", "एष म आत्मान्तर्हृदये एतद्ब्रह्म" इति शास्त्रादस्त्यहंकाराध्यक्षयोः संबन्धग्रह इति शङ्कामुत्थाप्य निराकरोति—संबन्धग्रहणमिति ।

न हीत्युक्तं व्यनक्ति—पूर्वोक्ता इति । अहंकारस्य जडत्वात् संबन्धग्रहीतृत्वं न घटते, नाप्यध्यक्षस्य निर्विकारत्वात्—इति द्वौ दोषौ, जडं प्रति श्रुतेर्बोधकत्वासंभवस्तृतीयो दोष इति त्रिधा दोषाः स्युः । यदि कथंचित्संबन्धग्रहणं कल्प्येत, तदापि ममाध्यक्षोऽस्तीति संबन्धग्रहणं स्यात्, न त्वह-

---

(१) त्रयो—साधुः पाठः । (२) वाक्यतादात्म्य—पाठः । (३) छां.उ. ३. १४. ३. (४) छां. उ. ३. १४. ४.

अहंदृशिरूपेण भाति बुद्धिर्यदा तदा ।
प्रत्यया अपि तस्याः स्युस्तप्तायोविस्फुलिङ्गवत् ॥ ८३ ॥
आभासस्तद्भावश्च दृशेः सीम्नो न चान्यथा ।
लोकस्य युक्तितः स्यातां तद्ग्रहश्च तथा सति ॥ ८४ ॥
नन्वेवं दृशिसंक्रान्तिरयःपिण्डेऽग्निवद्भवेत् ।
मुखाभासवदित्येतदादर्शे तन्निराकृतम् ॥ ८५ ॥

ममाध्यक्षोऽस्मीति तादात्म्याध्यासानङ्गीकारात् । चकारान्ममाध्यक्षोऽस्तीत्यपि न घटते, अहङ्कारस्य जडत्वादित्यभ्युच्चयः ॥ ८२ ॥

एवमात्मानात्मनोः परपक्षे सम्बन्धासिद्धिमुक्त्वा स्वपक्षे मिथ्या तादात्म्यसम्बन्ध इति दर्शयति—अहंदृशिरिति । यदाऽहंदृशिश्चेतना बुद्धिर्दृशिरूपेण सदा भातीत्यभ्युपगम्यते, तदा तस्या बुद्धेः प्रत्यया वृत्तयोऽपि तप्तायोविस्फुलिङ्गानामिवात्मत्वेन दृशिरूपाः स्युरित्यर्थः ॥ ८३ ॥

अस्मिन्पक्षे लौकिकवैदिकव्यवहारसिद्धिरपि सुसम्पादेत्याह—आभास इति ।

सीम्नोऽवधिभूताया दृशेश्चिदात्मनः सकाशादेव लोकस्याभासस्तद्भावश्च—प्रत्ययश्च तदभावश्च—स्यातां युक्तितः—युक्तेः—उपपत्तेः, न चान्यथा । तथा सति आभासानभ्युपगमे सति, प्रत्ययभावाभावयोः प्रत्ययमात्रत्वायोगात्ततोऽत्यन्तमेव विविक्तस्य चात्मनस्तद्ग्राहकत्वानुपपत्तेः । आभासद्वारा तु सम्बन्धादात्मनो बुद्धिवृत्तिभावाभावसाक्षित्वमुपपद्यते, बुद्धेश्च तद्ग्रह आत्मग्रहो ऽहमस्मीत्युपपन्नः स्यादित्यर्थः ॥ ८४ ॥

तप्तायोविस्फुलिङ्गवदिति दृष्टान्ताभिधानादात्मनो विकारप्राप्तिं शङ्कते—नन्वेवमिति ।

अयःपिण्डेऽग्निसंक्रान्तिवत् बुद्धौ दृशिसंक्रान्तिर्विकारो भवेदित्यर्थः ।

कृष्णायो लोहिताभासमित्येतद्दृष्टमुच्यते ।
दृष्टदार्ष्टान्ततुल्यत्वं न तु सर्वात्मना क्वचित् ॥ ८६ ॥
तथैव चेतनाभास चित्तं चैतन्यवद्भवेत् ।
मुखाभासो यथाऽऽदर्शे आभासश्चोदितो मृषा ॥ ८७ ॥

परिहरति—मुखाभासवदिति । तदेतच्चोद्यमादर्शे मुखाभासवदिति दृष्टान्तप्रबन्धेन निराकृतमित्यर्थ । यथा मुखस्यादर्शे प्रतिबिम्बितस्य तत्स्थत्वेन रूपेण मिथ्यात्व, तथा बुद्धौ प्रतिबिम्बितस्य चिदात्मनो बुद्धिधर्मत्वेनावभासो मृषेति पूर्वमुक्त सर्वमिहानुसधेयमिति भाव ॥ ८५ ॥

तर्हि कथ तप्तायोविस्फुलिङ्गदृष्टान्त उक्त , तत्र विकारप्रसिद्धेर्दार्ष्टान्तिकाननुरूपत्वात् [1]—इत्याशङ्कय विवक्षितांशस्येहापि सभवान्नैवमित्याह—[ कृष्णेति । ]

कृष्णवर्णमयो लोहिताभास लोहितवर्णमवभास इत्येतदेतावदेव दृष्ट दृष्टान्त उच्यते । जडाया बुद्धे चैतन्याभासत्वमित्यर्थ । सर्वांशसाम्यमनुपपन्नमित्याह—दृष्टदार्ष्टेति । अप्रकाशायात्मनो मुखादेश्चन्द्रादिदृष्टान्ताभावप्रसङ्गादिति भाव ॥ ८६ ॥

दृष्टान्ते विवक्षितमशमुक्त्वा दार्ष्टान्तिकेऽपि तथाविधमश दर्शयति—तथैवेति ।

चेतनाया आभासो यस्मिंस्तच्चेतनाभास चित्त चैतन्यवच्चेतनमिव भवेत् । स चाभास , यथा आदर्शे मुखाभासो विकृत , एवमेवेहापि द्रष्टव्य । आभासश्चोपाधिस्थतया दृश्यमानो मृषा मिथ्येत्युदित उक्त एवेत्यर्थ ॥८७॥

---

( १ ) दृष्टान्तेन प्र —पाठ

चित्तं चेतनमित्येतच्छास्त्रयुक्तिविवर्जितम् ।
देहस्यापि प्रसङ्गः स्याच्चक्षुरादेस्तथैव च ॥ ८८ ॥
तदप्यस्त्विति चेत्तन्न लोकायतिकसंगतेः ।
न च धीर्दृशिरस्मीति यद्याभासो न चेतसि ॥ ८९ ॥
सदस्मीति धियोऽभावे व्यर्थं स्यात्तत्त्वमस्यपि ।
युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ॥ ९० ॥

कस्माच्चिदाभासव्याख्या चित्तस्य चेतनतावभासोऽभ्युपगम्यते, न स्वतः? इति शङ्का न कार्या । तत्र प्रमाणन्याययोरभावादित्याह—चित्तमिति ।

उत्पत्तिविनाशवत्तया अन्यदृश्यस्यापि चित्तस्य चेचेतनतास्वभावः स्यात्, तदाऽतिप्रसङ्गश्च दुष्परिहर इत्याह—देहस्येति ॥ ८८ ॥

इष्टापत्तिमाशङ्क्य परिहरति—तदपीति ।

अवैदिकत्वप्रसङ्गादित्यर्थः । किंच—आभासानभ्युपगमे द्वाराभावादहं ब्रह्मास्मीति आगन्तुकं वाक्यजन्यमैक्यज्ञानं न सिद्ध्येदित्याह—न च धीरिति । चेतसि यद्याभासो न भवेत्, तदा दृशिर्ब्रह्मास्मीति धीर्न भवेत्—केवलस्य चित्तस्य जडत्वात्, चिन्मात्रस्य च कूटस्थत्वादित्यर्थः ॥ ८९ ॥

ब्रह्मास्मीति धियोऽभावे का क्षतिरित्यत आह—सदस्मीति ।

अप्यवधारणार्थः । तत्त्वमसिवाक्यमैक्यग्राहकमुक्तधियोऽभावे व्यर्थमेवाप्रमाणमेव स्यादित्यर्थः । अस्तु वैयर्थ्यं, तद्वाक्यश्रोतॄणा सर्वेषा झटिति ब्रह्मास्मीति बुद्ध्युत्पत्त्यदर्शनात्—इत्याशङ्क्याह—युष्मदस्मदिति । "अधिकारिणः प्रमितिजनको वेदः" इति न्यायात्सम्यक्त्पदार्थविज्ञानवत एव वाक्यार्थबोधेऽधिकारात्, आत्मानात्मविभागज्ञानवत्येव पुंसि इदं वाक्यमर्थवत्, न सर्वान् प्रति झटितीत्यर्थः ॥ ९० ॥

---

(१) ?.

ममेदंप्रत्ययौ ज्ञेयौ युष्मद्येव न संशयः ।
अहमित्यस्मदीष्टः स्यादयमस्मीति चोभयोः ॥ ९१ ॥
अन्योन्यापेक्षया तेषां प्रधानगुणतेष्यते ।
विशेषणविशेष्यत्वं तथा ग्राह्यं हि युक्तितः ॥ ९२ ॥
ममेदं द्वयमप्येतन्मध्यमस्य विशेषणम् ।
धनी गोमान्यथा तद्वद्देहोऽहंकर्तुरेव च ॥ ९३ ॥

तमेव युष्मदस्मद्विवेकं दर्शयितुमुपक्रमते—ममेदमित्यादिना ।

इदं पुत्रादि ममेति च प्रत्ययौ युष्मद्यनात्मन्येव ज्ञेयौ, पुत्रादिबाह्यार्थस्य देहाध्यासप्रणालिकयैवास्मदर्थे प्रवेशात्। बाह्यार्थसंबन्धोऽप्यनात्मधर्म एवेति युक्तमुक्तम्—'ममेदमिति प्रत्ययौ युष्मद्येव' इति । 'न संशय' इति सर्वत्रानुषज्यते । अहमिति प्रत्यय आभासद्वारात्मभूते व्यावहारिके अस्मदि—आत्मनि अहंकर्तरि—इष्टः स्यात्, अहमित्येवोल्लेखदर्शनात् । अयं देहादिः, अस्मीति चोभयोरात्मानात्मनोः प्रत्यय इत्यर्थः ॥ ९१ ॥

आत्मानात्मविषयाणां प्रत्ययानां संकीर्णतयाऽसंकीर्णतया च विषयानुक्त्वा, उक्तविवेकसिद्ध्यर्थं तथा गुणप्रधानभावेन विशेषणविशेष्यभावो ग्राह्य इत्याह—अन्योन्येति ।

स्पष्टम् ॥ ९२ ॥

विशेषणविशेष्यत्वं युक्तितो ग्राह्यमित्युक्तमेव विविच्य दर्शयति—ममेदं द्वयमिति ।

मध्यमस्य पूर्वश्लोके मध्ये निर्दिष्टस्यास्मदर्थस्यात्मनो विशेषणं—इदं ममेति च द्वयं—मनुष्योऽहमिति प्रत्ययापेक्षयेत्यर्थः । तत्रोदाहरणं—धनी गोमान् यथेति । यथा धनादीदन्त्वास्पदं सदेहापेक्षया ममत्वास्पदमहंकर्तुं सिद्धं, तद्वत्स्थूलो देहोऽहंकर्तुरात्मनो बाह्यधनाद्यपेक्षयाऽहन्त्वास्पदतया विशेषणमे-

बुध्यारूढं सदा सर्वं साहंकर्ता च साक्षिणः ।
तस्मात्सर्वावभासो ज्ञः किंचिदप्यस्पृशन्सदा ॥ ९४ ॥
प्रतिलोममिदं सर्वं यथोक्तं लोकबुद्धितः ।
अविवेकधियामस्ति नास्ति सर्वं विवेकिनाम् ॥ ९५ ॥

वेत्यर्थः । चकारादात्मनोऽपि सोऽहं ज्ञातेत्यादुल्लेखे स्थूलदेहमपेक्ष्य प्रधानभूतोऽप्यहंकर्ता विशेषणमिति योज्यम् ॥ ९३ ॥

एतत्सर्वं यदधीनसत्ताप्रकाशकं तत्रारोपितं सत् तस्य सदा विशेषणं भवदपि तेन साक्षिणा न संस्पृश्यत इत्येषु (? ष)यो निरपेक्षसिद्धः, स शुद्ध आत्मेति युष्मदस्मद्विभागज्ञस्य भवेदेव वाक्याद्वाक्यार्थज्ञानमिति प्रमाणमेव वेदान्तवाक्यमित्यभिप्रेत्योपसंहरति—बुध्यारूढमिति ।

बुद्ध्यारूढं बुद्धिवृत्तिक्रोडीकृतं सर्वं देहतत्संबन्धिविषयजातं साक्षिणो विशेषणं गुणभूतमिति योजना । न केवलमेतावत्, किंच साहंकर्ता अहंकर्त्रा साभासमनसा सहितः सूक्ष्मोऽपि संघातः साक्षिणो विशेषणं, तस्मिन्नध्यस्ततया तदवभास्यत्वादित्यर्थः । यस्मादेवं परमार्थतः किंचिदप्यस्पृशन् सदा सर्वं साभासद्वाराऽवभासयतीति सर्वावभासः, तस्माज्ज्ञो ज्ञानस्वरूप एव सदात्मेति विवेको युक्त इत्यर्थः ॥ ९४ ॥

एष विवेकिनां मार्गः, विपरीतं त्वविवेकिनां क्षेत्रादावप्यात्मनो विशेषणत्वप्रतीतेरित्याह—प्रतिलोममिति ।

बाह्यार्थोपहृतचेता लोकस्तस्य बुद्धिर्लोकबुद्धिस्तस्या इति बाह्यार्थसत्त्वप्रधानां लोकबुद्धिमपेक्ष्येति यावत् । तथा च बाह्यार्थं प्रधानीकृत्य यदिदं यथोक्तविशेषणविशेष्यादि सर्वं प्रतिलोममनात्मभूतं, तदविवेकधियां विवेकज्ञानशून्यानां दृष्ट्यास्ति वर्तते । विवेकिनां तु दृष्ट्या सर्वमेतद्विशेषणादिकं

---

( १ ) इत्यादिषु—पाठः ।

अन्वयव्यतिरेकौ हि पदार्थस्य पदस्य च ।
स्यादेतदहमित्यत्र युक्तिरेवावधारणे ॥ ९६ ॥

दृश्यरूपं नास्ति न वर्तते । अतो विवेकिनां बुद्धिमात्मन्यवतारयितुं विशेषणविशेष्यादिप्रबन्धकल्पना यथाप्रतीतिसत्तामादाय क्रियतेऽध्यारोपापवादन्यायेनेति भावः ॥ ९५ ॥

नन्वन्वयव्यतिरेकाभ्यामेव सर्वसंसारविनिर्मुक्तात्मावगमात्किं वाक्येनेत्याशङ्क्याह—अन्वयव्यतिरेकौ हीति ।

पदार्थस्यान्वयव्यतिरेकौ नाम—आत्मपदार्थो द्रष्टा साक्षी, न कदापि दृश्यः साक्ष्यो वा भवति, तस्याऽलुप्तप्रकाशसन्मात्रतया स्वतःसिद्धत्वात्, अतोऽनन्याश्रयत्वान्न कदापि कस्यापि विशेषणमात्मा । तथा यद्दृश्यं साक्ष्यं चाहंकारादिविषयान्तं, तदन्याधीनप्रकाशसत्ताकतयाऽन्याश्रयं सत् सदा विशेषणभावं न व्यभिचरति । तस्मादनागमापायि दृगात्मरूपं सत्यं शुक्त्यादिवत्, तद्विपरीतमसत्यं रजतादिवत्—इत्यनृतजडपरिच्छिन्नपराधीनपरार्थव्यावृत्तः सत्यज्ञानानन्तप्रत्यगानन्दरूप आत्मेति विवेचनम् । पदस्यान्वयव्यतिरेकौ नाम—आत्मा चैतन्यं प्रज्ञानं ब्रह्म, सदित्यादिपदानि कर्तृत्याद्युपपदविधुराणि केवलस्यैवात्मनः समर्पकाणि, न विशेषणतद्विशिष्टविषयाणि, असामर्थ्यात् । कर्ता, भोक्ता, ज्ञाता, द्रष्टा, श्रोता, वक्ता, गन्ता, कृशः, स्थूल इत्यादीनि तु न केवलपूर्णात्मविषयाणि, अन्याधीनक्रियाद्युपरागदशायामेव प्रयुज्यमानत्वादिति विवेचनम् । एवं पदस्य पदार्थस्य वाऽन्वयव्यतिरेकाविति यदेतत्, तदहमित्यत्रास्मदर्थविषयेऽवधारणे युक्तिरेव स्यात्—विवेकावधारणोपायमात्रं स्यात्—न तु वाक्यार्थे स्ये पदार्थस्ये व्यापारोऽस्येत्यर्थः । तस्मादेतावतापि विवेकेन देहादिवैलक्षण्येऽवधारितेऽपि, कोऽहं

---

( १ ) कर्मे—पाठः ।

नाद्राक्षमहमित्यस्मिन्सुषुप्तेऽन्यन्मनागपि ।
न वारयति दृष्टिं स्वां प्रत्ययं तु निषेधति ॥ ९७ ॥
स्वयंज्योतिर्न हि द्रष्टुरित्येवं संविदोऽस्तिताम् ।
कौटस्थ्यं च तथा तस्याः प्रत्ययस्य तु लुप्तताम् ॥
स्वयमेवाब्रवीच्छास्त्रं प्रत्ययावगती पृथक् ॥ ९८ ॥

तर्हि ?—इति जिज्ञासाया अनुवृत्तेः, तत्त्वमसीति वाक्यं जिज्ञासितस्वरूपविशेषसमर्पकमनवद्यमपेक्षितव्यमेवेति भावः ॥ ९६ ॥

किंच—अवस्थात्रयं परस्परव्यभिचारि, चैतन्यात्मा तु न कदापि व्यभिचारीति प्रकारान्तरेणात्मानात्मविवेकं दर्शयति—नाद्राक्षमिति ।

अस्मिन्सुषुप्तेऽत्रात्मनि, अत्र स्थाने वा, मनागपि ईषदप्यन्यदात्मस्वरूपाविरिक्तमहं नाद्राक्षं न दृष्टवानस्मीति परामृशन् जनो न स्वां स्वात्मनो दृष्टिं चैतन्यं वारयति, प्रत्ययं तु पुनर्निषेधति । प्रतीयत इति प्रत्यय इति व्युत्पत्त्या प्रमातृप्रमाणप्रमेयादिरूपः सर्व एव विशेषो गृह्यते । तस्मात्परस्परव्यभिचारितया दृष्टनष्टस्वभावाभ्योऽवस्थाभ्यो मिथ्याभूताभ्यो व्यभिचारी चिद्रूपः साक्षी सत्य आत्मेति विवेकः सिध्यतीत्यर्थः ॥ ९७ ॥

एवमुक्तावन्वयव्यतिरेकौ शास्त्रसंमतौ, न स्वबुद्धयुत्प्रेक्षामात्रकृताविति विश्वासाय शास्त्रमुदाहरति—स्वयंज्योतिरिरिति सार्धेन ।

"अत्रायं पुरुषः स्वयंज्योतिः[1]", "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते[2]" इत्येवमादिशास्त्रं संविदश्चेतनाया अस्तिता सद्भावं, तस्याः संविदः कौटस्थ्यं निर्विकारता च स्वयमेवाब्रवीदिति संबन्धः । तथा प्रत्ययस्य प्रमात्रादिभे-

(१) बृ. उ. ४. ३. ९., १४. (२) बृ. उ. ४. ३. २३.

एवं विज्ञातवाक्यार्थे श्रुतिलोकप्रसिद्धितः ।
श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये ॥ ९९ ॥
ब्रह्मा दाशरथेर्यद्वदुक्त्यैवापानुदत्तमः ।
तस्य विष्णुत्वसंबोधे न यत्नान्तरमूचिवान् ॥ १०० ॥

दस्य लुप्ततामसत्तां च "न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तम्" इत्यादिशास्त्रं स्वयमेवाब्रवीदिति पुनरेवान्वयः । एवं प्रत्ययावगती पृथगसंकीर्णे शास्त्रेणैव विवेचिते इति शेषः । प्रत्ययो व्याख्यातः । अवगतिश्चैतन्यम् ॥ ९८ ॥

एवमवान्तरवाक्यकृतं युष्मदस्मद्विवेकमुपपत्तित उक्त्वा, विज्ञातपदार्थतत्त्वे पुरुषे महावाक्यं फलवद्विज्ञानं जनयतीत्याह—एवमिति ।

एवमुक्तप्रकारेण श्रुतिप्रसिद्धितः, लोकप्रसिद्धितः, अन्वयव्यतिरेकतश्च, विज्ञातावान्तरवाक्यार्थे पुंसि सति महावाक्यात्मिका श्रुतिः श्रोतुर्जिज्ञासोर्मोहापनुत्तये सकार्याविद्यानिवृत्तिप्रयोजनाय 'सत्सदात्मं ब्रह्म त्वमसि' इत्याह—उपदिशतीत्यर्थः ॥ ९९ ॥

वाक्यश्रवणमात्रान्मोहापोहे दृष्टान्तं पुराणसिद्धमाह—ब्रह्मेति ।

दाशरथिना रामेण देवकार्यसिद्धये मनुष्यावतारनाट्येन स्वमाहात्म्याच्छादनं संकल्पपूर्वकं यत्कृतं तदिह तमःशब्देनोच्यते । न त्वीश्वरस्य संमोहः संभवति । तदुक्तं संक्षेपशारीरके—

'संकल्पपूर्वकमभूद्रघुनन्दनस्य
नाहं विजान इति कंचन कालमेतत् ।

(१) 'वाक्यार्थे—इति नै. सि. ३. २४. पाठः । (२) बृ. उ. ४. ३. २३-३०.

अहंशब्दस्य निष्ठा या ज्योतिषि प्रत्यगात्मनि ।
सैवोक्ता सदसीत्येवं फलं तत्र विमुक्तता ॥ १०१ ॥

ब्रह्मोपदेशमुपलभ्य निमित्तमात्रं
तयोत्ससर्ज स कृते सति देवकार्ये ॥'

इति । हे राम, त्वं विष्णुरसि न दशरथपुत्रमात्र इत्युक्तैव ब्रह्मा दाशरथेः संकल्पमात्रकृतं तमो विष्णुत्वाच्छादनरूपमपानुदत् । एवकारार्थमाह— तस्येति । यन्नान्तरं वाक्योपदेशग्रहणातिरिक्तमित्यर्थः ॥ १०० ॥

दार्ष्टान्तिकमाह—अहंशब्दस्येति ।

एवंशब्दः प्रथमं योज्यः। यथाऽयं दृष्टान्तः, एवं 'सदसि' इति वाक्येन सा निष्ठोक्तैव केवलं, नानुष्ठापितेति योजना । सा का निष्ठेति तामाह— अहंशब्दस्येति । प्रत्यगात्मनि—परागर्थेभ्यो व्यावृत्ते शोधिते आत्मनि निरुपाधिके, ज्योतिषि साक्षित्वप्रकाशत्वभावे अहंशब्दस्य या निष्ठा लक्षणया पर्यवसिता वृत्तिः सैवेत्यर्थः । तत्र 'त्वं तदसि' इत्युपदेशमात्रात् 'अहं सत् ब्रह्मास्मि' इति वाक्यार्थज्ञानोदयमात्रे सति विमुक्तता मोहापोहरूपा फलं भवतीत्यर्थः । यद्वा—दृष्टान्तस्य दार्ष्टान्तिकमेव विज्ञासवाक्यार्थ इति पूर्वश्लोक एव स्थितं द्रष्टव्यम् । अयं त्वन्ययोत्थाप्यते—ननु दाशरथेर्भवेदेव विष्णुत्वोपदेशमात्रात् 'विष्णुरहमस्मि' इति झटिति बोधोदयः, तस्य महामहिमसंपन्नत्वात्, कथमिदानींतनस्य कर्ताभोक्तेत्यादिप्रत्यक्षाभिमतमिथ्याप्रत्ययगृहीतस्योपदेशमात्रात् 'अहं ब्रह्मास्मि' इति निर्विचिकित्सं ज्ञानं संभाव्यते ?—इत्याशङ्क्य शोधितत्वंपदार्थस्य पुंसः कर्तादिसाक्षिण एवाहमादिशब्दलक्षितस्य ब्रह्मत्वोपदेशान्नानुपपत्तिरत्रा-

---

(१) २. १८२. पद्य—वा० रामायणे उत्तरकाण्डे ९८. १२.—१३.; ११०. ८—१२.

श्रुतमात्रेण चेन्न स्यात्कार्यं तत्र भवेद्ध्रुवम् ।
व्यवहारात्पुरापीष्टः सद्भावः स्वयमात्मनः ॥ १०२ ॥
अशनायादिनिर्मुक्त्यै तत्काला जायते प्रमा ।
तत्त्वमस्यादिवाक्यार्थे त्रिषु कालेष्वसंशयः ॥ १०३ ॥

पीति परिहरति—अहंशब्दस्येति । तत्त्वमसीत्येतद्वाक्येन सैव निष्प्रोक्तेति मंयन्त्यः । अन्यत्समानम् ॥ १०१ ॥

*एवमवगतपदार्थतत्त्वस्य वाक्यादेव समूलसंसारनिवृत्तिफलं ज्ञानं जायत एव—इति स्थिते श्रुतेः प्रामाण्यसिद्ध्यर्थं कार्यपरत्वं कल्प्यमित्यामहो निरर्थको विद्वदनुभवविरोधादित्यभिप्रेत्याह—श्रुतमात्रेणेति ।*

यथोक्तन्यायेन वाक्यस्य श्रुतमात्रेण चेदुक्तफलं विज्ञानं न स्यात्, तत्र तदा कार्यं कल्प्यं ध्रुवमवश्यं भवेत्, अन्यथाऽर्थवादादिवाक्यवत्स्वार्थे प्रामाण्यानुपपत्तेः । इह तु न तथा कल्प्यमस्ति, फलस्य सद्य एवानुभवसिद्धत्वादित्यर्थः । "स्वयं ज्योतिर्नहि द्रष्टुः" इति श्लोके पूर्वमर्धश्लोकोऽधिकः स्थितः, इह चाऽयमर्ध एव श्लोक इति सहगणनीयम् । किंच सिद्धे ब्रह्मात्मनि शास्त्रस्याप्रामाण्यं नाम ? (१) विपर्यासलक्षणं वा, (२) निष्फलत्वं वा, (३) संशयलक्षणं वा, (४) अनुत्पत्तिलक्षणं वा ?—इति विकल्पान् क्रमेण दूषयति—व्यवहारादित्यादिना । (१) नाद्यः, यस्माद्व्यवहारात् "अहं ब्रह्मास्मि" इति शास्त्रोपदेशव्यवहारात्पुरा पूर्वमप्यात्मनः स्वयमेव सद्भाव इष्टो बाधकाभावात्, तस्माद्यथावस्थितात्मस्वरूपस्यैव श्रुत्या निवेदनान्न शुक्तिरूप्यज्ञानवदप्रामाण्यमित्यर्थः ॥ १०२ ॥

(२) न द्वितीयः, अनुभवविरोधादित्याह—अशनायादीति ।

---

(१) १८. ९८. (२) बृ. उ. १. ४. १०.

प्रतिबन्धविहीनत्वात्स्वयं चानुभवात्मनः ।
जायेतैव प्रमा तत्र स्वात्मन्येव न संशयः ॥ १०४ ॥
किं सदेवाहमस्मीति किंवाऽन्यत्प्रतिपद्यते ।
सदेव चेदहंशब्दः सता मुख्यार्थ इष्यताम् ॥ १०५ ॥

तत्काला—आप्तवाक्यश्रवणकाल एव कालो यस्याः सा तत्काला—प्रमा अज्ञानाद्युपलक्षितसंसारस्य निर्मुक्त्यै निवृत्त्यर्थं जायते, विदुषा प्रत्यक्षमेवैतदित्यतो न निष्फलत्वशङ्कावकाश इत्यर्थः । ( ३ ) तृतीयमप्यनुभवविरोधनं निराकरोति—तत्त्वमसीति । असंशयं संशयो नास्तीत्यर्थः ॥१०३॥

( ४ ) चतुर्थं प्रत्याह—प्रतिबन्धेति ।

पदार्थाज्ञानं हि वाक्यार्थज्ञानोत्पत्तिप्रतिबन्धः, तद्विहीनत्वादवगतपदार्थस्य पुंसस्तत्र तस्मिन्नेव वाक्यश्रवणकाले आत्मन्येव प्रमा जायतैव, न संशयः, इति योजना । आकाशपुष्पमस्तीत्यादिवाक्यार्थवदनुभवायोग्यार्थत्वशङ्कां वारयति—स्वयं चेति । अनुभवस्वरूपत्वात्स्वयमात्मनः प्रत्याख्यातुमशक्यत्वादित्यर्थः । अतो हुत्कृतादिवन्दवन्नुत्पत्तिलक्षणमप्यप्रामाण्यं नास्तीति सिद्धं सिद्धे ब्रह्मात्मनि वाक्यस्य प्रामाण्यमित्यर्थः ॥ १०४ ॥

एवं प्रमाणस्वरूपनिरूपणेन 'अहं ब्रह्मास्मि' इति ज्ञानमुपपाद्येदानीं प्रतिपत्त्यार्थस्वभावनिरूपणेनापि तदुपपादयितुं विकल्पयति–किं सदेवेति ।

'तत्त्वमसि' इति वाक्यश्रवणसमनन्तरं प्रतिपत्तौ 'अहमस्मि' इति किं सदेव प्रतिपद्यते, किंवाऽन्यत्?—इति विकल्पार्थः । आद्यमनूद्य तत्र परस्यानिष्टापत्तिरित्याह—सदेव चेदिति । सता सच्छब्दार्थेनाहंशब्दो मुख्यार्थ इष्यतां, तदा सच्छब्दाहंशब्दयोरेकार्थपर्यवसानादैकात्म्यमेव वाक्यार्थः, न संसर्ग इत्यपरोक्षज्ञानसिद्धिरित्यर्थः ॥ १०५ ॥

---

(१) 'कवचाय हुम्', 'अस्त्राय फट्' इति सन्ध्यादौ । ( ) 'सिद्ध' रहित पाठ ।

अन्यचेत् सदहंग्राहेप्रतिपत्तिर्मृषैव सा ।
तस्मान्मुख्यग्रहे नास्ति वारणावगतेरिह ॥ १०६ ॥
प्रत्ययी प्रत्ययश्चैव यदाभासौ तदर्थता ।
तयोरचितिमत्त्वाच्च चैतन्ये कल्प्यते फलम् ॥ १०७ ॥
कूटस्थेऽपि फलं योग्यं राजनीव जयादिकम् ।
तदनात्मत्वहेतुभ्यां क्रियायाः प्रत्ययस्य च ॥ १०८ ॥

द्वितीये दोषमाह—अन्यचेदिति ।

प्रत्यगात्मनोऽन्यश्चेत्सन्, तदाऽहंमाहरूपा या प्रतिपत्तिः, मृषैव सा भवेत्, संपद्गादिविज्ञानवत् । तत्र वाक्यस्याप्रामाण्यमेव प्रसज्येतेत्यर्थः । प्रमाणप्रमेयस्वभावपर्यालोचनया वाक्यादेवापरोक्षं फलवदात्मतत्त्वविज्ञानमुत्पद्यत इत्युपपन्नमित्युपसंहरति—तस्मादिति । इह वाक्ये मुख्यग्रहे सति, अवगतेर्यथार्थानुभवस्य वारणा निवारणं नास्तीत्यर्थः ॥ १०६ ॥

नन्वात्मनः कूटस्थत्वेन प्रतिपत्तृत्वानुपपत्तौ फलसंबन्धो नोपपद्यत इत्यस्यात्मग्रहे निवारणेत्याशङ्क्याह—प्रत्ययीति ।

प्रत्ययी परिणाम्यन्तःकरणं प्रत्ययः, तत्परिणामश्च यदाभासौ यस्य चिदात्मन आभासो ययोस्तौ यदाभासौ, तयोस्तदर्थता तच्छेषभूततेति यावत् । तस्मिंश्चैतन्ये चिदात्मनि तदाभासद्वारा फलं कल्प्यते । किंच तयोः प्रत्ययिप्रत्यययोरचितिमत्त्वाज्जडत्वादपि फलसंबन्धायोगात्, फलस्यात्मसंबन्धः स्यादित्यर्थः ॥ १०७ ॥

निर्व्यापारस्यापि फलसंबन्धे दृष्टान्तमाह—कूटस्थ इति ।

ननु राजतद्भृत्ययोः स्वस्वामिभावसंबन्धोऽस्ति राजनि जयादिसंबन्धनिमित्तम्, इह त्वध्यक्षाध्यक्ष्ययोस्तादृशस्यादर्शनात् कथमयं दृष्टान्तः प्रकृते

---

( १ ) ँग्राहि"—पाठः।

आदर्शस्तु यदाभासो मुखाकारः स एव सः ।
यथैवं प्रत्ययादर्शो यदाभासस्तदा ह्यहम् ॥ १०९ ॥
इत्येवं प्रतिपत्तिः स्यात्सदसीति च नान्यथा ।
तत्त्वमित्युपदेशोऽपि द्वाराभावादनर्थकः ॥ ११० ॥

संगतः स्यादित्याशङ्क्य, अत्राप्यस्त्यधिष्ठानाधिष्ठेयभावः फलसंबन्धहेतुरित्याह—तदिति । हेतुभ्यामित्यत्र हेतुत्वाभ्यामिति भावप्रधानता योज्या । क्रिया अहमात्मिका वृत्तिः, प्रत्ययमयतीति व्युत्पत्तेः प्रत्ययोऽन्तःकरणसाभास उच्यते—साभासवृत्तिवृत्तिमतोरिति यावत्। आत्मत्वं च हेतुत्वं चात्महेतुत्वे, तस्य फलस्य न आत्मत्वहेतुत्वे तदनात्महेतुत्वे, ताभ्यां तदनात्मत्वहेतुत्वाभ्यामिति योजना । तथा च क्रियाप्रत्यययोर्जडयोः फलस्वरूपत्वाभावात्, फलोपादानत्वाभावाच्च तद्व्यापारनिबन्धनं फलं तदधिष्ठान एव निर्व्यापारेऽपि कूटस्थे योग्यमित्यस्ति दृष्टान्तदार्ष्टान्तिकसंगतिरित्यर्थः ॥ १०८॥

शुद्धस्यात्मनः प्रमातृत्वं नास्तीत्यभिप्रेत्येदं विशिष्टप्रमातृकृतं फलं कूटस्थे उपचर्यत इति राजदृष्टान्तेनोक्तं, वस्तुतस्तु चित्प्रतिबिम्बस्यैव स्वोपाधिव्यापारेण स्वात्मन्यध्यस्तेन विषय एव प्रमातृत्वमिति चिदात्मन एवाविकृतस्य प्रतिबिम्बभावनिबन्धः फलसंबन्ध इति सदृष्टान्तमाह—आदर्शस्त्वित्यति ।

येन मुखाकारेण विशिष्टतया आभासत इति यदाभासः सन्नादर्शो मुखाकारः । स एव ग्रीवास्थ एव स, न ततोऽन्यः, यथा बिम्बप्रतिबिम्बयोरैक्यं लोके प्रसिद्धमित्यर्थः । एवं प्रत्ययादर्शोऽहंकारो यदाभासो येन चित्प्रतिबिम्बेन आभास्यत इति यदाभासः, स चित्प्रतिबिम्बः परमात्मैव, न ततोऽन्योऽहंकारेऽहमवभासगोचरः, तथा सति 'अहं ब्रह्म' इति वाक्यार्थधीर्घटते; अध्यस्तांशापोहमात्रेण विना नात्मनः कर्मत्वमित्यर्थः ॥ १०९ ॥

अयमेव पक्ष आदरणीय इत्याह—इत्येवमिति ।

श्रोतुः स्यादुपदेशश्चेदर्थवत्त्वं तथा भवेत् ।
अध्यक्षस्य न चेदिष्टं श्रोतृत्वं कस्य तद्भवेत् ॥ १११ ॥
अध्यक्षस्य समीपे स्याद्बुद्धेरेवेति चेन्मतम् ।
न तत्कृतोपकारोऽस्ति काष्ठाद्यद्वन्न कल्प्यते ॥ ११२ ॥
बुद्धौ चेत्तत्कृतः कश्चिन्नन्वेवं परिणामिता ।
आभासेऽपि च को दोषः सति श्रुत्याद्यनुग्रहे ॥ ११३ ॥

एवं सति चिदाभासाभ्युपगमे सति, सदहमस्मि—चकारादहं सदस्मि—इत्येवमाकारा प्रतिपत्तिः स्यात्, नान्यथा—आत्मन एव वा अहंकारस्यैव वा प्रमातृत्वाभ्युपगमे इति यतः, अतोऽयमेव मार्गोऽनिच्छद्भिरप्यादरणीय इति योजना । एवमनभ्युपगमे न केवलं प्रतिपत्त्यनुपपत्तिः, अपि तूपदेशस्याप्यनुपपत्तिरित्याह—*तत्त्वमिति* । *त्वमर्थोऽनुवादद्वारेण हि तदर्थभाव उपदेष्टव्यः, तत्रानूद्यमानस्य चित्प्रतिबिम्बस्याभावे तदर्थोपदेशो निरालम्बनोऽनर्थकः स्यादित्येतदाह—द्वाराभावादिति* ॥ ११० ॥

एतदेव विशदयति—*श्रोतुरिति* ।

तथा सतीत्यर्थः । तच्च श्रोतृत्वमध्यक्षादन्यत्र संभवतीत्याह—*अध्यक्षस्येति* । *न कस्यापीत्यर्थः* ॥ १११ ॥

यद्यप्यध्यक्षस्य नोपदेशः, तथापि न वैयर्थ्यमिति शङ्कते—*अध्यक्षस्येति* ।

तत्र बुद्धेः श्रोतृत्वं किमध्यक्षसंनिधिसत्तामात्रापेक्षं, आहोस्वित्तत्कृतोपकारापेक्षम् ?—इति विकल्प्याद्यं प्रत्याह—*न तदिति* । *तत्कृतः संनिहिताध्यक्षकृत उपकारोऽतिशयो बुद्धेर्नास्त्येव, यद्वत्काष्ठादिन्धनादेः संनिहिताद्बुद्धावतिशयो न कल्प्यते, तद्वदित्यर्थः* ॥ ११२ ॥

द्वितीयमुत्थाप्य दूषयति—*बुद्धौ चेदिति* ।

---

(१) तत्र—पाठ. (२) तुलय—१८. ७५.

आभासे परिणामश्चेन्न रज्ज्वादिनिभत्ववत् ।
सर्पादेश्च तथाऽवोचमादर्शे च मुखत्ववत् ॥ ११४ ॥
नाऽऽत्माभासत्वसिद्धिश्चेदात्मनो ग्रहणात्पृथक् ।
मुखादेश्च पृथक्सिद्धिरिह त्वन्योन्यसंश्रयः ॥ ११५ ॥

एवं सति आभासानभ्युपगमेऽप्यक्षस्य परिणामिता ननु निश्चितं प्रसज्येतेत्यर्थः । अतो "रूपं रूपं प्रतिरूपो बभूव" । "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्यादिश्रुतिस्मृत्यनुगृहीत आभासपक्षो निर्दुष्ट उपादेय इत्यभिप्रेत्याह—आभासेऽपि चेति । यद्वा—अस्तु परिणामिताऽध्यक्षस्येति चेत्, तर्ह्याभासेऽपि च प्रमाणसिद्धेऽभ्युपगम्यमाने तव को दोषो भविष्यतीत्याह—आभासेऽपीति ॥ ११३ ॥

आभासपक्षे चिदात्मनः परिणामप्रसङ्गाभावं वक्तुं शङ्कामुत्थापयति—*आभासे परिणामश्चेदिति ।*

नैवं, *आभासस्य मृषात्वोपपत्तेरिति परिहारमाह—न रज्ज्वादीति ।* रज्ज्वज्ञानकल्पितस्य सर्पादे रज्जुनिभत्ववत्, अनिदमात्मकस्य रजतादेरिदमात्मकत्ववच्च चिदात्माज्ञानकल्पितस्य बुद्ध्यादेर्मृषैव चिन्निभत्वं, चकाराद्भोक्तृस्वरूपस्यात्मनो भोक्तृत्वाभासो मृषैवेति सूच्यते । यथैवं मृषात्वं, तथा पूर्वमवोचम्, आदर्शे च मुखत्ववन्मुखाकारत्ववदिति दृष्टान्तप्रणयनेनेत्यर्थः । चकारान्मुखस्येवात्मनोऽविकृतत्वमप्यवोचमित्यर्थः ॥ ११४ ॥

अहंकृतेरेवात्मत्वमिति मन्यमानस्तस्य चिन्निभत्वमाक्षिपति—नात्मेति । आत्मनः केवलस्य ग्रहणादवभासनात्पृथगेवात्माभासत्वस्य सिद्धिश्चेन्न

(१) बृ. उ. २. ५. १९. कठ-उ. ५. ९. १० (२) ब्रह्मबिं. उ. १२. मोक्षधर्म—अध्याये (?) (३) १८. ८७.

अध्यक्षस्य पृथक्सिद्धावाभासस्य तदीयता ।
आभासस्य तदीयत्वे ह्यध्यक्षव्यतिरिक्तता ॥ ११६ ॥
नैवं स्वप्ने पृथक्सिद्धेः प्रत्ययस्य दृशेस्तथा ।
रथादेस्तत्र शून्यत्वात्प्रत्ययस्याऽऽत्मना ग्रहः ॥ ११७ ॥

भवेदाभासावभासेनैवाऽऽत्माभासो भवेत्, तदा इह स्वस्मिन्मतेऽन्योन्यसंश्रय इति योजना । दृष्टान्तश्च विषम इत्याह—मुखादेरिति । दर्पणादिगताभासव्यतिरेकेण ग्रीवास्थत्वेन मुखस्य सदा सिद्धिरस्तीति न तत्राऽन्योन्यसापेक्षतेत्यर्थः ॥ ११५ ॥

अन्योन्याश्रयमेव स्पष्टयति—अध्यक्षस्येति ।

तथा चाहमिति प्रतीयमानोऽहङ्कृत्यात्मक एव चेतन आत्मेति युक्तमित्यभिप्रायः ॥ ११६ ॥

अहङ्कृत्यात्मकस्याऽन्तःकरणस्य स्वप्ने दृश्यत्वेनैव व्यवस्थितत्वात्, तदाभासनिरपेक्ष एवात्मा तत्र सिद्ध इति नोक्तदृष्टान्तासंगतिरिति परिहरति—**नैवं स्वप्न इति ।**

प्रत्ययस्यान्तःकरणस्य दृशेरात्मनश्च स्वप्नावस्थायां तथा—मुखतत्प्रतिबिम्बवत्, पृथक्—अन्योन्यनिरपेक्षतयैव सिद्धेरित्यर्थः । कुत एतदित्याशङ्कायामाह—रथादेरिति । "न तत्र रथा न रथयोगा न पन्थानो भवन्ति" [1] इत्यादिना स्वप्ने रथादिदृश्यराहित्यस्य श्रूयमाणत्वात् प्रत्ययस्यैव रथाद्याकारमापन्नस्य तत्रात्मना स्वप्रकाशचैतन्येन ग्रहः । तथा चात्मा प्रत्ययसंवलनविनिर्मुक्तः स्वप्रकाशतया भासमान एव स्वप्ने विषयाकाराकारितप्रत्ययसाक्षी सिद्ध इत्यर्थः ॥ ११७ ॥

---

(१) बृ. उ. ४. ३. १०

अवगत्या हि संव्याप्तः प्रत्ययो विषयाकृतिः ।
जायते स यदाकारः स बाह्यो विषयो मतः ॥ ११८ ॥
कर्मेप्सिततमत्वात्स तद्वान् कार्ये नियुज्यते ।
आकारो यत्र चार्प्येत करणं तदिहोच्यते ॥ ११९ ॥
यदाभासेन संव्याप्तः [1]स ज्ञातेति निगद्यते ।
त्रयमेतद्विविच्यात्र यो जानाति स आत्मवित् ॥ १२० ॥

स्वप्नपर्यालोचनया चिदात्मनः प्रत्ययाद्विवेकं दर्शयित्वा जाग्रत्स्वभावालोचनयापि तमाह—अवगत्या हीत्यादिना ।

विषयस्याऽऽकृतिरिवाकृतिर्यस्य, अथवा—विषयस्याकृतिरेवाकृतिर्यस्य, स विषयाकृतिरिति विग्रहः । आत्मचैतन्यव्याप्ते विषयाकारे प्रत्यये जायमाने तस्मिन् यो विषयाकारः, स बाह्यो विषय इष्ट इत्यर्थः ॥ ११८ ॥

किंच—स बाह्यो विषय ईप्सिततमत्वात्कर्तुः साध्यतयोद्देश्यत्वेनेष्टतमत्वात्कर्म भवति, तद्वांस्तद्विषयेच्छावान् कार्ये नियुज्यते कुर्विति प्रेर्यते, यत इत्यध्याहारः । आकारसमर्पकस्य कर्मकारकतया विषयत्वमुक्त्वा प्रत्ययस्य करणत्वमाह—आकारो यत्रेति ।

यत्र बुद्धिपरिणामे विषयेण आकारोऽर्प्येत अर्प्यते, तदिह विषयाभिव्यक्तौ करणमुच्यते—तत्तद्बाह्येन्द्रियविशेषिता तत्तदर्थाकारा बुद्धिवृत्तिर्विषयप्रमितिं प्रति करणमित्यर्थः ॥ ११९ ॥

विषयकरणे व्युत्पाद्य कर्तारं व्युत्पादयति—यदाभासेनेति ।

यस्य चित्प्रतिबिम्बस्याऽऽभासेन संव्याप्तोऽहंकारः परिणमते, स चिदात्मप्रतिबिम्बो ज्ञातेति निगद्यते कथ्यते । एवं साक्ष्यं निर्दिश्य ततः साक्षिणं पृथगुपलम्भयति—त्रयमिति । एतत्त्रयं—ज्ञाता, ज्ञानं, ज्ञेयं चेति विविच्य

(१) सज्ञाता—पाठः

किमन्यद्ग्राहयेत्कश्चित् प्रमाणेन तु केनचित् ।
विनैव तु प्रमाणेन निवृत्त्याऽन्यस्य शेषतः ॥ १२४ ॥
शब्देनैव प्रमाणेन निवृत्तिश्चेदिहोच्यते ।
अध्यक्षस्याप्रसिद्धत्वाच्छून्यतैव प्रसज्यते ॥ १२५ ॥

अचित्स्वभावत्वात्, प्रदीपादिवदिति प्रयोगः । एवं सामान्यतो दृष्टानुमानेन "अत्रायं पुरुषः स्वयंज्योतिः", "आत्मैवास्य ज्योतिः", "तस्य भासा सर्वमिदं विभाति" इत्यादिश्रुतिप्रसिद्धस्वप्रकाश आत्मनि संभावना दर्शितेति द्रष्टव्यम् ॥ १२३ ॥

एवमनुमानमात्मन्युपन्यस्य विधिमुखेन प्रमाणेनात्मसिद्धिरुक्ता, तत्र केचिन्निषेधमुखेनैव प्रमाणेनात्मसिद्धिः, न विधिमुखेनाऽपीति मन्यन्ते, तन्मतनिराकरणाय विकल्पयति—किमन्यदिति ।

प्रथमस्तुशब्द एवकारार्थः । द्वितीयस्तु वाशब्दार्थः । किं कश्चिद्वादी केनचित्प्रमाणेनैव देहादिभ्योऽन्यदात्मतत्त्वं ग्राहयेत् ? किंवा प्रमाणेन विनैवाऽन्यस्य निवृत्त्या परिशेषितः ?—इति विकल्पार्थः ॥ १२४ ॥

प्रथमपक्षे विधिमुखेनैव प्रमाणप्रवृत्तिः सिद्ध्यतीतीष्टहानिः स्पष्टेत्यभिप्रेत्य द्वितीयं प्रत्याह—शब्देनैवेति ।

शब्देन प्रमाणेनाऽनात्मनिवृत्तिरेव चेदिहोच्यते इति संबन्धः । तदाऽध्यक्षस्य अध्यक्षसत्त्वस्य, अन्यतोऽप्रसिद्धत्वात्, परिशेषासिद्धेः, शून्यतैवावशिष्येत, नात्मेत्यर्थः ॥ १२५ ॥

---

(१) 'सिद्धित्वा'—पाठः (२) बृ. उ. ४. ३. ९. (३) बृ. उ. ४. ३. ६. (४) कठ. उ. ५. १५.; श्वे. उ. ६. १४.; मुं. उ. २. २. १०.

चेतनस्त्वं कथं देह इति चेद्रामसिद्धितः ।
चेतनस्याऽन्यतः सिद्धावेवं स्यादन्यहानतः ॥ १२६ ॥
अध्यक्षः स्वयमस्त्येव चेतनस्याऽपरोक्षतः ।
तुल्य एवं प्रबोधः स्यादन्यस्याऽसत्त्ववादिना ॥ १२७ ॥
अहमज्ञासिषं चेदमिति लोकस्मृतेरिह ।
करणं कर्म कर्ता च सिद्धास्त्वेकक्षणे किल ॥ १२८ ॥

ननु चेतनाचेतनयोर्विरुद्धरूपत्वकथनेनाऽन्यनिवृत्ति शब्देन नियत, तथा चाऽचेतनविरुद्धश्चेतन परिशिष्यत इति न शून्यताप्रसङ्ग इत्याशङ्क्य परिहरति—चेतनस्त्वमिति ।

अप्रसिद्धितो नैवमित्युक्त साधयति—चेतनस्येति । अयमर्थ —सिद्धे हि धर्मिणि प्रतियोगिनि चायमय न भवतीति तादात्म्यनिषेधेन विरुद्ध-रूपत्वोपदेश स्यात्, न चाऽद्यापि चेतनपदार्थ प्रमृ सिद्ध इत्यनेनैव तत्माधनेऽन्योन्याश्रय स्यादिति ॥ १२६ ॥

आत्मा नाऽत्यन्तमप्रसिद्ध , तस्य स्वत सिद्धत्वादित्याशङ्कते—अध्यक्ष इति ।

चेतनस्य स्वतोऽपरोक्षत्वादित्यर्थ । दूषयति—तुल्य इति । एव सति अन्यस्याऽसत्त्ववादिना शून्यवादिना तुल्य सम प्रबोध स्यात्, यथा शून्य-वादिन प्रमाण विना स्वत सिद्ध शून्यमात्मेति न प्रबोधसिद्धि , तथा-ऽध्यक्षस्यापि तवेत्यर्थ ॥ १२७ ॥

इदानीं स्मृतिबलेन स्वत सिद्धाध्यक्षसिद्धिं शङ्कते—अहमज्ञासिषमिति ।

अहमिदमज्ञासिषमितीह व्यवहारे लोकस्य युगपत्स्मृतिदर्शनात्, अन-नुभूत स्मृत्यभावात्, करणकर्मकर्तारस्त्रयोऽप्येकक्षण प्राग्येन सिद्धा , सो-

असाधारण्येनावगम्य, अत्र त्रये परस्परापेक्षसिद्धिके आगमापायिनि वर्तमानं स्वत सिद्धं तदवधिभूतमनागमापायि साक्षिणं यो जानाति सम्यगवगच्छति, स आत्मवित् त्वंपदलक्ष्यप्रत्यगात्मविदिति योजना । तदुक्तं श्रीभागवते—

'एकमेकतराभावे यदा नोपलभामहे ।
त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥' इति ॥१२०॥

---

(१) २. १०. ९. श्रीमद्भागवते क्वचित्क्वचिदपि अनेकग्रन्थग्रन्थय न्यस्ताः । अय श्लोक एका ग्रन्थि । तदर्थावबोध पूर्वश्लोकावबोधसापेक्ष । अत प्रथम सव्याख्य. स सगृह्यते—

योऽध्यात्मिकोऽय पुरुष सोऽसावेवाधिदैविक. ।
यस्तत्रोभयविच्छेद स स्मृतो ह्याधिभौतिक ॥ ८ ॥

अस्यार्थ —योऽयमध्यात्मिक पुरुष चक्षुरादिकरणाभिमानी द्रष्टा जीव , स एवासावाधिदैविक पुरुष सूर्यादि । अत्र पुरुषस्य जीवस्योपाधित्वात् इन्द्रियादौ पुरुषशब्दप्रयोग —"स वा एष पुरुषोऽन्नरसमय " (तै. उ २. १.) इत्यादिश्रुते । यदिद अध्यात्म चक्षुरादिकरण स एवासावाधिदैविकश्चक्षुराद्यधिष्ठाता सूर्यादि पुरुष स्मृत , इन्द्रियतदधिष्ठानयोरपि सूर्यादिरत्नेनैकरूप्यात् । यस्तु तत्रैकस्मिन्नेवोभयो आध्यात्मिकाधिदैवरूपयोर्विच्छेदो भेदो यतस्तथाविधचक्षुर्गोलकाद्युपलब्धितो दृश्यो देह , स ह्याधिभौतिक पुरुष स्मृत । अभिन्नयोरपि करणतदधिष्ठात्रोर्गोलक एव भेदो युज्यत, अन्यत्र करणस्थित्यभावेन भेदबोधाभावात् । एव च इन्द्रियमध्यात्मिक, देवता आधिदैविक, गोलकमाधिभौतिक, विषयोऽप्याधिभौतिक इति ॥

अथ प्रकृतश्लोकार्थ —एकमेकतराभाव इत्येतेषामन्योन्यसापेक्षसिद्धत्वे नानात्मत्व सूचयति । तथा हि—दृश्य विना तत्प्रतीत्यनुमेयं करण न सिध्यति, नाऽपि द्रष्टा, न च तद्विना करणप्रवृत्त्यनुमेयस्तदधिष्ठाता सूर्यादि , न च तद्विना करण प्रवर्तत, न च तद्विना दृश्यम्—इत्यत्र यदेकतरस्याऽभावे एकमपि नोपलभामहे—न पश्याम , तत्र तदा तदाध्यात्मिकादित्रितयमालोचनात्मकेन प्रत्ययेन यो वेद—साक्षितया पश्यति,

सम्यक्संशयमिथ्योक्ताः प्रत्यया व्यभिचारिणः ।
एकैवावगतिस्तेषु भेदस्तु प्रत्ययार्पितः ॥ १२१ ॥
आधिभेदाद्यथा भेदो मणेरवगतेस्तथा ।
अशुद्धिः परिणामश्च सर्वं प्रत्ययसंश्रयात् ॥ १२२ ॥
प्रथनं ग्रहणं सिद्धिः प्रत्ययानामिहाऽन्यतः ।
आपरोक्ष्यात्तदेवोक्तमनुमानं प्रदीपवत् ॥ १२३ ॥

विवेकप्रकारमेव विशदयति—सम्यगिति ॥ १२१ ॥

भेदस्तु प्रत्ययार्पित इत्येतद्दृष्टान्तेन स्पष्टयति—आधिभेदादिति ।

मणेः स्फटिकादेः । प्रत्ययसंश्रयाद्धहरागप्रतिबिम्बकृताभाससंश्रयान्निमित्तादित्यर्थः ॥ १२२ ॥

ननु ग्राह्यग्रहणग्राहकातिरिक्तात्मसिद्धौ किं प्रमाणमुक्तमेतावता भवतीत्यपेक्षायां तदाह—प्रथनमिति ।

प्रत्ययानां विषयाकाराणां जाग्रत्स्वप्नावस्थानां प्रथनं स्फुरणं, ग्रहणमुपादानं—स्थितिर्वा—व्यवहारो वा, सिद्धिः स्वरूपलाभश्च, इह व्यवहारभूमौ अन्यतोऽन्यस्मादापरोक्ष्यादपरोक्षस्वभावाद्भवितुमर्हति, अचित्स्वभावत्वात् । अचित्स्वभावत्वं चागमापायित्वात्, प्रदीपवदित्येतदेवानुमानमिहोक्तमित्यर्थः । विमताः प्रत्ययाः स्वविलक्षणान्याधीनप्रथनग्रहणसिद्धिकाः,

---

स आत्मैव स्वाश्रयाश्रय—स्वाश्रय अनन्याश्रयः, स चासौ अन्येषामाश्रयश्चेति । अन्यथा सिद्धिः अन्यसापेक्षा, आत्मनः सिद्धिर्नान्यापेक्षा । अत एव व्यभिचारित्वात्तेषां मायामयत्वम् ।

(१) तुल्य—१७ १६.

प्रामाण्येऽपि स्मृतेः शैघ्र्याद्यौगपद्यं विभाव्यते ।
क्रमेण ग्रहणं पूर्वं स्मृतेः पश्चात्तथैव च ॥ १२९ ॥
अज्ञासिषमिदं मां चेत्यपेक्षा जायते ध्रुवम् ।
विशेषोऽपेक्ष्यते यत्र तत्र नैवैककालता ॥ १३० ॥

ऽस्त्यध्यक्षः स्वतःसिद्ध इति गम्यते । किंचेदयनभिमतत्वद्योतनात् पूर्वपक्षता द्योतितेत्यर्थः ॥ १२८ ॥

एतन्निराकरोति—प्रामाण्येऽपीति ।

स्मृतेः पूर्वानुभवगमकत्वेन प्रामाण्येऽपि न युगपद्विषयसिद्धिगमकत्वं, यतः पूर्वं क्रमेण कर्त्रादीनां ग्रहणमभूत्, तथैव च पश्चादुत्तरकाले स्मृतेः संभवः, अतः शैघ्र्यान्नैरन्तर्येणाविलम्बाद्यौगपद्यं विभाव्यते मृषैवेत्यक्षरार्थः । अर्थद्वयस्यैकस्मृत्यवभास्यत्वे निश्चिते सत्येवं स्यात्, न तु तन्निश्चेतुं शक्यते । यतोऽहमिदं जानामीति क्रमेण व्यपदिश्यते, अतो ग्राह्यस्फुरणस्य ग्राहकग्रहणाकारतासंभवात्, तत्काले तयोर्न भानं संभवति । एवं ग्राहकस्य प्रतीचः स्फुरणसमये ग्राह्यस्य पराचो नास्ति स्फुरणं, विरुद्धाकारद्वयस्यैकस्मिन् प्रमाणज्ञाने स्फुरणासंभवात् । तथा ज्ञानस्यापि विषयैकाकारत्वात् तत्स्फुरणेन ज्ञातृस्फूर्तिरिति क्रमेणैव ज्ञात्रादिसिद्धिः प्रागुन्नेया । तस्मादुत्पलपत्रशतभेदनयौगपद्याभिमानवत् युगपत्स्मृतिरित्यभिमानः शैघ्र्यनिबन्धन इति भावः ॥ १२९ ॥

स्मृतेर्यौगपद्याभावे कारणान्तरमाह—अज्ञासिषमिति ।

इदमित्याकारो हि प्रत्यगपेक्षयोल्लिख्यते, तथा मामिति परागपेक्षया धीर्जायते । तथाच यत्र विशेषोऽन्यप्रतियोगिकोऽपेक्ष्यते, तत्रैककालतायौगपद्यं नैव घटत इत्यर्थः ॥ १३० ॥

आत्मनो ग्रहणे चाऽपि त्रयाणामिह संभवात् ।
आत्मन्यासक्तकर्तृत्वं न स्यात्करणकर्मणोः ॥ १३१ ॥
व्याप्तुमिष्टं च यत्कर्तुः क्रियया कर्म तत्स्मृतम् ।
अतो हि कर्तृतन्त्रत्वं तस्येष्टं नाऽन्यतन्त्रता ॥ १३२ ॥

स्मृतेर्विषयतः, स्वरूपतश्च यौगपद्यासंभवात् कर्त्रादिसिद्धयैक्यानुमापकत्वानुपपत्तिरित्युक्तं, संप्रति कर्त्रादीनां युगपदनुभवसाधनाभावादपि न युगपत्तत्सिद्धिसंभावनेत्याह—आत्मन इति ।

अयमर्थः—यथा विषयस्य ग्रहणे कर्ता, करणं, कर्म चेति त्रितयमपेक्षते, एवं प्रत्येकं कर्त्रादिग्रहणेऽपि त्रितयमपेक्षणीयं, तथा चात्मनः प्रमातुः, चकारात् प्रमेयस्य प्रमाणज्ञानस्य च, ग्रहणेऽपि त्रयाणां कर्त्रादीनामिहापेक्षासंभवात्, तत्तत्कर्त्रादिस्फुरणमन्तरेण तत्तदर्थस्य तदनुभूतत्वनियमासिद्धेः कर्त्राद्यनवस्था प्रसज्येतेत्यर्थः । तैरेव कर्त्रादिभिः स्वस्वरूपसिद्धिसंभवात् किमित्यनवस्थेति शङ्कां वारयति—आत्मनीति । आत्मन्येकस्मिन्नेव स्वसिद्धावासक्तमुपक्षीणं यत्कर्तृत्वं, तदेव करणकर्मणोः सिद्धौ न स्यादित्यर्थः । तथाचैकस्मिन्नवभासे कर्त्रादिभावेनाऽन्वीयमानानां तदैवाऽवभासान्तरसाधनत्वान्वयायोगात्, न कर्त्रादित्रितयस्य युगपदनुभवसाधनसंभावनेति तदसिद्धिस्तदवस्थेत्यर्थः॥१३१॥

कर्त्रादीनां युगपत्सिद्ध्यभ्युपगमे व्याकरणविरोधोऽपि स्यादित्याह—व्याप्तुमिति ।

कर्तुः क्रियया यद्व्याप्तुमिष्टतमं तत्कर्म स्मृतम् । 'कर्तुरीप्सिततमं कर्म'[1] इति पाणिनिना स्मृतमित्यर्थः । हि यस्मादेवं, अतस्तस्य कर्मणः सकलकारकप्रयोक्तृस्वतन्त्रकर्तृतन्त्रत्वमिष्टं, न तद्व्यतिरिक्ताध्यक्षतन्त्रता, उक्तन्यायेन तत्साधकासिद्धेरित्यर्थः ॥ १३२ ॥

---

(१) १. ४. ४९.

शब्दाद्वाऽनुमितेर्वाऽपि प्रमाणाद्वा ततोऽन्यतः ।
सिद्धिः सर्वपदार्थानां स्यादज्ञं प्रति नाऽन्यथा ॥ १३३ ॥
अध्यक्षस्यापि सिद्धिः स्यात्प्रमाणेन विनैव वा ।
विना स्वस्य प्रसिद्धिस्तु नाज्ञं प्रत्युपयुज्यते ॥ १३४ ॥
तस्यैवाऽज्ञत्वमिष्टं चेज्ज्ञानत्वेऽन्या मतिर्भवेत् ।
अन्यस्यैवाऽज्ञतायां च तद्विज्ञाने ध्रुवा भवेत् ॥ १३५ ॥

तस्माद्विविरूपेण प्रवृत्तादेव प्रमाणादभिमतवस्तुसिद्धिः, नान्यनिषेधमात्रावसानादिति निर्णीतमित्युपसंहरति—शब्दाद्वेति ।

अन्यतोऽन्यस्मात्प्रत्यक्षादेर्वेत्यर्थः ॥ १३३ ॥

जडानां प्रवृत्तप्रमाणादेव सिद्धिरस्तु, न स्वयंचेतनस्येत्याशङ्कयाह—अध्यक्षस्यापीति ।

येयमध्यक्षस्य सिद्धिरज्ञस्य, सा प्रमाणाधीना ? न वा ? इति विकल्प्य, अन्त्ये स्वरूपप्रकाशमात्रस्य विना प्रमाणेन सिद्धावपि, नाज्ञं प्रत्यध्यक्षता तस्य सिद्ध्यतीति दूषयति—विना स्वस्येति ॥ १३४ ॥

अध्यक्षस्वरूपमपि विकल्प्य प्रमाणाधीनसिद्धिकता तस्य दर्शयन्नाद्यं पक्षमभ्यनुजानाति—तस्यैवेति ।

तस्यैव ज्ञानस्वरूपस्य चेतनस्यैवाज्ञत्वमिष्टं चेत्, तदाऽस्य ज्ञानत्वे चेतनत्वेऽन्या प्रमाणजन्या मतिरपेक्षणीया भवेत्, अन्यस्यैवाऽचेतनस्याहंकारस्यैवाऽज्ञतायां तद्विज्ञानेऽध्यक्षविज्ञाने चाऽन्या मतिर्ध्रुवा भवेदिति योजना । उभयथाऽपि विधिमुखप्रमाणाधीनाऽध्यक्षसिद्धिरित्यर्थः ॥ १३५ ॥

---

(१) अस्मात्—पाठ· (२) नान्य—पाठ· । ज्ञान—नि· सा· पाठ । तदनुसारी मूलेऽपि 'ज्ञान' इति पाठ स्यात् । पश्य १३८ श्लोकटीकाम् ।

ज्ञातता स्वात्मलाभो वा सिद्धिः स्यादन्यदेव वा ।
ज्ञातत्वेऽनन्तरोक्तौ त्वं पक्षौ संस्मर्तुमर्हसि ॥ १३६ ॥
सिद्धिः स्यात्स्वात्मलाभश्चेद्यत्नस्तत्र निरर्थकः ।
सर्वलोकप्रसिद्धत्वात् स्वहेतुभ्यस्तु वस्तुनः ॥ १३७ ॥
ज्ञानज्ञेयादिवादेऽतः सिद्धिर्ज्ञातत्वमुच्यते ।
अध्यक्षाध्यक्ष्ययोः सिद्धिर्ज्ञेयत्वं नाऽऽत्मलाभता ॥ १३८ ॥

अध्यक्षस्य सिद्धस्वरूपत्वान्मानापेक्षा नास्तीत्याशङ्क्य सिद्धिशब्दार्थ एव तर्हि वक्तव्य इत्याह—ज्ञाततेति ।

किं ज्ञानं सिद्धिः, स्वरूपलाभो वा, स्यादन्यदेव वा—उभयान्यप्रकारो वा ? इति विकल्पार्थः । तत्राद्ये दोषमाह—ज्ञातत्वे इति । अनन्तरोक्तौ 'तस्यैवाज्ञत्वमिष्टं चेत्' इत्यादिना पूर्वश्लोकोक्तौ पूर्वोक्तविकल्पदूषणप्रसराभावः कल्पः साधुरित्यर्थः ॥ १३६ ॥

द्वितीयमनूद्य दूषयति—सिद्धिः स्यादिति ।

निरर्थकत्वे हेतुमाह—सर्वलोकेति । वस्तुनः सर्वस्य स्वहेतुभ्यः स्वात्मलाभरूपा सिद्धिरिति सर्वलोकप्रसिद्धत्वात्तत्र प्रमातृप्रमाणप्रयासो व्यर्थः स्यादित्यर्थः ॥ १३७ ॥

तृतीयं पक्षमप्रसिद्धिपराहतं मत्वा वक्ष्यमाणपक्षविशेषज्ञापनार्थमुक्तं पक्षं निगमयति—ज्ञानज्ञेयादीति ।

ज्ञानं, ज्ञेयं, ज्ञाता चास्तीति यस्य वादस्तस्मिन् वादे ज्ञातत्वमेव सिद्धिरुच्यते, अध्यक्षाध्यक्ष्ययोस्तु पुनर्ज्ञेयत्वमेव सिद्धिः, न स्वात्मलाभतेत्यर्थः । "अध्यक्ष्यस्यापि" इत्यादेरपरा योजना—"अहमज्ञासिषं चेदम्" इत्या-

---

(१) १८. १३४. (२) १८. १३८.

स्पष्टत्वं कर्मकर्त्रादेः सिद्धिता यदि कल्प्यते ।
स्पष्टताऽस्पष्टते स्यातामन्यस्यैव न चाऽऽत्मनः ॥ १३९ ॥

रन्येयता मन्येन कर्तृकर्मकरणाना विधिमुखेन प्रवृत्तप्रमाणादेव सिद्धिः, नान्यथेति प्रासङ्गिकमुपपादितमुपसंहृत्य, अध्यक्षस्यापि वस्तुत्वाविशेषात्प्रवृत्तप्रमाणादेव सिद्धिरिति प्रकृतमनुसरन्नाह—अध्यक्षस्यापीति । वाशब्दः कटाक्षे । अध्यक्षस्यापि द्रष्टुरपि प्रमाणेन विनैव सिद्धिः स्याद्वा ? इति योजना । नैव स्यादित्यर्थः । चेतनत्वादध्यक्षस्य प्रमाणेन विना कथं न सिद्धिरित्यत आह—विनेति । प्रमाणेन विना स्वस्य वस्तुनः प्रसिद्धिस्तु ज्ञानं प्रमिति प्रयुपयुज्यते, ज्ञानस्यैव स्वरूपस्फुरणं प्रमाणानपेक्षा, न ज्ञातुरध्यक्षस्येत्यर्थः । कथमितिचेन्, तत्र वक्तव्यं—अध्यक्ष एवाह्नः सन् प्रमाणेन विनाऽर्थसिद्धिं साधयिष्यति, किं वाऽन्योऽन्तःकरणादिः ?—इति । तत्राऽऽद्यमनूद्य दूषयति—तस्यैवेति । चेतनस्याध्यक्षस्यैवेत्यर्थः । ज्ञानत्वेऽहमध्यक्ष इति ज्ञानवत्त्वेऽन्या मतिः प्रवृत्तप्रमाणजन्या मतिरपेक्षिता भवेत्, आगन्तुकसिद्धेरन्यनिमित्तत्वादित्यर्थः । द्वितीयमनूद्य दूषयति—अन्यस्येति । तद्विज्ञान इति । तस्याऽन्यस्यान्तःकरणादेरध्यक्षविषयविज्ञानेऽन्या प्रमाणजन्या मतिर्भिन्ना भवेदिति योजना । उभयथाऽपि विधिमुखेन प्रवृत्तप्रमाणादेवाध्यक्षसिद्धिरित्यर्थः । ज्ञाततेति । ज्ञातता ज्ञानवत्ता सिद्धिरिति पक्षे " तस्यैवाज्ञत्वमिष्टं चेत् " इति पूर्वश्लोकोक्तविकल्पदूषणप्रसरणमनिवारणं स्यादित्याह—ज्ञातत्वेऽनन्तरश्लोकाविति । यथाव्याख्यातौ स्वपक्षाविव्यर्थः । अन्यत्समानम् ॥ १३८ ॥

ननु ज्ञातता आत्मलाभातिरिक्ताऽप्यस्ति स्पष्टता नाम सिद्धिः, अतो नाप्रसिद्धं पक्षान्तरमिति मद्गमवमाशङ्क्य परिहरति—स्पष्टत्वमिति ।

(१) १८. १३१. (२) १८. १३२.

अद्रष्टुर्नैव चान्धस्य स्पष्टीभावो घटस्य तु ।
कर्त्रादेः स्पष्टतेष्टा चेद्द्रष्टृताऽध्यक्षकर्तृका ॥ १४० ॥
अनुभूतेः किमन्यस्मिन् स्यात्तवाऽपेक्षया वद ।
अनुभवितरीष्टा स्यात् सोऽप्यनुभूतिरेव नः ॥ १४१ ॥

स्पष्टत्वं प्राकट्यं कर्मकर्त्रादेः, स्पष्टास्पष्टते अप्यन्यस्यैव कर्त्रादिविलक्षणस्य साक्षिणश्चिदाभासजननेन स्यातां, न स्वात्मनः, कर्त्रादिस्वरूपस्य जडत्वादित्यर्थः ॥ १३९ ॥

एतदेव व्यतिरेकप्रदर्शनेन स्पष्टयति—अद्रष्टुरिति ।

अन्धस्य दर्शनवृत्तिरहितस्य ज्ञातुर्विषयीभूतस्य घटस्य यः स्पष्टीभावः, स नैव ज्ञानविषयतातिरिक्तो भट्टमते संभवतीत्यर्थः । एवं सति भट्टमतानुसारिणा कर्त्रादेः स्पष्टता प्राकट्यरूपेष्टा चेत्, तदा द्रष्टृता तद्विलक्षणाध्यक्षकर्तृकाऽवश्यमेष्टव्या, तस्मात्कर्मादेर्जडस्य स्पष्टतायाः प्रकाशापरपर्यायाया असंभवान्न स्पष्टता सिद्धिशब्दार्थः, किंतु ज्ञानविषयतैवेति कर्त्रादिगतचिदाभासनद्वारा तदधिष्ठानभूतश्चिदात्मा विधिमुखेनैवप्रदीपादिदृष्टान्तानुमानादिना प्रमाणेनावगन्तव्य इति भावः ॥ १४० ॥

अत्र कर्तृकर्मविहीन एव प्रत्ययः स्वमहिम्ना भासत इति वदन् विज्ञानवादी बौद्धः प्रत्यवतिष्ठते—अनुभूतेरिति ।

अनुभूतेः संवेदनस्याऽन्यस्मिन् कर्त्रादावपेक्षया तव किं फलं स्यात्तद्वद, न किंचित्फलं, तस्याः स्वप्रकाशत्वादित्यर्थः । अनुभवितरि आश्रयभूते सैष्टव्या स्यात्, तस्यास्तदधीनत्वदर्शनादिति चेत् त्वं ब्रूयाः, तर्हि सोऽप्यनुभविता नोऽस्माकं मतेऽनुभूतिरेव, न ततः पृथक्, तत्सत्त्वे प्रमाणाभावादित्यर्थः ॥ १४१ ॥

---

( १ ) किमयं श्लोकः ग्रन्थान्तरशब्दानुपूर्व्या, अर्थानुवादेन वा धृतः ?

" अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते " ॥ १४२ ॥
" भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते " ।
सत्त्वं नाशित्वमस्याश्चेत् सकर्तृत्वं तथेष्यताम् ॥ १४३ ॥

कथं तर्ह्यनुभूतिः, अनुभविता, अनुभाव्य इति भेददर्शनम्? इत्यत आह—अभिन्नोऽपि हीति ।

बुद्ध्यात्मा बुद्धिस्वभावोऽभिन्नोऽप्येकोऽपि विपर्यासितदर्शनैर्भ्रान्तिबुद्धिभिः पुरुषैर्ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते प्रतीयते । संवित्तिशब्दो ग्रहणशब्दपर्यायः ॥ १४२ ॥

बुद्धेः कारकत्वानङ्गीकाराच्च न कर्त्राद्यपेक्षेत्याह—भूतिरिति ।

---

(१) इयं कारिका द्वितीयपादे " विपर्यासितबुद्धिभिः " इति पाठान्तरेण बृ. उ. वार्तिके ४. ३. ४७६. श्लोकत्वेन धृता । आनंदज्ञानैस्तट्टीकायां कीर्ति-वाक्यमित्यादिना सा तत्र निर्दिष्टा । श्लो. वा. शून्यवादे १६ कारिकाव्याख्यायां न्यायरत्नाकरे, तथा सर्वदर्शनसंग्रहे बौद्धदर्शनेऽपीयं कारिका धृता । उभयोरपि प्रथमपादस्य " अविभागोऽपि बुद्ध्यात्मा " इति पाठः । वाचस्पतिमिश्रैरप्येषा यो. सू. ४. २३. तत्त्ववैशारद्यां धृता । तत्रैव वार्तिककारैरपि " विपर्यासित दर्शने " इति पाठभेदेन धृता ।

(२) " क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रियाः ।
भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ॥ "

—इति संपूर्णा कारिका बृ. उ. वार्तिके ४. ३. ४९४. टीकायां आनंदज्ञानैः कर्तृनामनिर्देश विनैव धृता । वार्तिककारैरपि ४. ३. ५८६. श्लोके प्रथमपादेन तथैव धृता । अस्याः कारिकायाः द्वितीयार्धं वाचस्पतिमिश्रैः ब्र. सू. २. २. २०. भामत्यां, तथा यो सू ४. २०. तत्त्ववैशारद्यां धृतम् । सुरेश्वराचार्यैः

न कश्चिचेष्यते धर्म इति चेत्पक्षहानता ।
नन्वस्तित्वादयो धर्मा नास्तित्वादिनिवृत्तयः ।
न भूतेस्तर्हि नाशित्वं स्याल्लक्षण्यं मतं हि ते ॥ १४४ ॥

येषा मते या भूतिरनुभूतिः, सैव क्रिया, सैव कारकमुच्यते । क्षणभङ्गुरत्वेन विरम्य व्यापारायोगात्, तेषां मते कस्तस्याः स्वव्यतिरिक्तोऽपेक्षणीयः स्यादित्यर्थः । प्रथममनुभूतेरन्यानपेक्षत्वं निराकरोति सिद्धान्ती—सत्त्वमिति । अनुभूतेरस्याः सत्त्वं स्वरूपसत्त्वं नाशित्वं क्षणभङ्गुरत्वमिष्टं चेत्तव, तर्हि तथा सकर्तृत्वमपीष्यतामनुभवस्याऽत्रापि सद्भावादित्यर्थः ॥ १४३ ॥

अथ सत्त्वादिरपि धर्मो नेष्यते इति मतं, तदा क्षणिकत्वपक्षस्याऽप्यसिद्धिरित्याह—न कश्चिदिति ।

---

धर्मकीर्तेः साक्षान्नामनिर्देशोऽपि बृ उ. वार्तिके ४. ३ ७५२ श्लोके क्रियते । कारिकाप्रथमार्धं तन्त्रवार्तिके १. ३. १०. 'क्रिया' इति एकवचनान्तेन पाठभेदेन धृता (¹) । सपूर्णा कारिका प्रज्ञाकरमतिकृतायां बोधिचर्यावतारपञ्जिकायां ९. ६. इत्यत्र धृता ।

तस्मात् धर्मकीर्त्यपेक्षया श्रीभगवत्पादानामर्वाचीनत्वं सिद्धमिति कालक्रमसाधुकरीभिक्षवो मन्यन्ते ।

( १ ) 'शब्दबुद्धिकर्मणा विरम्य व्यापाराभावात्' इति न्याय । तस्यार्थः—शब्द एकं बोधं जनयित्वा विरतव्यापारो न शाब्दबोधान्तरं जनयति, तथा बुद्धिरपि एकस्मिन्नर्थे ज्ञातता, संस्कारं वा जनयित्वा न ज्ञाततान्तरं संस्कारान्तरं वा, एवं कर्माऽप्येकत्र विभागमुत्पाद्य न विभागान्तरमित्यर्थः । ( २ ) "क्षणिकवादिनः यद्भवन, सैव क्रिया, तदेव च कारक—इत्यभ्युपगम. "—इति यो. सू. ४. २० भाष्ये । "क्षणिकवादिमते या वस्तुनः उत्पत्तिः, सैव क्रिया—तस्य कार्यं, सैव च तस्य कर्त्रादिकारकवर्गः । तन्मते सर्ववस्तु उत्पत्तिमात्रफलकं निर्हेतुकं स्वयमेव भवतीति सिद्धान्त. " । इति तत्रैव वार्तिके ।

स्वलक्षणावधिर्नाशो नाशोऽनाशनिवृत्तिता ।
अगोरसत्त्वं गोत्वं ते न तु तद्गोत्वलक्षणम् ॥ १४५ ॥

ननु नास्माभिर्विज्ञानस्य क्षणिकत्वादयो धर्मा इष्यन्ते, किंत्वक्षणिकत्वाद्यपोहरूप एव क्षणिकत्वादिरिष्यते, अतो नोक्तदोष इति शङ्कते—नन्विति । निराकरोति—नेति । एवं चेत्, तर्हि भूतेरनुभूतेर्नाशित्वं न सिद्ध्येत् । हि यस्मात्ते तव भूते. स्वालक्षण्यं मत—स्वेनैव लक्ष्यते ज्ञायते इति स्वलक्षणं, तस्य भाव: स्वालक्षण्यं—निर्विकल्पमात्रमिति यावत् । ततः सविकल्पत्वात्, अक्षणिकत्वासत्त्वात्, नाशित्वाज्ञत्वादिव्यावृत्ते., अनुभूतेश्च सविकल्पकज्ञानागोचरत्वात्, न सत्त्वनाशवत्त्वादिधर्मसिद्धिरित्यर्थ. ॥ १४४ ॥

एतदेव स्फुटयति—स्वलक्षणेति ।

अयमर्थः—कार्यं विनश्यन्न निरवधि नश्यति, इदमत्र नास्ति, इदमिदानीं नास्ति, नष्टं—इति वा नाशो व्यवह्रियते यस्मात्, तस्मात्किमप्यस्ति विनाशावधिभूतमविनश्यदनुत्पन्नं स्वत सिद्धं चेत्तमभ्युपय, तदेतदाह—स्वलक्षणावधिर्नाश इति । स्वरूपमेव लक्षणं प्रमाणं धर्मो वा यस्य स स्वलक्षण., सोऽवधिः सीमा यस्य विनाशस्य स तथेति विग्रह. । तथाच त्वन्मते आविर्भावतिरोभावयोरवधिभूतस्य स्थिरस्याभावान्न सत्त्वविनाशयो. सिद्धिरित्यर्थ. । किंच—अपोहपक्षेऽन्योन्याश्रयश्च प्रसज्येतेत्याह—नाश इति । सिद्धे नाशे तद्विरोधिनोऽनाशस्य सिद्धि , तत्सिद्धौ तदपोहरूपनाशसिद्धिरित्यर्थः । यत्तु सामान्यमनभ्युपगच्छता बौद्धेन 'अगोव्यावृत्तिः[१]' गोलक्षणमित्यभ्युपगम्यते तदनुपपन्नं, अन्योन्याश्रयस्य तादवस्थ्यादित्यभिप्रेत्याह—अगोरिति । गोरन्यस्याश्वादेरगोपदाभिधेयस्यासत्त्व

(१) तुल्य-पृ. २१६. ४ र्थं टिप्पणीम् ।

क्षणवाच्योऽपि योऽर्थः स्यात्सोऽप्यन्याभाव एव ते ॥१४६॥
भेदाभावेऽप्यभावस्य भेदो नामभिरिष्यते ।
नामभेदैरनेकत्वमेकस्य स्यात्कथं तव ॥ १४७ ॥
अपोहो यदि भिन्नानां वृत्तिस्तस्य कथं गवि ।
नाऽभावा भेदकाः सर्वे विशेषा वा कथंचन ॥ १४८ ॥

निवृत्तिरभावो गोत्वमिति ते मतं, तत्तु न गोत्वलक्षणं सिध्यति, अश्वस्यापि गोत्वव्यावृत्तिलक्षणतया परस्परापेक्षसिद्धित्वादित्यर्थः ॥ १४५ ॥

अपोहवादे दोषान्तरमाह—क्षणवाच्योऽपीति ।

अन्याभावोऽक्षणिकाभावः क्षण इति ते प्रसज्यते, अतः स्थिरोऽपि क्षणिकताविरोधी त्वयाभ्युपगतः स्यादित्यर्थः ॥ १४६ ॥

नन्वभावो नाम न सतो निवृत्तिरिष्यते येनातिप्रसङ्गः स्यात्, किंतु निरुपाख्य एवान्यव्यावृत्त्यात्मनाभिलप्यत इति शङ्कते—भेदाभावेऽपीति ।

अभावस्य स्वरूपतो भेदाभावेऽपि अगोत्वमश्वत्वं, अनश्वत्वं गोत्वमित्यादिनामभिः स्वरूपभेद इष्यत इत्यर्थः । दूषयति—नामभेदैरिति । एकस्य निःस्वभावस्याभावस्य नामभेदैर्निरर्थकसंज्ञाभेदैरनेकत्वमनेकपदार्थासाधारणतया व्यावृत्त्यात्मत्वं तव कथं घटेतेत्यर्थः ॥ १४७ ॥

किंच भिन्नानां व्यावृत्तिरपोहः ? अभिन्नानां वा ? तत्राद्यमनूद्य दूषयति—अपोहो यदीति ।

भेदप्रतियोगिनामानन्त्यात्, तदवगममन्तरेण तदपोहानवगमात्, तस्यापोहस्य गवि वृत्तिः कथं ?—सिद्ध्येदिति शेषः । तदसिद्धौ च किंचिदभावस्य कचित्सुलभत्वाद्व्यवहारानियमप्रसङ्ग इति भावः । द्वितीये दोषमाह—नाभावा इति । सर्वेऽप्यभावा अजत्वाश्वत्वाद्यपोहरूपा न भेदका न गोरि-

नामजात्यादयो यद्वत्संविदस्तेऽविशेषतः ॥ १४९ ॥
प्रत्यक्षमनुमानं वा व्यवहारे यदिच्छसि ।
क्रियाकारकभेदैस्तदभ्युपेयं ध्रुवं भवेत् ॥ १५० ॥
तस्मान्नीलं तथा पीतं घटादिर्वा विशेषणम् ।
संविदस्तदुपेयं स्याद्येन चाप्यनुभूयते ॥ १५१ ॥
रूपादीनां यथाऽन्यः स्याद्ग्राह्यत्वाद्ग्राहकस्तथा ।
प्रत्ययस्य तथाऽन्यः स्याद्व्यञ्जकत्वात्प्रदीपवत् ॥ १५२ ॥

तरेतरव्यावृत्तत्वबुद्धिजनकाः स्युः, तथा विशेषा वा भावरूपाः खण्ड-मुण्डत्वादयो भेदका न स्युः, भेद्यभेदकयोर्भेदासिद्धेरित्यर्थः ॥ १४८ ॥

एवं च अपोहवादे 'खण्डा गौः', 'नीलमुत्पलम्' इत्यादिविशिष्ट-व्यवहारासिद्धिः, 'इयं गौः' इत्याद्यसाधारणस्वरूपव्यवहारासिद्धिश्च स्यादित्यभिप्रेत्यापोहनिराकरणमुपसंहरति—नामजात्यादय इत्यर्धेन । ते तव मते संविदोऽविशेषतो निर्विशेषत्वान्नामजात्यादयो यद्वन्न विशेषणं, एवं गवादीनां अगवादिव्यावृत्तयः खण्डादयो वा न विशेषणमिति विशि-ष्टव्यवहारलोप एवेति जीवनमपि ते दुर्लभमिति भावः ॥ १४९ ॥

यदुक्तं—"भूतिर्येषां क्रिया सैव" इत्यत्र संविदः क्रियाकारकभेदापेक्षा नास्तीति—तत् प्रत्यक्षमनुमानं चेति प्रमाणद्वयाभ्युपगमविरुद्धमित्याह्—प्रत्यक्षमिति । स्पष्टार्थः ॥ १५० ॥

तथाच संवेदनातिरिक्तवेद्यवेदितृस्वरूपमनिच्छताऽप्यभ्युपेयमिति बौद्ध-मतनिराकरणमुपसंहरति—तस्मादिति ।

येन चाऽप्यनुभूयते, सोऽपि ज्ञाताऽभ्युपेयः स्यादित्यर्थः ॥ १५१ ॥

संवित्साक्षिण्यनुमानं प्रमाणमाह्—रूपादीनामिति ।

---

(१) प्रत्ययस्तत्तथान्य.—पाठः (२) १८. १४३.

अध्यक्षस्य दृशेः कीदृक्संबन्धः संभविष्यति ।
अध्यक्ष्येण तु दृश्येन मुक्त्वाऽन्यो द्रष्टृदृश्यताम् ॥ १५३ ॥
अध्यक्षेण कृता दृष्टिर्दृश्यं व्याप्नोत्यथाऽपि वा ।
नित्याध्यक्षकृतः कश्चिदुपकारो भवेद्धियाम् ॥ १५४ ॥
स चोक्तस्तन्निभत्वं प्राक्संव्याप्तिश्च घटादिषु ।
यथाऽऽलोकादिसंव्याप्तिर्व्यञ्जकत्वाद्धियस्तथा ॥ १५५ ॥

यद्ग्राह्यं, तत्स्वान्यग्राह्यं, यथा रूपादि, ग्राह्या च संविदिति बौद्धं प्रति प्रयोगो योज्यः । तथाऽवभासकोऽवभास्यादन्यः, व्यञ्जकत्वात्, घटादेः प्रदीपवदिति आस्तिकान् प्रति प्रयोक्तव्यमित्यर्थः । यथा रूपादीनां ग्राह्यत्वाद्ग्राहकोऽन्यः स्यात्, तथा प्रत्ययस्य ग्राह्यत्वाद्ग्राहकोऽन्यः स्यात्, तथा ग्राहकश्च ग्राह्यादन्यः स्यात्, व्यञ्जकत्वात्प्रदीपवदिति श्लोकयोजना ॥१५२॥

कस्तर्हि प्रत्ययाध्यक्षयोः संबन्ध इत्यपेक्षायामाह—अध्यक्षस्येति ।

द्रष्टृदृश्यसंबन्धाभ्युपगमे बलादाभासोऽभ्युपगन्तव्य इति दर्शयितुं विकल्पयति—अध्यक्ष्येणेति । अध्यक्ष्येण प्रत्ययेन दृशेरात्मनः कीदृक्संबन्धो भविष्यति—पारमार्थिको वा, अपारमार्थिको वा ?—इति विमर्शार्थः । तत्राद्यो दृशेः परिणामादिविकारप्राप्तिप्रसङ्गात् सावय इत्यभिप्रेत्य द्वितीयमङ्गीकरोति—नित्याध्यक्षेति ॥ १५३ ॥ १५४ ॥

कोऽसावुपकार इत्यपेक्षायामाह—स चोक्त इति ।

स च नित्याध्यक्षकृतो बुद्धेरुपकारस्तन्निभत्वं चिन्निभत्वं प्राक् पूर्वमेव मुखप्रतिबिम्बदृष्टान्तेनोक्त इत्यर्थः । उक्ताभासद्वाराऽऽत्मनो दृश्यग्राह्यविषय-

( १ ) सावयव—पाठः ( २ ) १८. ८७.

आलोकस्थो घटो यद्वद्बुध्यारूढो भवेत्तथा ।
धीव्याप्तिः स्याद्घटारोहो धियो व्याप्तौ क्रमो भवेत् ॥१५६॥
पूर्वं स्यात्प्रत्ययव्याप्तिस्ततोऽनुग्रह आत्मनः ।
कृत्स्नाध्यक्षस्य नो युक्तः कालाकाशादिवत्क्रमः ॥ १५७ ॥

सनन्ध वक्तु साभासाया बुद्धेर्विषयव्याप्तिं सदृष्टान्तमाह—सव्याप्तिश्चेति । यथा घटादिष्वालोकादिसव्याप्तिर्व्यञ्जकत्वात्, तथा धियो दृश्यघटादिव्याप्तिरित्यर्थ. ॥ १५५ ॥

उक्तमेव स्फुटयति—आलोकस्थ इति ।

यद्वद्यथाऽऽलोकनिविष्टो घट आलोकारूढो भवेत्, तथा बुद्धिनिविष्टो बुद्ध्यारूढो भवेत् । आरूढ इत्युक्ते पुरुषाश्रयोरिवोपर्यधोभाव इति शङ्का वारयति—धीव्याप्ति स्यादिति । यद्येव विषयव्याप्तिमात्रमेव धियो विषयव्यञ्जकत्व, तर्ह्यात्मनो बुद्धेश्च को विशेष इत्याशङ्क्य विशेषमाह—धियो व्याप्तौ क्रमो भवेदिति ॥ १५६ ॥

धियो विषयव्याप्तौ क्रमो भवेत्, नात्मन , इत्यर्थादुक्त विशेष विशदयति—पूर्वमिति ।

धियो विषयव्याप्तिं पूर्वं प्रथममिव प्रथम स्यात्, ततो विषयाकारताया सिद्धायामात्मनोऽनुग्रहस्तदाकारे प्रतिबिम्बभाव., तद्वलाच विषयव्यञ्जकत्वमिति क्रमद्रष्टृत्वमन्यशेषत्व च धिय. सिध्यति, न तथाऽऽत्मन इत्याह—कृत्स्नाध्यक्षस्येति । प्रत्यर्थं परिणामभेदेन व्यञ्जकत्वाद्बुद्धेरेव क्रमो युक्त, कृत्स्नाध्यक्षस्य सर्वविक्षेपास्पदतया सर्वदा सर्वत्रानुगतप्रकाशरूपस्यापरिच्छिन्नस्यात्मनो न युक्त ■ क्रम इत्यर्थ । देशत, कालतो वा क्रमाभावे दृष्टान्त —कालाकाशादिवदिति ॥ १५७ ॥

---

( १ ) विषयव्यंजकत्वमिति व्या°—पाठ

विषयग्रहणं यस्य कारणापेक्षया भवेत् ।
सत्येव ग्राह्यशेषे च परिणामी स चित्तवत् ॥ १५८ ॥
अध्यक्षोऽहमिति ज्ञानं बुद्धेरेव विनिश्चयः ।
नाध्यक्षस्याविशेषत्वान्न तस्यास्ति परो यतः ॥ १५९ ॥

नन्वध्यक्षस्यापि भोग्यविषयावभासकत्वाद्बुद्धेरिव परिणामः प्राप्नोतीत्याशङ्क्याह—विषयग्रहणमिति ।

कारणापेक्षया कर्त्रादिकारकापेक्षया, ग्राह्यशेषे स्वासंसृष्टविषयान्तरावशेषे च सति, यस्य विषयग्रहणं भवेत् स परिणामी स्याच्चित्तवत्, नैवमात्मनो विषयावभासनं, किंतु नित्यसिद्धप्रकाशस्वभावेन युगपत्स्वाध्यस्तसमस्तावभासनम्—इत्यतो न तस्मिन् परिणामशङ्कावकाश इत्यर्थः ॥ १५८ ॥

यद्यपि तस्योक्तरीत्या भोग्यविषयाकारपरिणामो नास्ति, तथापि ब्रह्मज्ञानाकारेण परिणामः स्यात्, ब्रह्मणः स्वात्मत्वे सत्यपि तदाकारावभासस्याऽऽगन्तुकज्ञानसापेक्षत्वादित्याशङ्क्याह—अध्यक्षोऽहमितीति ।

तत्त्वमस्यादिवाक्यादध्यक्षः परमात्मैवाहमिति यज्ज्ञानं जायते, तन्नाध्यक्षस्य साक्षिणः परिणामः, तस्य अविशेषत्वात्—स्वतः, परतो वा निरवयवस्यासङ्गस्य विशेषासंभवात्, किंतु बुद्धेरेव साभासाया विनिश्चयोऽवस्थाविशेष इत्यक्षरार्थः । एतदुक्तं भवति—अनेकजन्मानुष्ठितयज्ञादिकृताऽदृष्टदोषनिवृत्तिसंस्कारवत्याः, सगुणब्रह्मोपासनानिराकृतचाञ्चल्यायाः, सांप्रतं विवेकवैराग्यशमादिगुणसंस्कृतायाः, पदार्थद्वयपरिशोधनज्ञानाहितदृढसंस्कारायाश्च बुद्धेस्तत्त्वमस्यादिवाक्यश्रवणसमनन्तरमबोधितपदार्थगतकल्पितभेदांशतिरोधानेनाखण्डाकारा काचिदवस्था जायते, तस्यां प्रतिबिम्बितश्चिदात्मा तादृग्वृत्त्यविविक्ताकारेणाहमिति परामृश्यते, ततो विविक्ता-

( १ ) करणा—पाठ ( २ ) यज्ञादिकापहृतादृष्ट—पाठ । ( ३ ) परामृश्येत अतो—पाठः

कर्त्री चेदहमित्येवमनुभूयेत मुक्तता ।
सुखदुःखविनिर्मोको नाहंकर्तरि युज्यते ॥ १६० ॥
देहादावभिमानोत्थो दुःखीति प्रत्ययो ध्रुवम् ।
कुण्डलीप्रत्ययो यद्वत्प्रत्यगात्माभिमानिना ।
बाध्यते प्रत्ययेनेह विवेकेनाऽविवेकवान् ॥ १६१ ॥

कारमेनोपाध्यंशापोहेन स्वमेव रूपं प्रज्ञेति प्रतिपद्यत इति न तस्मिन् कोऽपि विशेष उपजायत इति । चिदात्मनः परिणामाभ्युपगमे परिणामिनश्चित्तवत् स्वान्यवेद्यत्वनियमादात्मनोऽप्यन्यः साक्षी कल्प्येत, तदनुपपन्नं, अनवस्थानादप्रमाणकत्वाच्चेत्यभिप्रेत्याह—न तस्यास्ति परो यत इति॥१५९॥

यदाऽप्येवमन्तःकरणस्यैव ज्ञानाकारपरिणामः, तदाऽपि तस्य न ज्ञानफलभागिता, किंत्वात्मन एवेत्यभिप्रेत्याहंकर्तुः फलसंबन्धे दोषमाह—कर्त्री चेदिति ।

कर्त्री विकारिणा चेत् 'अहं मुक्तः' इति मुक्तत्वानुभूयेत, तदा नाहं कर्ता इति कर्तृत्वोपमर्देनेन सुखदुःखविनिर्मोकोऽसंबन्धस्तस्मिन्न युज्यते, कर्तुः सुखादिमत्त्वानुभवविरोधादित्यर्थः । कर्तुरपि क्रियया सह तदा विलीयमानत्वात्, न तस्य फलसंबन्ध इति भावः ॥ १६० ॥

आत्मन्यपि कथं फलसंबन्धः, तस्य कूटस्थनित्यत्वादित्याशङ्क्य तत्त्वज्ञानोदयानान्तरीयकतया बाध्यमानाध्यस्तानात्मसंभेदावभासस्य फलत्वोपचारात्, तस्य चात्मन्येवोपपत्तेरित्यभिप्रेत्याह—देहादाविति ।

दुःखीत्युपलक्षणम् । सुखी कृशः स्थूलः कामी क्रोधीत्यादयः कुण्डलस्य स्वसंबन्धित्वाभिमानकृते तत्संयोगवियोगयोः सुखदुःखे यद्वदिति दृष्टान्तार्थः । एवं बाध्यस्याध्यस्तत्वमुक्त्वा तस्य बाधमाह—प्रत्यगात्माभिमानिनेति । अविवेकवानाभिमानिकः प्रत्ययो विवेकेन प्रत्यगात्माभिमानिना

विपर्यासेऽसदन्तं स्यात्प्रमाणस्याप्रमाणतः ॥ १६२ ॥
दाहच्छेदविनाशेषु दुःखित्वं नान्यथाऽऽत्मनः ।
नैव ह्यन्यस्य दाहादावन्यो दुःखी भवेत्क्वचित् ॥ १६३ ॥
अस्पर्शत्वाददेहत्वान्नाहं दाह्यो यतः सदा ।
तस्मान्मिथ्याभिमानोत्थं मृते पुत्रे मृतिर्यथा ॥ १६४ ॥

शुद्धत्वंपदार्थात्माभिमानिना प्रत्ययेन बाध्यत इत्यन्वयः । प्रत्यगात्माभिमा-निनेति पाठान्तरं सुगमम् । अत्र प्राग्वृद्धेनार्धेन सह गणनयेह वृद्धमर्ध-मेकीकृत्य ॥ १६१ ॥

अविवेकवता विवेकीप्रत्ययः कस्मान्न बाध्यते, विशेषस्य समत्वादित्यत आह—विपर्यास इति ।

वैपरीत्ये प्रमाणस्याप्रमाणतापातात् सर्वमसदन्तं शून्यान्तं स्यात् । प्रामा-णिकस्यार्थस्यासत्त्वे प्रतिभासस्य निरालम्बनत्वापत्तौ निरवधिको बाध इति शून्यान्ततप्रसङ्ग इत्यर्थः । अयमर्धोऽप्येकः ॥ १६२ ॥

विवेकेनाविवेकबाधो भवतीति पूर्वमुक्तं प्रपञ्चयति—दाहच्छेदेति ।

दाहादिदेहोपघातनिमित्तं हि दुःखमनुभूयते, नान्यथा, तच्च देहाभिमा-ननिबन्धनं, अन्यथा सुषुप्तावपि प्रसङ्गात् । आत्मा च देहादेरन्य इति प्रमा-णसिद्धं, अतोऽन्यगतदाहादिनाऽन्यस्य दुःखेऽतिप्रसङ्गादध्यासनिबन्धनं दुः-खयहमस्मीति ज्ञानमित्यर्थः ॥ १६३ ॥

आत्मनः स्वतो दाहादिसम्बन्धाभावे प्रमाणमाह—अस्पर्शत्वादिति । फलितं सदृष्टान्तमुपसंहरति—तस्मादिति ॥ १६४ ॥

---

(१) १८ १४६

कुण्डल्यहमिति ह्येतद्बाध्येतैव विवेकिना ।
दुःखीति प्रत्ययस्तद्वत् केवलाहंधिया सह ॥ १६५ ॥
सिद्धे दुःखित्व इष्टं स्यात् तच्छक्तिश्छन्दसात्मनः ।
मिथ्याभिमानतो दुःखी तेनाऽर्थापादनक्षमः ॥ १६६ ॥
अस्पर्शोऽपि यथा स्पर्शमचलश्चलनादि च ।
अविवेकात्तथा दुःखं मानसं चात्मनीक्षते ॥ १६७ ॥

प्रागुक्तं दृष्टान्तं विवृण्वन् विवेकिप्रत्ययेनाऽविवेकी बाध्यत इत्युपपादितमुपसंहरति—कुण्डलीति ।

केवले शुद्धे ब्रह्मण्येवाहंधीः केवलाहंधीस्तयेति विग्रहः ॥ १६५ ॥

नन्वदुःखिनो मोक्षोपदेशानुपपत्तेरात्मनोऽपि दुःखित्वमवगम्यते, तत्स्वत्सिद्धये शक्तिमत्त्वं गम्यते, अतो नान्यगतेन निमित्तेनैव दुःखी, किंतु स्वतोऽपीति सुषुप्त्यादावपि शक्तिमत्त्वमनिवारितमिति चेत्, तत्राह—सिद्ध इति ।

कस्यांचिदप्यवस्थायां यद्यात्मनः केवलस्य दुःखित्वं प्रमाणसिद्धं स्यात्, तथा सति छन्दसा इच्छया तच्छक्तिर्दुःखित्वशक्तिः कल्प्येत, न सा कल्पयितुं शक्यते, दुःखदर्शनस्यान्यथोपपत्तेरित्याह—मिथ्येति । अत्र ह्यन्वयव्यतिरेकौ दर्शितौ । तेन मिथ्याभिमाननिबन्धनत्वेनार्थापादनक्षमो दुःखित्वानुभव इति योजना । अर्थादनुपपत्त्या यद्दुःखित्वशक्तिमत्त्वापादनं, तस्य क्षमः समर्थोऽयमनुभव इत्यन्यथोपपत्तिरित्यर्थः । तथाच यथादर्शनं दुःखशक्तिमत्त्वमपि मिथ्यैवेति भावः ॥ १६६ ॥

तमेवान्यथोपपत्तिं साधयति—अस्पर्शोऽपीति ।

निरवयवस्य पूर्णस्यात्मनो यथा स्पर्शचलनादिदर्शनमविवेकादेव—आदि-

(१) सदा—पाठः

विवेकात्मधिया दुःखं नुद्यते चलनादिवत् ।
अविवेकस्वभावेन मनो गच्छत्यनिच्छतः ॥ १६८ ॥
तदा तु दृश्यते दुःखं नैश्चल्ये नैव तस्य तत् ।
प्रत्यगात्मनि तस्माद्दुःखं नैवोपपद्यते ॥ १६९ ॥
त्वंसतोस्तुल्यनीडत्वान्नीलाश्ववदिदं भवेत् ॥ १७० ॥

शब्दाच्छयनोत्थानोपवेशनादि गृह्यते, चकारात्परिच्छिन्नत्वाभिमानः—तथा मानसं मनःकल्पितं च दुःखमविवेकादेवात्मनीभूत इत्यर्थः ॥ १६७ ॥

अविवेकादेव दुःखदर्शनमात्मनीत्येतदन्वयव्यतिरेकाभ्यामुपपादयति—विवेकेति ।

विवेकरूपयात्मधियेत्यर्थः । यस्मात्स्थूलदेहविवेकात्मज्ञानेन चलनादि स्थूलदेहसंबन्धि मिथ्याध्यस्तमात्मनि निवर्तते, तथा सूक्ष्मदेहाविवेकनिमित्तं दुःखं ब्रह्मात्मज्ञानेन समूलं निवर्तत इत्यर्थः ॥ १६८ ॥

अनिच्छतोऽप्यविवेकस्वभावान्मनश्चलतीति निमित्तमुक्त्वा नैमित्तिकमाह—तदेति ।

नैश्चल्ये सति तस्यात्मनस्तद्दुःखं नैवेत्यन्वयः । उपसंहरति—प्रत्यगात्मनि तस्मादिति ॥ १६९ ॥

एवं युक्तितः प्रत्यगात्मनो निर्दुःखस्वाभाव्ये सिद्धे वाक्यादेव ब्रह्मास्मीत्यपरोक्षज्ञानं भवतीत्याह—त्वंसतोरित्यर्धेन ।

इदं वाक्यमखण्डार्थनिष्ठं भवेत्, त्वंसतोस्त्वंसत्पदयोस्तुल्यनीडत्वादेकार्थवृत्तित्वात्, नीलाश्वपदवदित्यक्षरार्थः । नीलोऽश्व इति पदयोर्यद्यपि गुणगुणिरूपेण संसृष्टार्थविषयत्वं, तथाप्येकद्रव्यपर्यवसायित्वेन सामानाधिकरण्ये दृष्टान्त इति द्रष्टव्यम् ॥ १७० ॥

निर्दुःखवाचिना योगात् त्वंशब्दस्य तदर्थता ।
प्रत्यगात्माभिधानेन तच्छब्दस्य युतेस्तथा ॥ १७१ ॥
दशमस्त्वमसीत्येवं वाक्यं स्यात्प्रत्यगात्मनि ॥ १७२ ॥
स्वार्थस्य ह्यप्रहाणेन विशिष्टार्थसमर्पकौ ।
प्रत्यगात्मावगत्यन्तौ नान्योऽर्थोऽर्थाद्विरोध्यतः ॥ १७३ ॥

कथं पदयोरेकार्थनिष्ठत्वं, तद्दर्शयति—निर्दुःखेति ।

निर्दुःखवाचिना सच्छब्देन योगात्सामानाधिकरण्यात् त्वंशब्दस्य तदर्थता सच्छब्दार्थता, तथा प्रत्यगात्माभिधानेन त्वंशब्देन तच्छब्दस्य सच्छब्दस्य युतेः—योगात्—सामानाधिकरण्यादपरोक्षात्मता सिद्ध्यतीत्यर्थः ॥१७१॥

वाक्यमप्यपरोक्षवस्तुप्रतिपादकमित्यत्र दृष्टान्तमाह—दशमस्त्वमसीति । स्पष्टम् ॥ १७२ ॥

ननु तत्त्वंपदयोरेकार्थनिष्ठत्वे पर्यायत्वापत्तौ सहप्रयोगोऽनुपपन्न इति चेत्, नास्ति पर्यायत्वं प्रवृत्तिनिमित्तभेदादित्यभिप्रेत्याह—स्वार्थस्य हीति ।

प्रत्यक्षत्वपरोक्षत्वलक्षणस्वार्थस्य स्ववाच्यार्थस्याप्रहाणेनैवापरित्यागेनैव त्वंसच्छब्दौ विशिष्टार्थसमर्पकौ, अतो वाच्यभेदान्न पर्यायतेत्यर्थः । एवं तर्ह्यखण्डार्थत्वं न स्यादित्याशङ्क्याह—प्रत्यगात्मेति । प्रत्यगात्मनः शुद्धसाक्षिणोऽवगतिस्तत्त्वावगतिरन्तोऽवसानं ययोस्तौ तथा । श्रूयमाणे पदयोः सामानाधिकरण्ये मिथोविरुद्धवाच्यार्थसंसर्गे, अन्यतरविशिष्टेऽन्यतरं वा

---

( १ ) एवमपि श्रीमदाचार्यैः वाक्यवृत्तौ सूत्रितम्—

संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ ३८ ॥

अत्र विश्वेश्वरीयटीकाऽपि यावदुपयुक्तैव सङ्गृह्यते—

तत्त्वमसिवाक्ये 'नीलोत्पल' इति वाक्य इव मुख्यार्थस्वीकारेण विशेषणविशेष्य-

पर्यवसानमगच्छन् , कल्पितभेदपरामर्शेन लक्षणया विगतपरोक्षत्वापरोक्षत्वाद्यंशे स्वरूपमात्रे 'सोऽयं देवदत्तः' इतिवदखण्डे पर्यवस्यतीति प्रत्यगात्मावगत्यन्तौ तत्त्वंशब्दावुक्तावित्यर्थः । ननु तत्त्वंपदयोः सामानाधि-

---

करूपसंसर्गवाक्यार्थः, अन्यतरविशिष्टान्यतरस्वरूपविशिष्टवाक्यार्थो वा न संमतो भवति । तत्र तु नीलपदार्थनीलगुणस्य, उत्पलपदार्थोत्पलद्रव्यस्य च शुक्लपटादिव्यावर्तकतया अन्योन्यविशेषणविशेष्यभावसंसर्गार्थस्य, अन्यतरविशिष्टान्यतरस्वरूपविशिष्टार्थस्य वा वाक्यार्थत्वाङ्गीकारे प्रमाणान्तराविरोधात्, मुख्यार्थयोरेव वाक्यार्थत्वं संगच्छते, एकवस्तुनिष्ठत्वादुभयोः । अत्र तु तदर्थपरोक्षत्वादिविशिष्टचैतन्यस्य, त्वमर्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावसंसर्गस्य, विशिष्टैक्यस्य वा वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणविरोधात्, वाच्यार्थयोरैक्यं न संगच्छते—इति तदुभयं न संमतमित्यर्थः । एवं एतेनैव हेतुना 'अहं ब्रह्मास्मि' इति प्रतिपत्तिवाक्येऽपि वाच्ययोः अहंब्रह्मार्थयोरन्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावसंसर्गवाक्यार्थौ न संमतौ विरुद्धत्वात् । किंच ब्रह्मणः सर्वगतत्वात् तदंशस्य जीवस्य तदन्तर्भूतत्वात्, अपरोक्षत्वकिंचिज्ज्ञत्वादियुक्तोऽहं परोक्षत्वसर्वज्ञत्वादियुक्तं ब्रह्मास्मीति ब्रह्मान्तर्वर्तित्वेन भावनाया ब्रह्मविशिष्टो जीव इति विशिष्टैक्यस्य स्वरूपम् । इदमपि 'त्वं सर्वत्र स्थितो यस्मादहं पूर्णे त्वयि स्थितः' इतिवदौपचारिकमेव स्यात् । अतो विशिष्टलक्षणवाक्यार्थाङ्गीकारेऽपि तत्त्वंपदार्थयोर्भेद एव प्रतीयते, नैकत्वम् । संसर्गविशिष्टयोः को भेद इति चेत्—यदा 'नीलमुत्पलं' इत्युक्ते उत्पलद्रव्यं श्वेतपीतादिभ्यो व्यावर्तयन्नीलपदं—व्यावर्तकत्वाद्विशेषणत्वेन—संसृज्यते विशेष्येणोत्पलेन सह । तद्वत्, नीलगुणमपि वस्त्रादिभ्यो व्यावर्तयदुत्पलपदं विशेष्यं नीलपदेन विशेषणेन सह संसृज्यते—तदा विशेषणविशेष्यभावः **संसर्गः** । यदा अन्योन्यव्यावृत्तिमनपेक्ष्यैव संसृष्टपदार्थप्राधान्येन नीलविशिष्टमुत्पलं, दण्डविशिष्टो देवदत्त इतिवत् अन्यतरविशिष्टान्यतरार्थस्वीकारः, तदा **विशिष्टार्थः**—इति विवक्षानुगुण्येन संसर्गविशिष्टवाक्यार्थयोर्भेदः । तदुभयमत्र विरुद्धत्वान्न संमतमित्युक्तम् । किन्तु विरुद्धांशत्यागपुरःसरमविरुद्धवस्तुतादात्म्यरूपवाक्यार्थः संमतः । अखण्डैकरसत्वं 'अहं ब्रह्मास्मि', 'ब्रह्मैवाहमस्मि' इति व्यतिहारेण अखण्डैकरसवस्तुत्वप्रतिपत्तिः

नवबुध्यपहाराद्धि स्वात्मानं दशपूरणम् ।
अपश्यञ्ज्ञातुमेवेच्छेत् स्वमात्मानं जनस्तथा ॥ १७४ ॥

चरण्यमशाशित्वादिविषयतयाप्युपपत्स्यते, किमित्यखण्डार्थतापक्षपात इत्यत आह—नान्योऽर्थ इति। अतोऽस्मादुक्तादखण्डार्थादेकरसाद्विरोधी अन्योऽर्थो न वेदान्तेषु प्रतिपाद्यत इत्यर्थः। तदिदं विवक्षितम्—तत्त्वमर्थयोः, सुवर्णकुण्डलमितिवत्, न कार्यकारणभावेन संसर्गः संभवति, "अन्यत्रास्मात्कृताकृतात्" इति श्रुतिविरोधात्, नापि भूम्यूपरादिवद्दशाभिभावेन "निष्कलं निष्क्रियम्" इत्यादिकूटस्थैकरसप्रतिपादकश्रुतिविरोधात्, नापि गुणगुणिभावेन नीलमुत्पलमितिवत्—निर्गुणत्वश्रुतिविरोधात्, नापि जातिव्यक्तिविशिष्टस्वरूपादिप्रकारेण संसर्गः—"एकमेवाद्वितीयम्", "असङ्गो ह्ययं पुरुषः" इत्यादिश्रुतिविरोधात्। तस्माद्विशिष्टसंसर्गविरोधिवस्तुमात्रनिष्ठत्वं वाक्यस्याखण्डार्थत्वमिह विवक्षितम्। तथा च विमतमखण्डार्थनिष्ठम्, उपाधिपरामर्शमन्तरेणाविभाव्यमानभेदवस्तुनिष्ठत्वात् 'सोऽयं देवदत्तः', 'स छिद्रम्' इत्यादिवाक्यवदिति ॥ १७३ ॥

नन्वेवमखण्डार्थनिष्ठत्वेऽपि वाक्यस्य न तावन्मात्रे पर्यवसानं युक्तं, बोधमात्रात्फलासिद्धेर्यत्नान्तरमेष्टव्यमिति क्रियापर्यवसायिता कस्मान्न कल्प्यते?—इत्याशङ्क्य मुमुक्षोर्जिज्ञासितमर्थं विहायार्थान्तरपरत्वकल्पनेऽबुभुत्सितार्थपरत्वेन वाक्यस्याप्रामाण्यप्रसङ्गात्, नैवम्—इत्यभिप्रेत्य ज्ञानमात्रादेव फलसिद्धिं दृष्टान्तेनोपपादयति—नवबुद्धेत्यादिना।

---

(१) पद्य—'आदि'—सन्दर्भ सविस्तरव्याख्यानं रामतीर्थकृतमानसोल्लासवृत्तान्तास्यटीकाग्रम्—२. १८—२४, तथा तत्कृतवेदान्तसारविद्वन्मनोरञ्जन्या २४ खण्डे। (२) कठ उ. २. १४ (३) श्वे उ ६ १९. (४) छा उ. ६. २ १८ (५) बृ. उ. ४ ३. १५, १६

अविद्याबद्धचक्षुष्ट्वात्कामापहृतधीः सदा ।
विविक्तं दृशिमात्मानं नेक्षते दशमं यथा ॥ १७५ ॥
दशमस्त्वमसीत्येवं तत्त्वमस्यादिवाक्यतः ।
स्वमात्मानं विजानाति कृत्स्नान्तःकरणेक्षणम् ॥ १७६ ॥

नवैव वयमिति बुद्ध्या भ्रमरूपया अपहारात् तिरोहितत्वात् तिरोधानमात्रनिवृत्तिफलतया दशत्वसंख्यायाः पूर्णं स्वात्मानमपश्यन् ज्ञातुमेवेच्छेत्, न तु किंचित्कर्तुमित्यर्थः । यथाऽयं दृष्टान्तः, तथा जनो मुमुक्षुरपि स्वमात्मानं केनापि हेतुना विस्मृतं ज्ञातुमेवेच्छति भ्रमनिवृत्तिफलायैव । अतः क्रियापरत्वकल्पना नावकाशं लभत इत्यर्थः ॥ १७४ ॥

प्रकृते स्वात्मनः केनापहारः कृत इत्यपेक्षायां दार्ष्टान्तिकं विवृण्वंस्तदाह—अविद्यावद्धेति ।

अविद्या अनाद्यज्ञानं, तया बद्धमाच्छादितं चक्षुर्विवेकदर्शनं यस्य स जीवस्तथा, तस्य भावस्तत्त्वं, तस्मादिति विग्रहः । आवरणमुक्त्वा विक्षेपमाह—कामापहृतधीरिति । बहिर्विक्षिप्तचित्त इत्यर्थः । सदा सर्वदा दृश्यसंघाताद्विविक्तमेव परमार्थं दृगात्मतत्त्वं नेक्षते न पश्यति, यथा नवस्वेव विक्षिप्तचित्तो दशमं नवभ्यो वस्तुतो विविक्तं नेक्षते, तथेत्यर्थः ॥ १७५ ॥

कथं तर्ह्यात्मानं जानातीत्यपेक्षायां शास्त्राचार्योपदेशान्निमित्तमात्राज्जानातीति सदृष्टान्तमाह—दशमस्त्वमसीत्येवमिति ।

कृत्स्नान्तःकरणेक्षणं—अहंकर्तुरपि विविक्तं तत्साक्षिणमित्यर्थः ॥१७६॥

इदं पूर्वमिदं पश्चात् पदं वाक्यं भवेदिति ।
नियमो नैव वेदेऽस्ति पदसाम्त्यमर्थतः ।
अन्वयव्यतिरेकाभ्यां ततो वाक्यार्थबोधनम् ॥ १७७ ॥
वाक्ये हि श्रूयमाणानां पदानामर्थसंस्मृतिः ॥ १७८ ॥

ननु—

'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
तच्छब्द एवकारश्च स्यादुपादेयलक्षणम् ॥'

इति न्यायेन प्रथमनिर्दिष्टमुद्देश्यं चरमनिर्दिष्टमुपादेयमिति नियमो वक्तव्यः, स इह नोपपद्यते । यतस्तत्त्वमित्यत्र तदर्थस्य प्राथम्यं श्रूयते, 'अहं ब्रह्मास्मि' इत्यत्र त्वमर्थस्य, एवं तत्र तत्रान्यथान्यथा श्रूयमाणत्वात् कथमिहोद्देश्यविधेयनियम इत्याशङ्क्य वाक्यपदानामर्थवशादेव संगतः, न पाठवशात्, 'आहर पात्रं', 'पात्रमाहर' इतिवदर्थनियमं विवक्षन्नाह— इदं पूर्वमिति ।

पाठस्यानियमेऽपि 'प्रसिद्धमुद्दिश्याऽनूद्याप्रसिद्धो बोध्यते' इति न्यायादिदं प्रसिद्धार्थकं त्वमहमादिपदं पूर्वं, इदमप्रसिद्धार्थकं ब्रह्म सत्यादिपदं पश्चात्–इत्येवं पदं विन्यस्तं वाक्यं भवतीत्यन्वयव्यतिरेकाभ्यामवधार्य ततो वाक्यार्थबोधनं त्वमर्थस्य तदर्थात्मत्वप्रतिपत्तिरूपं भवेदित्यर्थः ॥ १७७ ॥

उक्तेऽर्थे हेतुमाह—वाक्य इति । स्पष्टम् ॥ १७८ ॥

---

(१) इयं कारिका तार्किकरक्षायां अवयवनिरूपणावसरे आचार्यवरदराजैः धृता । तत्र तु प्रथमतृतीयचरणयोः 'यद्वृत्तयोगः', 'तद्वृत्तमेवकारश्च' इति पाठान्तरे । यद्वृत्त–यच्छब्दः, तद्वृत्तम्–तच्छब्दः । विद्यारण्यमुनिभिरप्येषा कारिका विवरणप्र. स. १ सू. २ वर्णके यथावद्धृता ।

यदा नित्येषु वाक्येषु पदार्थस्तु विविच्यते ।
वाक्यार्थज्ञानसंक्रान्त्यै तदा प्रश्नो न युज्यते ॥ १७९ ॥
अन्वयव्यतिरेकोक्तिः पदार्थस्मरणाय तु ।
स्मृत्यभावे न वाक्यार्थो ज्ञातुं शक्यो हि केनचित् ॥ १८० ॥
तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः ।
व्यज्यते नैव वाक्यार्थो नित्यमुक्तोऽहमित्यतः ॥ १८१ ॥
अन्वयव्यतिरेकोक्तिस्तद्विवेकाय नान्यथा ।
त्वंपदार्थविवेके हि पाणावर्पितबिल्ववत् ॥ १८२ ॥
वाक्यार्थो व्यज्यते चैवं केवलोऽहं पदार्थतः ।
दुःखील्येतदपोहेन प्रत्यागात्मविनिश्चयात् ॥ १८३ ॥

आचार्येण ब्रह्मासीत्युपदिष्टः खलु शिष्यः कथमहं ब्रह्म स्यामिति पृच्छति । तदन्यथानुपपत्त्या वाक्यं साक्षाद्बोधजननसमर्थं न भवतीति गम्यते इत्याशङ्क्याह—यदा नित्येष्विति ।

नित्येष्वर्थाव्यभिचारिष्वित्यर्थः ॥ १७९ ॥

पदार्थतत्त्वानभिज्ञस्यैव प्रश्नो घटत इत्युक्तं स्पष्टयति—अन्वयेति ।

अन्वयव्यतिरेकोक्तिशब्देनावान्तरवाक्यैस्तदनुकूलैश्च तर्करात्मानात्मविवेचनमुच्यते । पदार्थस्मृतिः पदोपस्थापितवाक्यार्थज्ञानकारणमित्यत्र लोकप्रसिद्धिमाह—स्मृत्यभाव इति ॥ १८० ॥

तत्रापि त्वंपदार्थविवेकेऽतीव प्रयत्नः कार्य इत्यभिप्रेत्याह—तत्त्वमस्यादीति । त्रिभिः श्लोकैः ॥ १८१ ॥

विचारप्रयोजनं द्रढयति—अन्वयव्यतिरेकोक्तिरिति ।

'अत.' इति पूर्वश्लोकगतं पदमस्मिन् योज्यम् । तद्विवेकाय त्वंपदार्थविवेकायेत्यर्थः । पदार्थविवेकफलं स्पष्टयति—त्वंपदार्थविवेके हीति । केवलो भेद-

तत्रैवं संभवत्यर्थे श्रुतहानाश्रुतार्थयोः ।
नैव कल्पयितुं युक्ता पदवाक्यार्थकोविदैः ॥ १८४ ॥
प्रत्यक्षादीनि बाधेरन् कृष्णलादिषु पाकवत् ।
अक्षजादिनिभैरेतैः कथं स्याद्वाक्यबाधनम् ॥ १८५ ॥

संसर्गशून्यो वाक्यार्थ इत्यन्वयः । तत्र हेतुमाह—अहंपदार्थतो दुःखीत्येतदपोहेनेति । अहमिति प्रतीयमानात्पदार्थाद्दुःखीत्येतस्येदमंशस्यापोहेन प्रत्यगात्मनः साक्षिणो विशेषेण निश्चयादित्यर्थः ॥ १८२ ॥ १८३ ॥

एवमुक्तेन न्यायेन वाक्यादेवापरोक्षाखण्डब्रह्मज्ञानमुपपाद्येदानीं पूर्ववादिकल्पनाया निर्मूलत्वमाह—तत्रैवमिति । स्पष्टम् ॥ १८४ ॥

यथाव्याख्यानं वाक्यस्य यथाश्रुतार्थे संभवति सति श्रुतहान्यादिकल्पनमनवकाशमित्युक्तमयुक्तं, प्रत्यक्षादिविरुद्धेऽर्थे वाक्यस्य बाधदर्शनादिति पूर्ववादी दृष्टान्तेन शङ्कते—प्रत्यक्षादीनीति ।

यथा 'कृष्णलान् श्रपयेत्' इति कृष्णलशब्दवाच्यसुवर्णमयकणेषु श्रुतोऽपि पाकः प्रत्यक्षेण बाध्यते, तेषु विक्लित्तेरदर्शनात्, किंत्वदृष्टार्थ एव संस्कारस्तत्र पाकक्रियासाध्यः, एवमिहाप्यखण्डार्थतां वाक्यस्य प्रत्यक्षादीनि प्रमाणानि भेदग्राहकाणि बाधेरन् । श्रुतेऽप्यात्मनो ब्रह्मत्वे पूर्णत्वादर्शनात्, अतः प्रसंख्यानेनात्मसंस्कारार्थता वाक्यस्येति चेत्, तत्रोत्तरमाह—अक्षजादीति । भवेदेवं यदि कर्तृत्वादिप्रतिभासस्य प्रत्यक्षप्रमाणता स्यात्, नैतदस्ति, अध्यस्ताहंकाराद्युपरागमन्तरेण स्वतः आत्मनि दुःखित्वादिधर्मसंबन्धस्य निराकृतत्वात्, अतः प्रत्यक्षाद्याभासैरेतैः प्रमाणभूतवाक्यबाधनं कथं स्यात् ? नैव स्यादित्यर्थः । "प्रयाजे कृष्णलं जुहोति" इतिवद्ब्रह्मज्ञाने संस्कृतस्यात्मनोऽन्यत्र विनियोगादर्शनादिह न संस्कारार्थत्वं वाक्य-

(१) तुलय—जै. सू. १०. १.१–२., २. १—२. (२) तै. सं. २. ३. २. ३.

दुःख्यस्मीति सति ज्ञाने निर्दुःखीति न जायते ।
प्रत्यक्षादिनिभत्वेऽपि वाक्यान्न व्यभिचारतः ॥ १८६ ॥
स्वप्ने दुःख्यहमध्यासं दाहच्छेदादिहेतुतः ।
तत्कालभाविभिर्वाक्यैर्न बाधः क्रियते यदि ॥ १८७ ॥
समाप्तेस्तर्हि दुःखस्य प्राक् तद्बाध इष्यताम् ।
न हि दुःखस्य संतानो भ्रान्तेर्वा दृश्यते क्वचित् ॥ १८८ ॥

स्योपपद्यते । सद्यो ग्रहत्वाद्दर्शनं तु पदार्थमतिद्वार्ढ्याभावादित्युक्तमेवेति भावः ॥ १८५ ॥

नन्वेवं विरोधिताल्लक्षणाप्रामाण्याभावेऽपि, स्यादनुत्पत्तिलक्षणमप्रामाण्यं वाक्यस्येति पूर्ववादी शङ्कते—दुःख्यस्मीति सतीति ।

दुःखित्वादिभानस्योक्तरीत्या प्रत्यक्षाद्याभासत्वेऽपि दुःख्यस्मीति विरोधिगन्धिनि ज्ञाने सति, वाक्यान्निर्दुःखीति विज्ञानं न जायत इति योजना । पूर्वसिद्धतया प्रत्यक्षस्यासंजातविरोधित्वेन प्राबल्यमस्तीत्यभिप्रायः । दूषयति—न व्यभिचारत इति ॥ १८६ ॥

तमेव व्यभिचारमाह—स्वप्न इति ।

स्वप्ने दाहच्छेदादिहेतुतो निमित्तादहं दुःख्यासं, तदाऽऽप्तोपदेशान्निर्दुःखोऽभूवमित्यनुभवसिद्धत्वान्नात्मधर्मो दुःखित्वादीत्यर्थः । तत्र पराभिनिवेशमनुवदति—तत्कालेति ॥ १८७ ॥

तथापि दुःसमाप्तमव्यभिचारीत्याह—समाप्तेरिति ।

दुःखस्य समाप्तेरूर्ध्वं तद्बाधो दुःखबाध इष्यते, एवं प्राक् पूर्वमपि दुःख नाभूदिति तद्बाध इष्यतां, मध्ये दृश्यमानस्य शुक्तिरूप्यवन्मिथ्यात्वाव्यभिचारादित्यर्थः । कुतो बाध इष्यत इत्यत्र हेतुमाह—नहीति । भ्रान्तेर्वेति दृष्टान्तार्थो वाशब्दः । तस्माद्दुःखित्वादेरात्मनि सति व्यभिचारात्,

प्रत्यगात्मन आत्मत्वं दुःख्यस्मीत्यस्य बाधया ।
दशमं नवमस्येव वेद चेदविरुद्धता ॥ १८९ ॥
नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः ।
वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम् ॥ १९० ॥
अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् ।
एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥ १९१ ॥
सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् ।
दशमस्त्वमसीत्यस्माद्यथैवं प्रत्यगात्मनि ॥ १९२ ॥
प्रबोधेन यथा स्वाप्नं सर्वदुःखं निवर्तते ।
प्रत्यगात्मधिया तद्वद्दुःखित्वं सर्वदात्मनः ॥ १९३ ॥
कृष्णलादौ प्रमाजन्म तदन्यार्थाऽमृदुत्वतः ।
तत्त्वमस्यादिवाक्येषु न त्वेवमविरोधतः ॥ १९४ ॥

आगन्तुकस्य चाविकारिण्यात्मन्यनुपपत्तेरारोपितत्वसिद्धौ प्रमाणज्ञानं शुक्तितत्त्वज्ञानमिव रजतादिबाधनेन दुःखित्वादिबाधनं कुर्वदेव वाक्याद्भवतीति न वाक्यस्यासामर्थ्यशङ्कावकाश इति तात्पर्यार्थः ॥ १८८ ॥

इतश्च वाक्यं न प्रत्यक्षाद्दुर्बलमित्याह—प्रत्यगात्मन इति। स्पष्टार्थः॥१८९॥

विस्तारेणोक्तं न्यायार्थं संक्षिप्याह श्लोकचतुष्टयेन—नित्यमुक्तत्वेत्यादिना ॥ १९० ॥ १९१ ॥

प्रमा स्फुटतरा अपरोक्षा। निगदव्याख्याता श्लोकाः ॥ १९२ ॥ १९३ ॥

पुरोक्तकृष्णलादिपाकदृष्टान्तवैषम्यं स्फुटयति—कृष्णलादाविति ।

प्रमाया अजन्म यत् कृष्णलादौ तदुक्तं, यतस्तत्तदन्यार्था प्रमाऽदृष्टार्था, न पाकार्था, अमृदुत्वतोऽमृदुत्वात् कृष्णलानामिति योजना । कृष्णलपाके पुरुषस्यानैश्वर्यात्, अशक्यार्थे च नियोगानुपपत्तेरित्यर्थः ॥ १९४ ॥

वाक्ये तत्त्वमसीत्यस्मिन् ज्ञातार्थं तदसिद्वयम् ।
त्वमर्थे सत्यसाहाय्याद्वाक्यं नोत्पादयेत्प्रमाम् ॥ १९५ ॥
तत्त्वमोस्तुल्यनीडार्थमसीत्येतत्पदं भवेत् ॥ १९६ ॥
तच्छब्दः प्रत्यगात्मार्थस्तच्छब्दार्थस्त्वमस्तथा ।
दुःखित्वाप्रत्यगात्मत्वं वारयेतामुभावपि ॥ १९७ ॥

प्रकृते न तथाविधो विरोधोऽस्तीत्याह—वाक्य इति ।
'तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः ।
व्यज्यते नैव वाक्यार्थो नित्यमुक्तोऽहमित्यतः ॥
इत्युक्तं प्रपञ्चयंस्त्वंपदार्थविवेचने यत्नाधिक्यं सूचयति—वाक्ये तत्त्व-मिति । पदत्रयात्मकेऽस्मिन्वाक्ये 'तत्'पदं, 'असि'पदं चेति द्वय ज्ञातार्थं प्रसिद्धार्थं, त्वमर्थे त्वंपदार्थे सत्यविज्ञातेऽसाहाय्यात् साहाय्यशून्य-त्वात्—सहकारिविरहात्, वाक्यमेतत् प्रमा नोत्पादयेदपरोक्षनिश्चयरूपा-मित्यर्थः ॥ १९५ ॥

असिपदस्योपयोगमाह—तत्त्वमोरिति ।

तुल्यनीडार्थं कुत्रचिन्तयेत्यादिक्रियाकाङ्क्षानिवारणेन सामानाधिकरण्य-सिद्धयैक्यालम्बनत्वस्पष्टीकरणार्थं 'असि' 'अस्मि' इत्यादिपदमुपयुज्यत इत्यर्थः ॥ १९६ ॥

निराकाङ्क्षे सामानाधिकरण्ये सति को लाभ इत्यपेक्षायामाह—तच्छब्द इति ।

---

(१) दुःखित्वाप्रत्यगात्मत्वं—पाठ. ।
तुल्य—निर्दुःखित्व त्वमर्थस्य तदर्थेन विशेषणात् ।
प्रत्यक्ता च तदर्थस्य त्वंपदेनास्य संनिधेः ॥
—नै. सि. ३ १०.

(२) १८. १८१. (३) तुल्य—१२. ४.

एवं च नेति नेत्यर्थं गमयेतां परस्परम् ॥ १९८ ॥
एवं तत्त्वमसीत्यस्य गम्यमाने फले कथम् ।
अप्रमाणत्वमस्योक्त्वा क्रियापेक्षत्वमुच्यते ॥ १९९ ॥
तस्मादाद्यन्तमध्येषु कुर्वित्येतद्विरोध्यतः ।
न कल्पामोऽश्रुतत्वाच्च श्रुतत्यागोऽप्यनर्थकः ॥ २०० ॥

प्रत्यगात्मा अर्थो यस्य स प्रत्यगात्मार्थस्तच्छब्दः स्यात्, त्वपदेन सामानाधिकरण्यादिति योज्यम् । तथा त्वमस्त्वंपदस्य तच्छब्दार्थोऽर्थो भवेत्, तत्पदेन सामानाधिकरण्यादिति योजना । तदा वा को लाभ इति तमाह—दुःखित्वेति । उभावपि शब्दौ त्वमर्थस्य दुःखित्वांशं, तदर्थस्याऽनात्मत्व, परोक्षत्वाश च वारयेतामित्यर्थः ॥ १९७ ॥

एवं वाक्यार्थवर्णनेऽद्वितीयतत्त्वपरश्रुत्याऽविरोधः सिद्धयतीत्यभिप्रेत्योपसंहरति—एवं चेति ।

नेति नेतिवाक्यसिद्धमर्थमित्यर्थः ॥ १९८ ॥

पूर्वपक्षे श्रुतहान्यश्रुतकल्पना निष्प्रामाणिकेत्युक्तमुपसंहरति—एवमिति । कथशब्द आक्षेपार्थः ॥ १९९ ॥

यस्मादेव विचार्यमाणे क्रियाया अनवकाशः, तस्मादित्युपसंहरति—तस्मादिति ।

आदौ तत्त्वमसीति प्रथमोपदेशे, मध्ये पदार्थपरिशोधनान्वयव्यतिरेकग्रहणकाले, अन्ते च निर्विचिकित्सब्रह्मानुभवकाले कुर्वित्येतदनुष्ठानकल्पनं तत्तदर्थप्रतिपत्तिविरोधि यतः, अतो न कल्पामः न कल्पयामः—क्रियामिति शेषः । किंच अश्रुतत्वादपि न कल्पयामः । न केवलमश्रुतत्वात्क्रिया त्याज्या, श्रुतत्यागस्यानर्थकरत्वादपीत्याह—श्रुतेति । नहि तत्त्वमर्थयोः स्वरूपम-

( १ ) °त्वा—पाठ ( २ ) श्रुत्यविरोध—पाठ

यथाऽनुभूयते तृप्तिर्भुजेर्नोक्यान्न गम्यते ।
वाक्यस्य विधृतिस्तद्वद्गोश्शकृत्पायसीक्रिया ॥ २०१ ॥
सत्यमेवमनात्मार्थवाक्यात्पारोक्ष्यबोधनम् ।
प्रत्यगात्मनि न त्वेवं संख्यामात्रिवदध्रुवम् ॥ २०२ ॥

प्राप्तं चिन्तनीयतया निधातुं शक्यते, तत्प्राप्तेश्चान्यतोऽसंभवादस्मादेव वाक्यभेदादिदोषप्राप्तिरपरिहार्या स्यात् । तत्त्वमोस्तत्त्वं सिद्धमनपेक्ष्यैव यथाकथंचिच्चिन्तननिधानाभ्युपगमे चिन्त्यब्रह्मसाक्षात्कारस्याऽप्रमात्वादविद्यानिवृत्तिफलासिद्धेर्निरर्थकः प्रसंख्यानविधिरिति भावः ॥ २०० ॥

उक्तार्थानभिज्ञः पुनराक्षिपति—यथेति ।

भुजेर्भोजनात्तृप्तिः फलं वाक्याद्वाक्यार्थज्ञानमात्रान्न गम्यते—मोक्षफलमिति शेषः। तस्माद्यथा गोशकृतो गोमयात् पायसीक्रिया पायसकरणं नोपपद्यते तस्य तत्साधनत्वात्, तद्वद्वाक्यस्य विधृतिर्विधारणं—अर्थतोऽवधारणं न वाक्यार्थापरोक्षसाधनमित्यर्थः ॥ २०१ ॥

उत्सर्गतो वाक्यं नार्थापरोक्ष्यार्थमित्येतदङ्गीकुर्वन् प्रकृते तस्यापवादमाह सिद्धान्ती—सत्यमिति ।

---

( १ ) तुल्य—"कथंचित् समाधीयमानमप्येतद्गोमयपायसीय न्यायमाक्षिपति"। यो. सू. १. ३२. भाष्ये । "गोमयं पायसं, गव्यत्वात्, उभयसिद्धपायसवत्" इति वाचस्पतिमिश्रैः तत्रैवास्य न्यायस्य प्रयोगः प्रदर्शितः। "एवं चायनभेदसाधको हेतुर्गोमयपायसीयन्यायवदाभासतां भजेत्"—इति सर्वद० सं० बौद्धदर्शने ।
( २ ) तुल्य—१८. ९—११, तथा नै. सि. ३. १२५. ननु "आवृत्तिरसकृदुपदेशात्" ( ब्र. सू. ४. १.१. ) इति सूत्रकारेण शब्दयुक्त्यभ्यासरूपप्रसंख्यानस्य स्वीकृतत्वात्, न तदन्तरेण वाक्यं बोधकमिति चेत्, न । ब्रह्मात्मवस्तुनो ज्ञानसाधनश्रवणमननादावेवावृत्तिः सूत्रकृताऽभ्युपगता । तत्राऽऽपाततोऽधिगतशब्दयुक्तीनामावृत्तिव्यतिरेकेण सम्यक्स्वरूपावधारणाभावादावृत्तेरुपयोगः, न तु श्रवणादिसाध्यविज्ञाने।

स्वयंवेद्यत्वपर्यायः स्वप्रमाणक इष्यताम् ।
निवृत्तावहमः सिद्धः स्वात्मनोऽनुभवश्च नः ॥ २०३ ॥
बुद्धीनां विषयो दुःखं नो यस्य विषया मताः ।
कुतोऽस्य दुःखसंबन्धो दृशेः स्यात्प्रत्यगात्मनः ॥ २०४ ॥
दृशिरेवाऽनुभूयेत स्वेनैवाऽनुभवात्मना ।
तदाभासतया जन्म धियोऽस्याऽनुभवः स्मृतः ॥ २०५ ॥

प्रत्यगात्मनि तु नैवं—अध्रुवमनिश्चितं, किंतु मंदस्याप्राप्तिवद्दशमसंख्याप्राप्तिवदपरोक्षज्ञानसाधनत्वं वाक्यस्य ध्रुवमेवेत्यर्थः ॥ २०२ ॥

कुत इत्यपेक्षायां स्वतोऽपरोक्षप्रत्यगात्मन एव प्रश्नस्योपदेशादित्याह—स्वयंवेद्यत्वेति ।

स्वप्रमाणकः प्रमाणनिरपेक्षप्रकाशमानतास्वभाव आत्मेष्यतां स्वयंज्योतिष्ट्वादिश्रुतेरित्यर्थः । तथाच वाक्यादहमोऽहंकारस्य प्रश्नभेदकस्य निवृत्तौ स्वात्मनोऽनुभवश्च सिद्ध एव नोऽस्माकमिति न किंचिदनुपपन्नमित्यर्थः । विमतं परोक्षार्थज्ञानजनकं, वाक्यत्वात्, संमतवदित्यादिप्रयोगेष्वनात्मविषयत्वमुपाधिः, दशमस्त्वमसीत्यादौ व्यभिचारश्चेत्युक्तं भवति ॥ २०३ ॥

अत्र दुःखानुभवविरोधशङ्का न कार्या, दुःखस्य व्यभिचारित्वेनात्मधर्मत्वस्य निरस्तत्वात्, विषयधर्मत्वाच्चेत्यभिप्रेत्याह—बुद्धीनामिति ।

दुःख्यहमस्मीति दुःखधर्मत्वेनाहंकर्तुरेवानुभवात्तस्य विषयभूतं दुःखं, न बुद्धिवृत्त्याश्रयाहंकर्तृसाक्षिण आत्मनो धर्मः संभवतीत्यर्थः ॥ २०४ ॥

सर्वधर्मरहितश्चेत्प्रत्यगात्मा, कथं तस्यानुभव इत्यत आह—दृशिरेवेति ।

दृशेरनुभवस्वभावत्वात्तस्य स्वरूपे को नामान्योऽनुभवोऽपेक्ष्येतेत्यर्थः ।

---

( १ ) निवृत्ताविदम्.—पाठः ( २ ) बृ. उ. ४. ३. ९, १४ (३) परोक्षज्ञानाजनकं, परोक्षज्ञानजनक—पाठौ ।

अशनायादिनिर्मुक्तः सिद्धो मोक्षस्त्वमेव सः ।
श्रोतव्यादि तवेत्येतद्विरुद्धं कथमुच्यते ॥ २०६ ॥
सेत्स्यतीत्येव चेत्तत्स्याच्छ्रवणादि तदा भवेत् ।
मोक्षस्यानित्यतैवं स्याद्विरोधे नान्यथा वचः ॥ २०७ ॥
श्रोतृश्रोतव्ययोर्भेदो यदीष्टः स्याद्भवेदिदम् ।
इष्टार्थकोप एवं स्यान्न युक्तं सर्वथा वचः ॥ २०८ ॥

तर्हि कथं तस्य विशेषानुभव इति तत्स्वरूपमाह—तदाभासतयेति । चैतन्याभासव्याप्ततया धियो जन्मैवात्मन आगन्तुकोऽनुभवः स्मृतो विद्वद्भिरित्यर्थः ॥ २०५ ॥

प्रकारान्तरेण प्रसंख्यानप्राप्तिं निराकरोति—अशनायादीति ।

सर्वसंसारनिर्मुक्तो नित्यसिद्धो मोक्षः—ब्रह्म त्वमेवेत्याचार्योपदेशे सति, तव श्रोतव्याद्यनुष्ठेयं विद्यत इति कथं विरुद्धमुच्यते ? न ह्यक्रियं ब्रह्म त्वं, कर्ता चेति वचः प्रमाणं स्यादित्यर्थः ॥ २०६ ॥

अथ तत् त्वं सेत्स्यतीति विपरिणामः उपदेशवाक्यस्याभ्युपेयत इति शङ्कामनूद्य तत्र 'एकं संधित्सतोऽपरं प्रच्यवते' इति न्यायेन मोक्षानित्यत्वप्रसङ्गदोषमाह—सेत्स्यतीति ।

एवमुभयथा विरोधे सति वचो वाक्यं नान्यथा न विपरिणामवद्युक्तमित्यर्थः ॥ २०७ ॥

इतश्च प्रसंख्यानवादोऽनुपपन्न इत्यत आह—श्रोतृश्रोतव्ययोरिति ।

श्रोत्रादिभेदो यदीष्टः स्यात्, तदैव प्रसंख्यानं भवेत्, कर्तृकर्मभेदा-

---

(१) तुल्यम्—१८ २२५ (२) अयं न्यायः खण्डनखण्डखाद्ये अनैकान्तिकखण्डनावसरे प्रयुक्तः । 'अनुसन्धित्सतः' इति पाठभेदेन सर्व० स० आर्हताक्षपाददर्शनयोरपि लभ्यते ।

सिद्धो मोक्षोऽहमित्येवं ज्ञात्वाऽऽत्मानं भवेद्यदि ।
चिकीर्षुर्यः स मूढात्मा शास्त्रं चोद्धाटयत्यपि ॥ २०९ ॥
न हि सिद्धस्य कर्तव्यं सकार्यस्य न सिद्धता ।
उभयालम्बनं कुर्वन् नाऽऽत्मानं वञ्चयत्यपि[2] ॥ २१० ॥
सिद्धो मोक्षस्त्वमित्येतद्वस्तुमात्रं प्रदर्श्यते ।
श्रोतुस्तथात्वविज्ञाने प्रवृत्तिः स्यात्कथं न्विति[3] ॥ २११ ॥
कर्ता दुःख्यहमस्मीति प्रत्यक्षेणाऽनुभूयते ।
कर्ता दुःखी च माभूवमिति यत्नो भवेत्ततः ॥ २१२ ॥

भावे कार्यानुपपत्तेरित्यर्थः । अस्तु मेद इति चेत्, तत्राह—इष्टार्थेति । जीवस्य ब्रह्मभावो हीष्टार्थः, सोऽन्यस्यान्यभावायोगाद्विहन्येत, अत सर्वथा वचो वाक्य न युक्तमुक्त—अप्रमाणमेव प्रसंख्यानपक्षे भवेदित्यर्थः ॥ २०८ ॥

न युक्त वच इत्येतत्प्रकटयति—सिद्ध इति ।

उक्तप्रकारेणात्मान ज्ञात्वा यो यदि चिकीर्षुर्भवेत्, स मूढात्मेत्यन्वय । उद्धाटयत्युत्सादयतीत्यर्थः ॥ २०९ ॥

मूढात्मत्व प्रकटयति—नहीति । स्पष्टम् ॥ २१० ॥

ननु किमित्यस्माभिन्दथ अस्मदभिप्रायमज्ञात्वैव ?—इति पूर्ववादी स्वाभिप्रायमाविष्करोति—सिद्धो मोक्षस्त्वमिति ।

मुमुक्षोरात्मविज्ञाने प्रवृत्त्यर्थं सिद्धब्रह्मरूपो मोक्षस्त्वमसीति वस्तुमात्रकथनपरमिदं वाक्यं, न तत्त्वे पर्यवसितमित्यर्थः ॥ २११ ॥

उक्तमेव विवृणोति—कर्तेति । स्पष्टम् ॥ २१२॥

---

(१) °त्येव—पाठो ऽपि युक्त । (२) °त्यसौ—पाठ (३) त्विति—इत्यव लिखितमुद्रितपुस्तकेषु पाठ उपलभ्यते, किंतु न्विति—इत्येव पाठो युक्ततर स्यात् ।

तद्विज्ञानाय युक्त्यादि कर्तव्यं श्रुतिरब्रवीत् ।
कर्तृत्वाद्यनुवादेन सिद्धत्वानुभवाय तु ॥ २१३ ॥
निर्दुःखो निष्क्रियोऽकामः सिद्धो मोक्षोऽहमित्यपि ।
गृहीत्वैवे विरुद्धार्थमादध्यात्कथमेव सः ॥ २१४ ॥
सकामः सक्रियो सिद्ध इति मेऽनुभवः कथम् ।
अतो मे विपरीतस्य तद्भवान् वक्तुमर्हति ॥ २१५ ॥
इहैव घटते प्रश्नो न मुक्तत्वानुभूतये ।
प्रमाणेन विरोधी यः सोऽत्रार्थः प्रश्नमर्हति ॥ २१६ ॥

वाक्यश्रवणानन्तरं "मन्तव्यः" इति श्रुत्या कर्तव्यविधानादप्येवमेवाभ्युपेयमित्याह—तद्विज्ञानायेति ।

त्वमिति कर्तृत्वमनूद्य वस्तुगत्या त्वं सिद्धमोक्षब्रह्मरूपोऽसि, अतस्तज्ज्ञानाय यतस्वेति वाक्यतात्पर्यमित्यर्थः ॥ २१३ ॥

नेयं कल्पना श्रुत्यनुसारिणीति सिद्धान्ती दूषयति—निर्दुःख इति ।

निर्दुःखादिविशेषणो मोक्ष एवाहमिति गृहीत्वापीत्यन्वयः । वाक्याद्वाक्यार्थज्ञानं न जायत एवेति न वक्तुमुचितमप्रामाण्यप्रसङ्गात्, अनुभवविरोधाच्च । तथा चोत्पन्ने ज्ञाने तद्विरुद्धप्रतिपत्तिर्न संजाघटीतीत्यभिप्रायः ॥ २१४ ॥

यदि वाक्यादेव निर्दुःखादिलक्षणमोक्षात्मसाक्षात्कारः, कथं तर्हि तदा तद्विरुद्धाकारानुभवः ?—इति पृच्छति—सकाम इति ।

अतः सकामत्वादिरूपाद्विपरीतस्य मे ब्रह्मभूतस्येत्यर्थः ॥ २१५ ॥

अन्यस्वभावस्य सतो ममान्यस्वभावानुभवः कथमित्यस्मिन्नर्थे सकृच्छ्रुतवा-

---

(१) गृहीत्वैवं–पाठः । अत्र एवकार एव युक्तः । (२) बृ. उ. २.४.५; ४.५.६;

सिद्धो मोक्षोऽहमित्येवं ज्ञात्वाऽऽत्मानं भवेद्यदि ।
चिकीर्षुर्यः स मूढात्मा शास्त्रं चोद्घाटयत्यपि ॥ २०९ ॥
न हि सिद्धस्य कर्तव्यं सकार्यस्य न सिद्धता ।
उभयालम्बनं कुर्वन् नाऽऽत्मानं वञ्चयत्यपि[2] ॥ २१० ॥
सिद्धो मोक्षस्त्वमित्येतद्वस्तुमात्रं प्रदर्श्यते ।
श्रोतुस्तथात्वविज्ञाने प्रवृत्तिः स्यात्कथं न्विति[3] ॥ २११ ॥
कर्ता दुःख्यहमस्मीति प्रत्यक्षेणाऽनुभूयते ।
कर्ता दुःखी च माभूवमिति यत्नो भवेत्ततः ॥ २१२ ॥

भावे कार्यानुपपत्तेरित्यर्थः । अस्तु भेद इति चेत्, तत्राह—इष्टार्थेति जीवस्य ब्रह्मभावो हीष्टार्थः, सोऽन्यस्यान्यभावायोगाद्विहन्येत, अत सर्वथा वचो वाक्यं न युक्तमयुक्तं—अप्रमाणमेव प्रसंख्यानपक्षे भवे दित्यर्थः ॥ २०८ ॥

न युक्तं वच इत्येतत्प्रकटयति—सिद्ध इति ।

उक्तप्रकारेणात्मानं ज्ञात्वा यो यदि चिकीर्षुर्भवेत्, स मूढात्मेत्यन्वयः । उद्घाटयत्युत्सादयतीत्यर्थः ॥ २०९ ॥

मूढात्मत्वं प्रकटयति—नहीति । स्पष्टम् ॥ २१० ॥

ननु किमित्यस्मान्निन्दथ अस्मदभिप्रायमज्ञात्वैव ?—इति पूर्ववादी स्वाभिप्रायमाविष्करोति—सिद्धो मोक्षस्त्वमिति ।

मुमुक्षोरात्मविज्ञाने प्रवृत्त्यर्थं सिद्धब्रह्मरूपो मोक्षस्त्वमसीति वस्तुमात्र-कथनपरमिदं वाक्यं, न तत्त्वे पर्यवसितमित्यर्थः ॥ २११ ॥

उक्तमेव विवृणोति—कर्तेति । स्पष्टम् ॥ २१२ ॥

---

(१) ॰त्येव—पाठो ऽपि युक्तः । (२) ॰त्यसौ—पाठः (३) त्विति—इत्यव लिखितमुद्रितपुस्तकेषु पाठ उपलभ्यते, किंतु न्विति—इत्येव पाठो युक्ततरः स्यात् ।

तद्विज्ञानाय युक्त्यादि कर्तव्यं श्रुतिरब्रवीत् ।
कर्तृत्वाद्यनुवादेन सिद्धत्वानुभवाय तु ॥ २१३ ॥
निर्दुःखो निष्क्रियोऽकामः सिद्धो मोक्षोऽहमित्यपि ।
गृहीत्वैवे विरुद्धार्थमादध्यात्कथमेव सः ॥ २१४ ॥
सकामः सक्रियो सिद्ध इति मेऽनुभवः कथम् ।
अतो मे विपरीतस्य तद्भवान् वक्तुमर्हति ॥ २१५ ॥
इहैव घटते प्रश्नो न मुक्तत्वानुभूतये ।
प्रमाणेन विरोधी यः सोऽन्यार्थः प्रश्नमर्हति ॥ २१६ ॥

वाक्यश्रवणानन्तरं "मन्तव्यः" इति श्रुत्या कर्तव्यविधानादप्येवमेवा-भ्युपेयमित्याह—तद्विज्ञानायेति ।

त्वमिति कर्तृत्वमनूद्य वस्तुगत्या त्वं सिद्धमोक्षब्रह्मरूपोऽसि, अतस्तज्ज्ञानाय यतस्वेति वाक्यतात्पर्यमित्यर्थः ॥ २१३ ॥

नेयं कल्पना श्रुत्यनुसारिणीति सिद्धान्ती दूषयति—निर्दुःख इति ।

निर्दुःखादिविशेषणो मोक्ष एवाहमिति गृहीत्वापीत्यन्वयः । वाक्याद्वाक्यार्थज्ञानं न जायत एवेति न वक्तुमुचितमप्रामाण्यप्रसङ्गात्, अनुभवविरोधाश्च । तथा चोत्पन्ने ज्ञाने तद्विरुद्धप्रतिपत्तिर्न सङ्घटीतीत्यभिप्रायः ॥ २१४ ॥

यदि वाक्यादेव निर्दुःखादिलक्षणमोक्षात्मसाक्षात्कारः, कथं तर्हि तदा तद्विरुद्धाकारानुभवः ?—इति पृच्छति—सकाम इति ।

अतः सकामत्वादिरूपाद्विपरीतस्य मे ब्रह्मभूतस्येत्यर्थः ॥ २१५ ॥

अन्यस्वभावस्य सतो ममान्यस्वभावानुभवः कथमित्यस्मिन्नर्थे सङ्कच्छुतवा-

(१) गृहीत्वैव—पाठ । अत्र एवकार एव युक्त । (२) बृ. उ. २.४.५; ४.५.६;

अहं निर्मुक्त इत्येव सदसीत्यन्यमानजः ।
प्रत्यक्षाभासजन्यत्वाद्दुःखित्वं प्रश्नमर्हति ॥ २१७ ॥
पृष्टमाकाङ्क्षितं वाच्यं दुःखाभावमभीप्सितम् ॥ २१८ ॥
कथं हीदं निवर्तेत दुःखं सर्वात्मना मम ।
इति प्रश्नानुरूपं यद्वाच्यं दुःखनिवर्तकम् ॥ २१९ ॥
श्रुतेः स्वात्मनि नाशङ्का प्रामाण्ये सति विद्यते ।
तस्मादात्मविमुक्तत्वं प्रत्याययति तद्वचः ।
वक्तव्य तत्तथार्थं स्याद्विरोधेऽसति केनचित् ॥ २२० ॥

क्यस्य पुस प्रश्नो घटत युज्यते। 'ननु कथमह निर्दुःखादिरूप'? इति मुक्तत्वानुभवार्थे—इति प्रश्नविषय विविच्य प्रतिवक्ति—इदवेति। स्पष्टम् ॥२१६॥

अज्ञातज्ञापनस्वभावेन प्रमाणेनापूर्वार्थ बोधित तद्विरोधी य प्रमाणाभ सगृहीतोऽर्थ, स प्रश्नमर्हतीत्युक्त प्रपञ्चयति—अह निर्मुक्त इति।

सदसीति यदन्यन्मान तज्ज इत्यर्थ ॥ २१७ ॥

इदानीं शिष्याकाङ्क्षावशेनापि कार्थकल्पन न घटत इत्याह—पृष्टमिति।

किं तदाकाङ्क्षित तदाह—दु खाभावमभीप्सितमिति । दु खस्याभावो यस्मिंस्तद्दु खाभाव ब्रह्मरूप मोक्षलक्षणमित्यर्थ ॥ २१८ ॥

प्रश्नस्वरूपमुपन्यस्य तदनुरूपत्व प्रतिवचनस्य निगमयति—कथ हीति। स्पष्टम् ॥ २१९ ॥

ननु पृष्टमवोच्यते प्रसंख्यानद्वारेण, तद्व्यतिरेकेण श्रुतर्दु खापनयनसामर्थ्याभावादित्याशङ्क्य प्रमाणस्य प्रमेयावबोधनमेव कार्य, न कार्यान्तरमस्तीति परिहरति—श्रुतेरिति।

(१) मुक्तत्वप्रत्यय याति—इति टीकासमत पाठ, किंतु क्लि़ष्ट स ।

इतोऽन्योऽनुभवः कश्चिदात्मनो नोपपद्यते ।
अविज्ञातं विजानता विज्ञातारमिति श्रुतेः ॥ २२१ ॥
त्वंपदार्थविवेकाय सन्यासः सर्वकर्मणाम् ।
साधनत्वं व्रजत्येवं शान्तो दान्तानुशासनात् ॥ २२२ ॥

ननु स्वतःसिद्धे प्रामाण्ये सति स्वात्मनि स्वप्रमेय नाशङ्का विद्यते—स्वप्रमेयानवभाससामर्थ्याभावाशङ्का न विद्यत इत्यर्थः । किं ततः सिद्धम् ? तदाह—तस्मादिति । मुक्तत्वप्रत्ययं प्रति कारणत्वं यातीत्यर्थः । विरोध-परिहारस्य कृतत्वादिति भावः ॥ २२० ॥

वाक्यस्योक्तार्थानुभवहेतुतां विहाय गत्यन्तरं नास्त्यनुभवमार्गगतमि-त्याह—इतोऽन्य इति ।

प्रकारान्तरकल्पना चात्रानुपपन्ना श्रुतिविरोधादित्याह—अविज्ञात-मिति ॥ २२१ ॥

यदुक्तं पूर्वपक्षिणा प्राक् ‘ चर्या नो शास्त्रसंवद्या स्यादनिष्टं तथासति ’ इति तदन्यथैवोपपत्तेर्न प्रसंस्थानकल्पकमित्याह—त्वंपदार्थेति ।

“ शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति ” इति श्रुतरुपरतिशब्दनिर्दिष्टस्य सन्यासस्यात्मज्ञानं प्रति साधन

---

(१) क उ ११ (२) बृ उ ३ ४ १४ (३) अस्य श्लोकस्य प्रथमार्ध ‘ विवेकाय ’ इति स्थाने विचाराय इति पाठभेदेन विद्वन्मनोरञ्जनीटीकया ४ ५ खण्डे धृतम् । श्रुत्यैव विहितो यस्मात्तत्त्यागी पतितो भवेत् इति द्वितीयार्धेन सह इदं प्रथमार्धं ‘ इत्यादिधर्मेराह्मण इत्यादिना मधुसूदनसरस्वतीभिर्गूढार्थदीपिकायां ( ३ ६ ) धृतम् । तथैव यतिधर्मसंग्रहेऽपि ७२ पृष्ठे १५६ पृष्ठे च धृतं विश्वे श्वरसरस्वतीभिः । ( ४ ) १८ १६ ( ५ ) बृ उ ४ ४ २३ समाहित स्थाने ‘ श्रद्धावित्त ’ ‘ पश्यति ’ स्थाने ‘ पश्येत् ’—इति माध्यंदिनपाठः । अयमेव पाठः आचार्यसंमत इति उत्तरश्लोकाद्गम्यते ।

**त्वमर्थं प्रत्यगात्मानं पश्येदात्मानमात्मनि ।**
**वाक्यार्थं तत आत्मानं सर्वं पश्यति केवलम् ॥ २२३ ॥**

त्वावगमान्न तस्याशास्त्रसंवेद्यतया परित्यागप्रसङ्ग इत्यर्थः । तथाच वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात् , पदार्थावधारणपर्यन्तमेवाश्रमधर्माणां विधितोऽनुष्ठानं, ततः परं तु वाक्यादवगतब्रह्मात्मतत्त्वस्य 'मयेदमस्मै कर्तव्यम्' इति नियोज्यविषयप्रयोजनबुद्धेरनुत्पत्तेर्न तस्य क्वापि विधितः प्रवृत्तिः, किंतु साधकावस्थायामभ्यस्तस्य निवृत्तिरूपस्याश्रमधर्मस्य ज्ञानाविरोधिनः संस्कारमात्रेणानुवृत्तिर्भवति, ततश्च न यथेष्टचेष्टाप्यवकाशं लभत इति सर्वमवदातमेवास्मन्मत इति भावः ॥ २२२ ॥

एतदेव प्रपञ्चयिष्यन् वाक्यार्थोदयप्रकारं श्रौतं , व्युत्पादयति—त्वमर्थमिति ।

---

( २ ) तिस्रो ह्यज्ञानस्यावस्थाः—एका तावत् 'दृश्य सर्वं सत्यम्' इत्यभिमानहेतुः । सा युक्तिशास्त्रजनिताद्विवेकज्ञानान्निवर्तते । तन्निवृत्तावपि यथापूर्वमभिनिवेशेन व्यवहारहेतुर्द्वितीया, सा तत्त्वसाक्षात्कारान्निवर्तते । तन्निवृत्तावपि संस्कारमात्रेण देहाभासजगदवभासहेतुस्तृतीया बाधितानुवृत्तिरित्युच्यते । सा चरमसाक्षात्कारेण निवर्तते । एतदवस्थात्रय क्रमेणैव श्रूयते—

''तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः'' ( श्वे. उ. १. १० ) इति । तत्र तृतीयकक्षाया स्थितस्यातिवर्णाश्रमस्य विदुषोऽपि शिष्यादिदर्शनादुपदेशसंभवात्, ग्रहनक्षत्रगत्यादिदर्शनान्निवृत्तोऽपि दिङ्मोह संस्कारमात्राद्यथा भासते, एवमिह संस्कारमात्राच्छिष्यादिभानादुपदेशोपपत्तिः, द्वैताभावस्य युक्तिशास्त्रानुभवैरवधृतत्वादिद्वत्ताऽपीत्यर्थः । बोधोत्तरकाल बाधितः स्वप्नप्रपञ्चः प्रागप्यसत्त्वेन प्रतीयमानोऽपि प्राक्कालमवन्धितया स्मृत्या यथा विषयीक्रियते, एवं वर्तमानप्रपञ्चोऽसत्त्वेनानुभूयमानोऽपि संस्कारवशात् तत्कालसंबन्धितया किं न भासेत ?—इत्यर्थः ।

—सूत-सं-तात्पर्यदीपिका ३. ५. २८—३०.

सर्वमात्मेति वाक्यार्थे विज्ञातेऽस्य प्रमाणतः ।
असत्त्वे ह्यन्यमानस्य विधिस्तं योजयेत्कथम् ॥ २२४ ॥
तस्माद्वाक्यार्थविज्ञानान्नोर्ध्वं कर्मविधिर्भवेत् ।
नहि ब्रह्मास्मि कर्तेति विरुद्धे भवतो धियौ ॥ २२५ ॥
ब्रह्मास्मीति च विध्येयं नैव कर्तेति बाध्यते ।
सकामो बद्ध इत्येवं प्रमाणाभासजातया ॥ २२६ ॥
शास्त्राद्ब्रह्मास्मि नान्योऽहमिति बुद्धिर्भवेद्दृढा ।
यदा युक्ता तदैवं धीर्यथा देहात्मधीरिति ॥ २२७ ॥

शान्त्यादिसाधनसंपन्नो भूत्वाऽऽत्मन्येवात्माभासव्याप्ते स्वकार्यकारणसंघात एव, न बहिः, आत्मानं प्रत्यक्चेतयितारं पश्येदिति श्रुत्यर्थः प्रथमार्धेनोक्तः । सर्वमेनं पश्यतीति श्रुत्यर्थमुत्तरार्धेनाह—तत इति । एवं शोधितं प्रत्यगात्मानं सर्वं ब्रह्म पश्यतीति श्रुत्यर्थो दर्शित इति द्योतयति—वाक्यार्थमिति ॥ २२३ ॥

एवं विज्ञातवाक्यार्थस्य विधिगोचरता नैव संभवतीत्याह—सर्वमात्मेति । स्पष्टम् ॥ २२४ ॥

वाक्यार्थविज्ञानात्प्रागेव विधयोऽवकाशं लभन्ते, नोर्ध्वमित्युपसंहरति—तस्मादिति ।

ऊर्ध्वं विध्यसंभवे हेतुमाह—नहीति ॥ २२५ ॥

नन्वैक्यज्ञानेन भेदज्ञानमेव किमिति बाध्यते, विपरीतमेव किं न स्यादित्यत आह—ब्रह्मास्मीति चेति ।

प्रमाणाभासाज्जाता प्रमाणाभासजाता, तयेति विग्रहः ॥ २२६ ॥

स्वभावप्रवृत्ताया बुद्धेः प्रमाणजातया बाध्यत्वं दृष्टान्तेनोपपादयति—शास्त्रादिति ।

सभयादभयं प्राप्तस्तदर्थं यतते च यः ।
स पुनः सभयं गन्तुं स्वतन्त्रश्चेन्न हीच्छति[1] ॥ २२८ ॥
यथेष्टाचरणप्राप्तिः संन्यासादिविधौ कुतः ।
पदार्थाज्ञानबुद्धस्य वाक्यार्थानुभवार्थिनः ॥ २२९ ॥
अतः सर्वमिदं सिद्धं यत्प्रागस्माभिरीरितम् ॥ २३० ॥

दृढा यदा भवेत्, तदैवधीः स्वाहमित्येवधीरयुक्तेत्यन्वयः । यथा देहात्मधीर्मनुष्योऽहमित्याद्रिरूपा शास्त्राद्विदितात्मतत्त्वस्य न भवति, तथेत्यर्थः ॥ २२७ ॥

विदितात्मतत्त्वस्य कर्ता—कामीत्यादिधीरनवकाशेत्युक्तेऽर्थे दृष्टान्तान्तरमाह—सभयादिति ।

लोकप्रसिद्धार्थानुवादिश्लोकः स्पष्टार्थः ॥ २२८ ॥

यदुक्तं नियोगाभावे ज्ञानिनो यथेष्टचेष्टाप्राप्तिरिति तत्राह—यथेष्टेति ।

आदिपदाच्छ्रवणादिविधिर्गृह्यते । पदार्थयोरासमन्ताज्ज्ञानं पदार्थाज्ञानं पदार्थस्वरूपालोचन, तेन बुद्धस्य देहाद्यभिमानशून्यस्येति यावत् । पदार्थाज्ञानाद्बुद्धस्य प्रतिबुद्धस्येति वा । वाक्यार्थानुभवमर्थयमानस्य तत्रैव लग्नचित्तस्य कुतो यथेष्टाचरणप्राप्तिर्निमित्ताभावात्, अवसराभावाच्च[2]—इत्यर्थः । प्रबुद्धवाक्यार्थस्य तु मिथ्याज्ञानलेशस्याप्यभावात्, तन्मूला यथेष्टचेष्टा नोन्मिषतीति भाव ॥ २२९ ॥

प्रकरणार्थमुपसंहरति—अत सर्वमिदमिति । स्पष्टम् ॥ २३० ॥

---

(१) गच्छति—नि. सा. पाठ । (२) तुलय—नै सि. ४. ६१-६२; भ. गी. ४. १९, १४. २२.

यो हि यस्माद्विरक्तः स्यान्नासौ तस्मै प्रवर्तते ।
लोकत्रयाद्विरक्तत्वान्मुमुक्षुः किमितीहते ॥ २३१ ॥
क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ।
मृष्टान्नध्वस्ततृड् जानन् नामूढस्तज्जिघत्सति ॥ २३२ ॥
वेदान्तवाक्यपुष्पेभ्यो ज्ञानामृतमधूत्तमम् ।
उज्जहारालिवद्यो नस्तस्मै सद्गुरवे नमः ॥ २३३ ॥

इति तत्त्वमसिप्रकरणम् ।

मुमुक्षोरपि नास्ति यथेष्टचेष्टा, कुतः सा मुक्तस्य स्यात्? इति कैमुतिकन्यायमाह—यो हीति ॥ २३१ ॥

विदुषो नियोगपारतन्त्र्याभावेऽपि भिक्षाटनादिप्रवृत्तिवद्विषयान्तरेऽपि प्रवृत्तिः कदाचित्स्यादिति चेत्, तत्राह—क्षुधयेति ।

विषयाणां दुःखसाधनतावधारणपूर्वकं प्रागेव विषवत्त्यक्तानां न पुनरागमनममूढस्य संभवति । भिक्षाटनादेस्तु ज्ञाननिष्ठाविरोधाभावात्, शरीरस्थितिमात्रहेतुतयाऽऽवश्यकत्वेऽप्यपूर्वोपचयहेतुत्वाभावाच्च सत्त्याग-नगान्ननुवृत्तिरिति न दोष इति द्रष्टव्यम् ॥ २३२ ॥

उत्पन्नतत्त्वज्ञानस्य यद्यपि किमपि कृत्यं नास्ति, तथापि गुरुशास्त्रे माननीये एवेति शिष्यान् शिक्षयन्निव गुरुप्रमाणं निबध्नाति—वेदान्तवाक्येति । स्पष्टम् । नोऽस्मदर्थमित्यर्थः ॥ २३३ ॥

इत्यष्टादशं तत्त्वमसिप्रकरणम् ॥ १८ ॥

---

(१) मिदाम —इति ने सि ४.६६. पाठ ।

## १९. अथ भेषजप्रयोगप्रकरणम्

प्रयुज्य तृष्णाज्वरनाशकारणं
चिकित्सितं ज्ञानविरागभेषजम् ।
न याति कामज्वरसंनिपातजां
शरीरमालां शतयोगदुःखिताम् ॥ १ ॥

तदेवं संक्षेपविस्तराभ्यां तत्त्वंपदार्थपरिशोधनपूर्वकं ब्रह्मात्मैक्यलक्षणं वाक्यार्थज्ञानं सफलं सर्ववेदान्तप्रत्ययं प्रमाणयुक्तिभ्यामुपपादितं, नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्तानन्दस्वभावस्य प्रत्यगात्मनो भेदविपर्यासाद्यनेकानर्थहेतुश्चाहंकारमनोबुद्धिचित्तवाच्यमन्तःकरणमिति च तत्र तत्रोक्तम् । इदानीं प्राधान्येन मनोऽध्यासनिबन्धन एवात्मनः संसारः, अतो मनःस्वरूपतच्चेष्टानुसंधानेन तद्विलापने यत्नः कार्य इत्यभिप्रायेणात्ममनःसंवादरूपं प्रकरणमारभमाणो भगवान् भाष्यकारः प्रकरणप्रयोजनं तावदाह—प्रयुज्येति ।

चिकित्सितं चिकित्सा, भावे निष्ठा । ज्ञानं विवेकरूपं, विरागः औदासीन्यं—मनोवृत्तिविषयेष्वनासक्तिलक्षणं च भेषजं यस्मिंस्तच्चिकित्सितं तृष्णारूपज्वरनाशकारणं प्रयुज्य दुःखितां दुःखित्वं न याति–पुमान्–इति योजना । काम एव ज्वरस्तन्निमित्तसंनिपातो मूर्च्छा—आत्मानात्मविवेकलक्षणा, ततो जातां शरीरपरम्पराशतयोगैः संयन्धैर्दुःखितामित्यर्थः । यद्वा—चिकित्सितमिति भेषजविशेषणं चोच्यम् । सम्यग्यथाशास्त्रं साधितमित्यर्थः ॥ १ ॥

---

(१) विवेकरूप-विरागरूप-पाठः ।

अहंममेति त्वमनर्थमीहसे
परार्थमिच्छन्ति तवान्य ईहितम् ।
न तेऽर्थबोधो न हि मेऽस्ति चार्थिता
ततश्च युक्तः शम एव ते मनः ॥ २ ॥

यतो न चान्यः परमात् सनातनात्
सदैव तृप्तोऽहमतो न मेऽर्थिता ।
सदैव तृप्तश्च न कामये हितं
यतस्व चेतः प्रशमाय ते हितम् ॥ ३ ॥

भैषजप्रयोगप्रकरणमात्ममनःसंवादेन प्रपञ्चयति—अहं ममेत्यादिना ।

हे मन , अहंममेति—इदमित्यपि द्रष्टव्यम्—त्वमनर्थं व्यर्थमीहसे चेष्टसे। ननु त्वदर्थमेवाहं चेष्टे, अतः कथमानर्थक्यम् ?—इति चेन्, नाहं सांख्यस्य प्रत्ययेनमभिमानस्तवेत्युत्तरमाह—परार्थमिच्छन्तीति । तवहितं परार्थं पुरुषस्य भोगापवर्गार्थमन्ये सांख्या इच्छन्ति, न वयं वेदान्तसिद्धान्तवेदिनः । विचार्यमाणं त्वन्मनीषितमपि मुधा । यतस्तेऽर्थबोधो न सम्भवत्यचेतनत्वात्, नापि मे त्वय्यर्थितास्ति, ततश्च ते शमो लय एव युक्त इत्यर्थः ॥ २ ॥

आत्मनोऽर्थित्वाभावं साधयति—यत इति ।

सनातनात्पूर्णानन्दरूपात्, परमादविकारात्परमात्मनोऽन्यो नाहं यतः, अतः सदैव तृप्त इत्यादिरूपः । तस्माद्धे चेतः, त्वं प्रशमाय यतस्व । मुमुक्षुणा मनोविलयने यत्नः कार्य इत्यभिप्रायः ॥ ३ ॥

---

(१) ऽर्थिकम्—क० । (२) तमं—पाठ ।

षडूर्मिमालाभ्यतिवृत्त एव यः
स एव चात्मा जगतश्च नः श्रुतेः ।
प्रमाणतश्चापि मया प्रवेद्यते
मुधैव तस्माच्च मनस्तवेहितम् ॥ ४ ॥
त्वयि प्रशान्ते नहि चास्ति भेदधी-
र्यतो जगन्मोहमुपैति मायया ।
ग्रहो हि मायाप्रभवस्य कारणं
ग्रहाद्विमोके नहि साऽस्ति कस्यचित् ॥ ५ ॥

परमात्माभेदेन स्वस्यार्थित्वाभाव उक्तः, तमेवाभेदमुपपादयति—षडू-र्मिमालेति ।

अशनाया, पिपासा, शोकः, मोहः, जरा, मृत्युरिति प्राणमनोदेहधर्माः षड् ऊर्मय इवाविर्भावतिरोभावरूपाः, तेषां माला अविच्छिन्नाः परम्पराः, ता अभ्यतीत्य सर्वात्मना पृथक्कृत्य वृत्तः सिद्धः, निष्प्रपञ्च इति यावत् । य एवंविधः, स एव जगतः सर्वस्यात्मा, चकारात्त्वाहमेनात्मा, श्रुतेः—"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इत्यादौ श्रवणादित्यर्थः, "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" इत्यादिस्मृतिप्रमाणतोऽपि । च-कारात्कार्यकारणोपाधिद्वयपरामर्शमन्तरेण स्वतो भेदानिरूपणादित्यादिन्या-यात्, विद्वदनुभवाच्च मया प्रवेद्यते सम्यक् ज्ञायते । मुधैवेति सुगमम् ॥ ४ ॥

प्रत्यगात्मनः परमात्माभेदं प्रामाणिकमुक्त्वा, भेदप्रतिभासस्य मनः-कल्पितत्वेनाभासतामुपपादयति—त्वयीति ।

यतो भेदधियो जगत्प्राणिजातं मोहमाकुलीभावमकृतार्थताभिमानलक्ष-

(१) पञ्च १३. ८. सटीकम् । (२) बृ. उ. ३. ४. १. (३) भ. गी. १०. २०.

न मेऽस्ति मोहस्तव चेष्टितेन हि
प्रबुद्धतत्त्वस्त्वसितो ह्यविक्रियः ।
न पूर्वतत्त्वोत्तरभेदता हि नो
ह्यथैव तस्माच्च मनस्तवेहितम् ॥ ६ ॥
यतश्च नित्योऽहमतो न चान्यथा
विकारयोगे हि भवेदनित्यता ।
सदा प्रभातोऽहमतो हि चाद्वयो
विकल्पितं चाप्यसदित्यवस्थितम् ॥ ७ ॥

णया मायया उपैति नित्यं संबध्यते, सा भेदधीस्त्वयि मनसि प्रशान्ते न चाऽस्ति, सुषुप्तौ त्वदभावे तदभावदर्शनादित्यर्थः । अन्वयव्यतिरेकाभ्या भेदग्रहस्यानर्थहेतुतामुपपादयति—ग्रहो हीति । सुषुप्त्यादौ भेदग्रहाभावे मायामोहयोरदर्शनादित्यर्थः ॥ ५ ॥

इतश्च मनश्चेष्टितं मृषेत्याह—न मेऽस्तीति ।

असितो बन्धरहितः । प्रबुद्धतत्त्वस्वभावं, असितत्व, अविक्रियत्वं च व्युत्पादयति—न पूर्वेति । पूर्वतत्त्वं पूर्वावस्था । पूर्वतत्त्वादुत्तरभेदता नोऽस्माकं नास्ति—तत्त्वप्रबोधात्पूर्वोत्तरकालयोर्न मे विशेषोऽस्तीत्यर्थः । हि यस्मादेवं, तस्मात् त्वत्कृतातिशयाभावादित्यर्थः ॥ ६ ॥

सर्वदृश्यातिवर्तित्वादात्मन आगन्तुकातिशयायोगं साधयति—यतश्चेति ।

अन्यथा अनित्यता । ननु कुतोऽनित्यताप्राप्तिर्या निषिध्यते ? तत्राह—विकारेति । परिस्पन्दपरिणामादिरूपविक्रियाभावेऽपि प्रकाशाप्रकाशसंसर्गरूपविक्रिया स्यादित्याशङ्क्याह—सदेति । "सकृद्विभातो ह्येवैष ब्रह्मलोकः"[1], "पश्यन्वै तन्न पश्यति"[2] इत्यादिश्रुतेरित्यर्थः । सति दृश्यभेदे

(१) छां. उ. ८. ४. २. (२) बृ. उ. ४. ३. २३.

अभावरूपं त्वमसीह हे मनो
निरीक्ष्यमाणे न हि युक्तितोऽस्तिता ।
सतो ह्यनाशादसतोऽप्यजन्मतो
द्वयं च चेतस्तव नास्तितेष्यते ॥ ८ ॥
द्रष्टा च दृश्यं च तथा च दर्शनं
भ्रमस्तु सर्वस्तव कल्पितो हि सः ।
दृशेश्च भिन्नं न हि दृश्यमीक्ष्यते
स्वपन् प्रबोधेन तथा न भिद्यते ॥ ९ ॥

कथमद्वयत्वमत आह—विकल्पितमिति । रज्जुसर्पादिवदागन्तुकत्वादसदित्यवस्थित निश्चितमित्यर्थ ॥ ७ ॥

मनसैव सद्वितीयत्वमात्मन इत्याशङ्क्याह—अभावरूपमिति । यद्वा—भेदकल्पकस्य मनसोऽभावत्वादपि सदाऽद्वयत्वमात्मन इत्याह—अभावरूपमिति ।

युक्तितो निरीक्ष्यमाणे तवास्तिता नहीत्युक्ता युक्तिमाह—सतो हीति । तथा चाह भगवान्—"नासतो विद्यते भावो नाभावो विद्यते सत "[1] इति । द्वय जन्मविनाशाख्य त तव, अतस्तव नास्तितेष्यते, परमार्थसत्त्व नेष्यत इत्यर्थ ॥ ८ ॥

'बीजाभाव कुत फलम्'[2] इति न्यायेनाद्वैतत्वमात्मनो विशदयति—द्रष्टा चेति ।

तव कल्पितस्त्वत्कृत । किंच—आगन्तुकस्य विज्ञातसत्त्वाभावादप्यात्माऽद्वय इत्याह—दृशेश्चेति । जडस्य स्वत स्फुरणाभावात्, अस्फुरतश्च

(१) भ गी २ १६ (२) पृ २०१ १९ श्लो

विकल्पना वाऽपि तथाऽद्वया भवे-
दवस्तुयोगात्तदलातचक्रवत् ।
न शक्तिभेदोऽस्ति यतो न चाऽऽत्मनां
ततोऽद्वयत्वं श्रुतितोऽवसीयते ॥ १० ॥

सत्त्वे प्रमाणाभावादित्यर्थः । तथा सति स्वप्नात्मा प्रबोधेन जाग्रदादिना न भिद्यते । यथा स्वापावस्थायामद्वितीय एव, तथाऽवस्थान्तरेऽपीत्यर्थः । स्वापे चाद्वितीयत्वं "सलिल एको द्रष्टाऽद्वैतो भवति", "अथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति" इत्यादिश्रुतिसिद्धम् ॥ ९ ॥

एवं विकल्पाभावेऽपि विकल्पना सत्याऽस्तीति पुनरद्वैतानुपपत्तिरित्याशङ्क्याह—विकल्पना वाऽपीति ।

तथा दृश्यवदेव विकल्पनाऽपि न भिद्यत इति पूर्वश्लोकगतानुकर्षणार्थो वाशब्दः । किंत्ववस्तुयोगादवस्तुविषयकतया तद्विकल्पत्वात्, अद्वया अधिष्ठानातिरिक्तस्वरूपरहिता भवेत्तत्र लोके अलातचक्रवत्—भ्रमदुल्मुकस्य चक्राकारत्ववदिति योजना । यथा भ्रमतोऽलातस्य चक्राकारता न पृथग्वस्तु, तथा विकल्पनाऽपि चिदात्मातिरेकेण पृथग्वस्तुसती न भवतीत्यर्थः । तथाऽपि नात्मनोऽद्वयत्वं दृष्टिश्रुतिमत्यादिशक्तिरूपस्य स्वगतभेदस्य सत्त्वात्, तथा प्रतिशरीरमात्मभेदप्रथनात् सजातीयभेदोपपत्तेश्चेत्याशङ्क्य श्रुतिविरोधान्मैवमित्याह—न शक्तिभेद इति । तथा च श्रुतिः—"अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनः

---

(१) बृ. उ. ४. ३. ३२. (२) कौ. उ. ३. ३. तदैनं, तथैनं—पाठान्तरे । (३) ५.२—मां. का. अलातशान्त्याख्यप्रकरणम्—४७ कारिकादि ।

मिथश्च भिन्ना यदि ते हि चेतनाः
क्षयस्तु तेषां परिमाणयोगतः ।
ध्रुवो भवेद्भेदवतां हि दृष्टतो
जगत्क्षयश्चापि समस्तमोक्षतः ॥ ११ ॥

तान्यस्यैतानि कर्मनामान्येव' " इति चिदात्मनो द्रष्ट्रादिभेदस्योपाधिकृता दर्शयति " एको देवो बहुधा निविष्टः ", " एकं सन्तं बहुधा कल्पयन्ति", " एकस्तथा सर्वभूतान्तरात्मा " इत्यादिश्रुतिरात्मनः सर्वैकत्वमाह । तथा भेदनिषेधश्रुतिस्मृतयोऽप्यत्रोदाहार्याः ॥ १० ॥

आगमबाह्यानामात्मभेदकल्पनां युक्त्या निराकरोति—मिथश्चेति ।

चेतना आत्मानो यदि मिथो भिन्नाः स्युः, तर्हि ये भिन्नास्ते परिमिताः, यथा मूलाङ्कुरादयः, ये च परिमितास्ते विनाशिनस्तद्वद्—इत्यात्मनां विनाशित्वप्रसङ्ग इति समुदायार्थः । परिमाणयोगतस्तेषां क्षयस्तु ध्रुवो भवेत् । भेदवतां हि दृष्टतो विनाशदर्शनादिति योजना । किंच, भेदपक्षे एकैकस्मिन् कल्पे एकैकमुक्तावप्यनन्तेषु गतकल्पेष्वनन्तानां जीवानां मुक्तिसंभवात्, इदानीं समस्तमोक्षतो भोक्त्रभावे तदर्थानां भोग्यानां जगतां क्षयश्चापि भवेत्, अतो भेदपक्षो दुर्युक्तिक इत्यर्थः ॥ ११ ॥

---

(१) बृ. उ. १. ४. ७ (२) तै. आ. ३. १४. पश्य–पृ. २८ १४ टिप्पणीम् । (३) ऋ. सं. १०. ११४. ५ (४) कठ उ. ५. ९ (५) पश्य—विष्णुसहस्रनामस्तोत्रभाष्य १० श्लो., तथा सनत्सुजातीय भाष्यं २० श्लो

न मेऽस्ति कश्चिन्न च सोऽस्मि कस्यचि-
यतोऽद्वयोऽहं न हि चास्ति कल्पितम् ।
अकल्पितश्चास्मि पुरा प्रसिद्धितो
विकल्पनाया द्वयमेव कल्पितम् ॥ १२ ॥
विकल्पना चाप्यभवे न विद्यते
सदन्यदित्येवमतो न नास्तिता ।
यतः प्रवृत्ता तत्र चापि कल्पना
पुरा प्रसिद्धेर्न च तद्धि कल्पितम् ॥ १३ ॥

ननु तथापि जगज्जीवेश्वरादिभेदस्य विद्यमानत्वात्कथमुक्तदोषपरिहार इत्याशङ्क्याह—न मेऽस्तीति ।

यतोऽहमद्वयः, वस्तुतो मे गुणभूतः, प्रधानभूतो वा, अन्यादृशो वा न कश्चिदस्ति । यस्याऽपि कस्यचिदहमस्मि, सोऽपि न चास्तीति संबन्ध. । यत्र कल्पितं जगत्, तत्र न ह्यस्ति । तथा च जीवेश्वरजगद्भेदस्य प्रमाणासहिष्णुताया अलंकारत्वान्नास्त्यस्मासूक्तदोषप्रसङ्ग इत्यर्थः । ननु द्वैतवदद्वैतस्यापि पदार्थत्वाविशेषात्कल्पितत्वं तदवस्थमित्याशङ्क्य निरधिष्ठानकल्पनायोगात्, निरवधिकबाधायोगाच्च सर्वकल्पनायाः प्रागेव सिद्धं, कल्पितबाधावधितया पश्चादप्यवशिष्यमाणं न कल्पितं, किंतु स्वत.सिद्धं वस्त्वद्वयशब्देनोच्यत इत्याह—अकल्पित इति । विकल्पनायाः पुरा प्रसिद्धितोऽहमकल्पितोऽस्मि, चकारादूर्ध्वमप्यवधिभूतत्वात्, मध्ये च तत्साक्षित्वादकल्पित एवास्मीति गृह्यते । परिशेषात्सापेक्षं द्वयमेव कल्पितमित्यर्थः ॥१२॥

उक्तमेव स्पष्टीकुर्वन्नात्मनो विकल्पनाद्यविषयत्वमाह—विकल्पना चापीति।

---

(१) पद्य–८. ६. सटीकम् । (२) °स्माद्युक्त°—पाठ. । (३) पद्य–पृ.११७. श्लो. १७. सटीक, पृ. २१६. ४. थेटिप्पणी, तथा १८. १६५.

असद्वयं तेऽपि हि यद्यदीक्ष्यते
न दृष्टमित्येव न चैव नास्तिता ।
यतः प्रवृत्ता सदसद्विकल्पना
विचारवद्वाऽपि तथाऽद्वयं च सत् ॥ १४ ॥

नास्ति भव उत्पत्तिर्यस्य तदभव, तस्मिन्नभवे नित्ये सदन्यत् सतोऽन्यत् असदित्यपि विकल्पना न च विद्यते । अत एव सति न नास्तिता, आत्मनो नित्यत्वादित्यर्थः । किंच—अमनस्कस्य कल्पनानुदयात्, मनसश्चागन्तुकतया स्वरूपसत्ताभावात्, तदपि सविलासं यत्र कल्पितं, तत्र कल्पनालम्बनं, किंतु सर्वकल्पनासाक्षित्वेन पूर्वापरकालकलनाकलितं कूटस्थमेवात्मतत्त्वमित्याह—यत इति । तत्र—मनस इत्यर्थः । स्वतकल्पनाया अपि पुरा प्रसिद्धेरित्यर्थः ॥ १३ ॥

ननु यदुपलभ्यते तदस्तीत्यभ्युपगम्यते, यन्नोपलभ्यते तन्नास्तीति, उपलभ्यते च द्वैतं नाद्वैतमित्याशङ्क्य दर्शनादर्शने न वस्तुसत्त्वासत्त्वयोः कारणे, किंत्वन्य एव तन्निश्चयहेतुरित्यभिप्रेत्याह—असद्वयमीति ।

हे मनः, ते तव गोचरीभूतं यद्यदीक्ष्यते, तत्तद्वयं द्वैतं दृष्टमप्यसत् । स्वप्नवद्दृष्टनष्टस्वरूपत्वात् । तथा न दृष्ट न दृश्यत इत्येव(मे?ए)तावता वस्तुनो नास्तिता न च । नहि नीरूपस्य वायोश्चक्षुषाऽनुपलम्भेऽपि नास्तिता भवति, किंत्वस्तितैव । सतोऽपि वस्तुनो द्रष्टुरसामर्थ्याद्वा, दर्शनायोग्यत्वाद्वाऽपि,

---

(१) तुलय–बुद्धे स्यादपराधोऽस्य यद्बाह्यार्थानुकारिता ।
प्रयत्नस्त्व चितभव च नैरस्याना यमात्मनि ॥
—तै. उ. वा २ ९. ५१.

(२) कल्पनाकलित—पाठ । तुलय–१३-२०., तथा—"मायाकलितदेशकालकलनावैचित्र्यचित्रीकृतम्"–दक्षिणामूर्तिस्तोत्रे २. श्लो.

अदर्शनसंभवादित्यर्थः । नन्वदृष्टमपि नास्तीति शशशृङ्गादिप्रसिद्धम् । सत्यम् । तथापि—

> 'लब्धरूपं कचित्किंचित्तादृगेव निषिध्यते ।
> विधानमन्तरेणातो न निषेधस्य संभवः' ॥

इति न्यायेन द्वैतमस्ति—नास्ति—इति विप्रतिपत्त्यालम्बनं किमप्यास्थेयमेव, अन्यथा विकल्पप्रसरायोगादित्यभिप्रेत्याह—यतः प्रवृत्ता सदसद्विकल्पनेति । यतो यस्मिन्नधिष्ठाने प्रतीयमाना विकल्पना, तदस्त्यकल्पितरूपमित्यर्थः । विकल्पालम्बनत्वेनाधिष्ठानसत्तामुक्त्वाऽवधित्वेनाऽपि तत्त्वमाह—विचारवद्वेति । वाशब्दश्चार्थः । यथा विचारो निर्णयमन्तरेण न पर्यवस्यति, तथा सद्वस्तु विना न विकल्पः प्रशाम्यति । अतः सर्पधारादण्डमालादिविकल्पेष्वनुगम्यमानतया अधिष्ठानत्वेन, पुनः सर्वविकल्पनिषेधावसानतया अवधित्वेन, अनुवर्तमानाऽविकल्पिताऽनिषिद्धरज्जुस्वरूपवत्, अध्यात्मादिविकल्पाधिष्ठानसन्मात्रत्वेन तन्निषेधावधित्वेन चाविकल्पितमनपोह्यं चात्मतत्त्वमद्वयमस्तीत्येवोपलब्धमिति तात्पर्यार्थः ॥ १४ ॥

---

(१) अस्याः कारिकायाः प्रथमार्धं खण्डने चतुर्थपरिच्छेदे विरोधखण्डनावसरे 'अन्यत्र' इत्यनेन उद्धृतम् । तत्र शांकरीटीकायां—'अन्य.' इति प्रमाणटीकायां वाचस्पतिरित्यर्थः । लब्धस्वरूप=ज्ञातस्वरूप, तादृगिति यथाप्रमितमित्यर्थ.—इति व्याख्यातम् । किंतु—प्रमाणटीकायां (पृ. ३२) 'लब्धरूप हि वस्तु किंचित् क्वचिन्निषिध्यते, न तु ज्ञानाकारालीकात्' इति गद्यरूपेणार्थानुवाद उपलभ्यते । श्लोकानुपूर्वी तु सूक्ष्मावलोकनतोऽपि नोपलब्धा । इयं संपूर्णा कारिका न्यायसारटीकायां न्यायतात्पर्यदीपिकायां 'लब्धरूपे' इति पाठान्तरेण धृता (पृ. ५०) । तर्कभाषायामपि शब्दप्रमाणफलनिरूपणान्ते—अधिकपाठे—लब्धरूपस्यैव निषेद्धुं शक्यत्वात्—यथोक्तमित्यादिना 'न स्वरूपं' इति पाठभेदेन धृता । (२) 'पोध—पाठः ।

सदभ्युपेतं भवतोपकल्पितं
विचारहेतोर्यदि तस्य नास्तिता ।
विचारहानाच्च तथैव संस्थितं
न चेत्तदिष्टं नितरां सदिष्यते ॥ १९ ॥

किंचोक्तविधया दर्शनमात्रात्सत्त्वासत्त्वनिश्चयासंभवाद्विचारोऽभ्युपेयः, तस्मिंश्च क्रियमाणे सदेवाद्वयमवशिष्यत इत्यभिप्रेत्याह—सदभ्युपेतमिति।

सद्वस्तु नास्तीति वदता तन्निर्णयाय विचारोऽभ्युपगम्यते, न वा ? यदि सोऽभ्युपगम्यते, तदा भवता सद्वस्त्वभ्युपेतं, यतो विचारहेतोर्विचारसिध्यर्थमुपकल्पितमुपस्थापितं किमपि वस्तु सर्वैर्विचारकैरिति योजना। विचारो हि प्रमाणव्यापारस्य फलावसानत्वनिश्चयहेतुस्तर्कः। स च न प्रमेयमन्तरेण प्रसरमुपलभते, प्रमितं च न बाध्यत इति सद्वस्तुसिद्धिरित्यर्थः। विपक्षे बाधकमाह—यदीति। यदि तस्य सद्वस्तुनो नास्तिता, तदा प्रमाणप्रमेयप्रमातृनिरूप्यस्य विचारस्य हानात्—अप्रवृत्तेः, चकारात्तदभावनिर्णयहानाच्च, तथैव संस्थितमनिर्णीतमेव संस्थितम्। तथाच वस्तुतत्त्वानवधारणादैहिकामुष्मिकार्थप्रवृत्तिहानिः स्यादिति भावः। एतेन विचारानभ्युपगमपक्षे च दोष उक्तो वेदितव्यः। अथाविचारितमनिर्णीतं च तत्किमपि नेष्टं चेत्, तर्हि विचारनिर्णययोः सदवसानमन्तरेण पर्यवसानाभावान्नितरां सदिष्यते—सद्वस्त्विष्यत एवेत्यर्थः। यद्वा—हे मनः, भवतोपकल्पितं द्वैतजातं विचारहेतोः विचारसिध्यर्थं सदभ्युपेतं—आत्मतत्त्वनिश्चयफलविचारप्रवृत्तये ऽस्तीति द्वैतमङ्गीकृतमित्यर्थः। यदि पुनस्तस्य नास्तिता शून्यतैव द्वैतस्य स्यात्, तदा विचारहानाद्विचाराप्रवृत्तेः, चकारात्परमार्थनिर्णयाभावाच्च, तथैव—अविचारितमनिर्णीतं च तत्त्वं संस्थितं स्यात्। अथ तत्त्वानिर्णये पुरुषार्थासिद्धेः, तत्—अनिर्णीतस्वभावमिष्टं न चेत्स्यात्, तर्हि नितरां सदिष्यते,

असत्समं चैव सदित्यपीति चे-
दनर्थकत्वान्नरशृङ्गतुल्यतः ।
अनर्थवत्त्वं त्वसति ह्यकारणं
न चैव तस्मान्न विपर्ययेऽन्यथा ॥ १६ ॥

विचारनिर्णये सति सन्मात्रस्य सत्त्वमात्रत्वाव्यभिचारादित्यर्थः । भेदपक्षस्फुरणं विना न संशयावतारः, तं विना न विचारप्रवृत्तिः, तामृते न वस्तुतत्त्वनिर्णयः, तं च विना न पुरुषार्थलाभः—इति विचारार्थतया यथाप्रतिपन्नं द्वैतमभ्युपगतं, न प्रामाणिकत्वेन । तथा च भुजगं रज्जुवत् व्यवहरत इवातत्त्वं तत्त्वबुद्ध्या व्यवहरतोऽनर्थप्राप्तिसम्भवात्, तत्परिहाराय विचारेऽवश्यभाविनि क्रियमाणे सर्वेषु विशेषेष्वस्तितायाः अव्यभिचारात्, विशेषाणां व्यभिचारात्, मिथोऽव्यभिचारिणां चानृतत्वात्, सन्मात्रमेव सत्यं, न द्वैतरूपो विशेषाकारः इति नितरां सिध्यतीति भावः ॥ १५ ॥

भवत्वेवं विचारान्यथानुपपत्त्या सद्वस्तुसिद्धिः, तत् अर्थक्रियां करोति, न वा ? आद्ये क्षणिकत्वापत्तिरित्यभिप्रेत्य, द्वितीये तस्य नरशृङ्गादविशेष इति बौद्धः शङ्कते—असत्सममिति।

अनर्थत्वात्—अर्थक्रियारहितत्वादित्यर्थः । नीतं सन्मात्रम् अर्थक्रियाशून्यत्वात्, नरशृङ्गवदित्यनुमानमप्रयोजकत्वेन दूषयति—अनर्थवत्त्वमिति । अनर्थवत्त्वं त्वसति—असत्त्वं साध्ये न कारणं प्रयोजकं न भवति, स्वभावसत्त्वसम्भवादित्यर्थः । अनर्थक्रियाकारित्वस्यासत्त्वव्याप्तौ मानाभावादनैकान्तिकतामुक्त्वाऽर्थक्रियाकारित्वस्य सत्त्वव्याप्तावनैकान्तिकतामाह—न चैव तस्मादिति । तस्मादर्थक्रियाकारित्वादेव सत्त्वं पदन्यासाद्यर्थक्रियाकारिणि क-

---

(१) विशेषणव्यभिचारात्—नि सा पा० । विशेषणानां व्य—इत्यपि पाठः ।

> असिद्धतश्चापि विचारकारणा-
> द्वयं च तस्मात्प्रसृतं च मायया ।
> श्रुतेः स्मृतेश्चापि तथा हि युक्तितः
> प्रसिद्ध्यतीत्थं न तु युज्यतेऽन्यथा ॥ १७ ॥

ण्टकाद्यभावे सत्त्वव्यभिचारादित्यर्थः । हेतुनिरसनमुपसंहरति—न विपर्ययेऽन्यथेति । विपर्ययेऽर्थक्रियाकारित्वाभावे नान्यथा—असत्त्वं न संभवति, क्रियोत्पत्तेः पूर्वमुदासीनवस्तुदर्शनात्, अन्यथा सत्त्वार्थक्रिययोरन्योन्याश्रयापातादित्यर्थः ॥ १६ ॥

असिद्धश्चायं हेतुरित्याह—असिद्धतश्चापीति ।

न केवलमनैकान्तिकत्वादेरयमनुमानमप्रमाणं, अपि त्वस्मदभिमत आत्मनि पक्षासिद्धेश्चेत्यपेरर्थः । अर्थक्रियाकारित्वाभावमात्रं हेतुः ? परमार्थविशेषितत‌दभावो वा ? आद्येऽसिद्धिमाह—विचारकारणादित्यादिना । कूटस्थस्यापि सतो धर्मित्वेन विचारप्रवृत्तिकारणत्वात्, मायया द्वयशब्दवाच्यभेदप्रपञ्चप्रसरणहेतुत्वाच्चेत्यर्थः । मायया जगद्धेतुत्वं साधयति—श्रुतेरिति । "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतिः, "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्" इत्यादिस्मृतिः । कार्यस्य वाचारम्भणत्वप्रतिपत्तिसाधकत्वन्यायो युक्तिः । इत्थं कूटस्थस्याप्यर्थक्रियाकारित्वं प्रसिद्ध्यति, अतो हेत्वसिद्धिरित्यर्थः । द्वितीयं दृष्टान्तासिद्ध्या दूषयति—न त्विति । अन्यथा परमार्थतोऽर्थक्रियाकारित्वं स्थिरस्य क्षणिकस्य वा न युज्यते, अक्रियस्याकारकत्वात्, क्रियाकार्ये प्रत्यपि क्रियावत्त्वापत्तावनवस्थाप्रसङ्गादिति दिक् ॥ १७ ॥

---

(१) श्वे. उ. ४. १०. (२) भ. गी. ९. १०. (३) ब्र. सू. २. १. १४.

विकल्पनाचापि विधर्मकं श्रुतेः
पुरा प्रसिद्धेश्च विकल्पतोऽद्वयम् ।
न चेति नेतीति यथा विकल्पितं
निषिध्यतेऽत्राप्यविशेषसिद्धये ॥ १८ ॥

अकल्पितेऽप्येवमजेऽद्वयेऽक्षरे
विकल्पयन्तः सदसच्च जन्मभिः ।
स्वचित्तमायाप्रभवं च ते भवं
जरां च मृत्युं च नियान्ति संततम् ॥ १९ ॥

ननु सर्वविकल्पहेतुत्वादद्वयस्य सर्वविकल्पयुक्तत्वमित्याशङ्क्याह— विकल्पनाच्चापीति ।

विधर्मकं विरुद्धस्वभावमित्यर्थः । "निष्कलं निष्क्रियम्" इत्यादिश्रुतेः विकल्पतः पुरा प्रसिद्धेरिति युक्तेश्चेत्यर्थः । अद्वयमिति च्छेदः । "नेदं यदिदमुपासते", "नेति नेति" इति निषिध्यमानचेतनाचेतनविकल्पावसानसिद्धयेऽत्रापि निषेधवाक्येष्वपि विकल्पविधर्मकमद्वयं निर्विशेषं सिद्धमित्याह—न चेतीति । यथा विकल्पितं नेति नेतीति निषिध्यते, न च तथाऽद्वयमात्मतत्त्वं निषिध्यत इति योजना ॥ १८ ॥

यथोक्ते श्रुत्यर्थे ये विकल्पयन्ति, तेऽनर्थं प्राप्नुवन्तीत्याह—अकल्पित इति ।

कूटस्थे भेदविकारसंसर्गशून्ये श्रुतिसिद्धे इति यावत् । सदसत्—अस्ति नास्ति, चकारात्कर्ता सविशेषो निर्विशेष इत्यादिप्रकारैः स्वचित्तमायाप्रभवं यथा स्यात्तथा विकल्पयन्तः ये, ते जन्मभिस्तिर्यङ्मनुष्यजातिभिर्भवमुद्भवं, जरां, मृत्युं मरणं च संततं निरन्तरं नियान्ति नितरां गच्छ-

(१) श्वे. उ. ६.१९. (२) के. उ. ४. (३) बृ.उ.२.३. ६. (४) 'ल्वि'-पाठः ।

भवाभवत्वं तु न चेद्व्यवस्थिति-
र्न चास्य चान्यस्थितिजन्म नान्यथा ।
सतो ह्यसत्त्वादसतश्च सत्त्वतो
न च क्रियाकारकमित्यतोऽप्यजम् ॥ २० ॥

न्तीति योजना । स्वचित्तमायाप्रभवमिति भवविशेषणं वा—बुद्धिभ्रमकल्पितमित्यर्थः ॥ १९ ॥

सद्वस्तुनः कूटस्थाद्वयत्वं श्रुत्यादिप्रमाणसिद्धं, तदन्यथाविकल्पनं पुरुषापराधनिबन्धनमित्युक्तं, इदानीं तदेव युक्तितो द्रढयितुमुपक्रमते—भवाभवत्वमिति ।

तुश्चार्थः किंचेत्यर्थे । द्वैतमुत्पद्यमानस्वभावं, अनुत्पद्यमानस्वभावं, उभयस्वभावं वा ? नाद्यः, तदा सापेक्षत्वेन शुक्तिरजतादिवन्मिथ्यात्वापातात् । न द्वितीयः, सदातनत्वापत्तौ तदभावव्यवहारानुदयप्रसङ्गात् । न तृतीयः-एकस्य विरुद्धोभयस्वभावत्वायोगादित्यभिप्रेत्य चतुर्थमनूद्य दूषयति—भवाभवत्वमिति । भवश्चाभवश्च भवाभवौ, तयोर्भावः भवाभवत्वम् । अस्य द्वैतस्य भवाभवत्वं चेद्विरोधान्नेष्यते, तदाव्यवस्थितिरवस्थानं सत्त्वं न च स्यादिति शेषः । नह्युभयस्वभावविलक्षणं कचित्सदुपलभ्यमस्तीत्यर्थः । चापरं यदि द्वैतस्य जन्मेष्यते, तदा स्वत एव जन्मासंभवात्, अन्यस्मात्तद्वक्तव्यं; तदपि सत्स्वभावमसत्स्वभावं वा यतो द्वैतस्य जन्म ?—इत्याकाङ्क्षायां सर्वथाऽपि नोपपद्यत इत्याह—अन्यस्थितिजन्म नान्यथेति । अन्यस्मिन् स्थितौ—सति न जन्म—सतो न जन्मेत्यर्थः । अन्यथा—अन्या स्थितौ जन्म नेत्युपपद्यते—असतोऽपि न जन्मेत्यर्थः । पक्षद्वयेऽपि दूषणमाह—सत इति । सत उपादानत्वे विकारित्वापत्तौ विनाशादसत्त्वप्रसङ्गात्,

(१) यतोऽद्वैतस्य—पाठः । (२) °परज्यते-पाठः सर्वत्रोपलभ्यते ।

अकुर्वदिष्टं यदि वाऽस्य कारकं
न किंचिदन्यन्ननु नास्त्यकारकम् ।
सतोऽविशेषादसतश्च सद्युतौ
तुलाऽन्तयोर्यद्वदनिश्चयान्न हि ॥ २१ ॥

असतश्चोपादानत्वे असत्त्वतः सत्त्वापत्तेः । नहि शून्यमुपादानं स्यात्, तस्य कार्यप्यननुगमादित्यर्थः । तथाच वस्तुनः स्वभाववैपरीत्यायोगान्न सत्कार्यं द्वैतात्मना जायते, नाप्यसत्—इत्युत्पत्तिपक्षोऽपि दुर्निरूप इति भावः । एवमुत्पाद्योत्पादकयोः स्वभावनिरूपणे सत्युत्पत्तितत्कारकविशेषयोः सुतरामनिरूपिताकारता सिद्धेत्याह—न च क्रियाकारकमिति । उपसंहरति—अतोऽप्यजमिति । उक्तयुक्तितोऽप्यजं निर्विशेषमद्वयमात्मतत्त्वमित्यर्थः ॥ २० ॥

न च क्रियाकारकमित्युक्तमेव स्फुटयन्नजत्वं वस्तुनः साधयति—अकुर्वदिति ।

अस्य द्वैतजन्मनः कारकमकुर्वदिष्टं–निर्व्यापारं कारकमिष्टं चेदित्यर्थः । अन्यदिति द्वितीयपादस्थं पदमादाय यदि वाऽन्यदकुर्वदिष्टं वेत्यर्थः । तत्राद्ये अतिप्रसङ्गदोषमाह—न किंचिदन्यन्ननु नास्तीति । ननु निश्चितं किंचिदपि कारकं नास्तीति न, अपि तु सर्वं सर्वस्य सर्वदा कारकं स्यादित्यर्थः । द्वितीये कारकत्वानुपपत्तिदोषमाह—अकारकमिति । अक्रियस्य कुर्वत्त्वायोगात्, क्रियावत्त्वे नित्ये सदा कार्यप्रसङ्गात्, अनित्ये च क्रियावदन्तरापेक्षायामनवस्थाप्रसङ्गात्, तदनपेक्षायामात्माश्रयापत्तेः, कुर्वत्त्वपक्षे कारकत्वासिद्धिरित्यर्थः । अथवा—प्रथमे विकल्पे न किंचिदकारकमिति निराकरणपदान्वयः । सर्वमेव कारकं स्यादित्यर्थः । द्वितीयदूषणं—ननु नास्तीति । कुर्वतः

---

( १ ) तुला तयो.–नि. सा. पाठः ( २ ) सत्त्वतः—पाठः ।

न चेत्स इष्टः सदसद्विपर्ययः
कथं भवः स्यात्सदसद्व्यवस्थितौ ।
विभक्तमेतद्द्वयमप्यवस्थितं
न जन्म तस्माच्च मनो हि कस्यचित् ॥ २२ ॥

कारकत्वानिरूपणादित्यर्थः । कथमनिरूपणमिति चेत्, तत्र वक्तव्यं—किं सदवस्थं कुर्वेत्, असदवस्थं वा ? नोभयथापीत्याह—सतोऽविशेषादसतश्चेति । असतश्चाविशेषादिति संबध्यते । विशेषवत्त्वे वैरूप्यापत्तेः, अविशेषे च सदा कार्यं स्यान्न वा स्यादित्यर्थः । अथ सतोऽसतो वा पूर्वसत्त्वासत्त्वप्रच्युत्यवस्थायां कार्यं स्यादिति भवेत्कारकत्वमिति मतं, तत्रावस्थाप्रच्युतिकार्ययोर्यौगपद्यमभिमतं, क्रमो वा ? नाद्य इत्याह—सच्च्युताविति । उपलक्षणम्—असच्च्युतौ च, तुलाया अन्तयोः कोटयोर्यद्वन्नमनोन्नमनमनुभवतोः कार्यकारणभावो न निश्चीयते, तथा कार्यकारणस्वरूपभेदो नहि निश्चीयत इत्यर्थः । द्वितीयेऽनवस्थाप्रसङ्गः, अवस्थाप्रच्युतेरपि कार्यतया तस्या अपि तथाविधपूर्वकत्वापेक्षणादिति द्रष्टव्यम् ॥ २१ ॥

वस्तुनोऽवस्थान्तरापत्तिमभ्युपगम्यैतदवोचाम, वस्तुतस्तु सतोऽसतो वाऽवस्थान्तरं नोपपद्यत इति न कस्यापि कार्यत्वं कारणत्वं वा विद्यत इत्याह—न चेदिति ।

एवमुक्तदोषपरिहारात्सदसद्विपर्ययश्चेन्नेष्टः, तदा सदसतोः स्वरूपव्यवस्थितौ भवः कथं स्यात् ? कुतः ? यत एतद्द्वयमपि सच्चासच्च विभक्तं परस्परसंसर्गशून्यं व्यवस्थितं—न पूर्वापरीभावोऽनयोर्मिथो वा, अन्यापेक्षया

(१) 'सच्च्युत्यवस्थाया कार्यमिति'—अस्मात् पूर्वं क्वचित् अधिकः पाठः । 'व्यवस्थाया कार्यमिति'–नि॰ सा अधिकः पाठः । (२) 'दोषप॰'–पाठः ।

अथाऽभ्युपेत्याऽपि भवं तवेच्छतो
ब्रवीमि नार्थस्तव चेष्टितेन मे ।
न हानवृद्धी न यतः स्वतोऽसतो
भवोऽन्यतो वा यदि वाऽस्तिता तयोः ॥ २३ ॥

ध्रुवा ह्यनित्याश्च न चान्ययोगिनो
मिथश्च कार्ये न च तेषु युज्यते ।
अतो न कस्यापि हि किंचिदिष्यते
स्वयं च तत्त्वं न निरुक्तिगोचरम् ॥ २४ ॥

वेत्यर्थः । हे मनः, हि यस्मादेवं, तस्मान्न कस्यचिदपि जन्म विद्यत इत्य-यथार्थेत्यर्थः ॥ २२ ॥

भवतु वा जन्म यस्य कस्यापि, तथापि न मे ब्रह्मभूतस्य काचित् क्षति-र्वृद्धिर्वेत्याह—अथाऽभ्युपेत्याऽपीति ।

मनसश्चेष्टितेनात्मनो नार्थोऽस्तीत्येतत्प्रपञ्चयति—न हानवृद्धी इति । मे स्त इति योज्यम् । कुत ? इत्यत आह—न यत इति । यतो यस्मादसत आत्मन्यविद्यमानस्य हानस्य वृद्धेर्वा भव उद्भवः स्वतः, अन्यतो वा—हेत्वन्तराद्वा, न संभवतीति योजना । यदि वा तयोः—हानवृद्ध्योर्यथा-त्मन्यस्तिता, तथापि तव चेष्टितेन मे नार्थ इति संबन्धः । सिद्धेऽर्थे स्वचे-ष्टाया अकिंचित्करत्वादित्यर्थः ॥ २३ ॥

हीयमानोपचीयमानयोरात्मनि संबन्धानिरूपणाच्च न हानवृद्धी स्त इत्याह—ध्रुवा इति ।

ध्रुवाः स्थिराः—कूटस्थाः, अनित्याः क्षणिकाश्च पदार्था हि निश्चित-

समं तु तस्मात्सततं विभातव-
द्वयाद्विमुक्तं सदसद्विकल्पितात् ।
निरीक्ष्य युक्त्या श्रुतितस्तु बुद्धिमा-
नशेषनिर्वाणमुपैति दीपवत् ॥ २५ ॥

मन्ययोगिनो न भवन्ति, स्थिराणामविकारित्वात्, क्षणिकानामन्यसंबन्धकालपर्यन्तमवस्थानासंभवादित्यर्थः । मिथश्चान्योन्यमपि स्थिरास्थिरयोर्न संबन्धित्वं संभवति, संबन्धस्य संबन्धिसंबद्धत्वासंबद्धत्वविकल्पासहत्वादित्यर्थः । अत एव तेषु न कार्यं किमपि युज्यते घटते । संबन्धिताविकारभेदसत्त्वनिराकरणमुपसंहरति—अत इति । न किमपि कस्यापि संबन्धि परमार्थत इष्यत इत्यर्थः । ननु कथमात्मनोऽन्यसंबन्धाभावो वेदान्तवाक्यप्रमाणं प्रति प्रमेयत्वोपगमात् ? इत्यत आह—स्वयं चेति । तत्त्वमात्मस्वरूपं स्वयं निरुपाधिकं न निरुक्तेर्वाक्यस्य मुख्यया वृत्त्या गोचरो विषयः, शब्दप्रवृत्तिनिमित्तधर्माभावात्, किंतु लक्षणया शब्दस्य तत्र पर्यवसानमपेक्ष्य वेदान्तप्रमेयत्वं तस्याङ्गीकृतमिति न विरोध इत्यर्थः ॥ २४ ॥

तदेवं दुर्निरूपद्वैतसाक्षिणोऽसङ्गाद्वयानन्दरूपस्य स्वप्रकाशतया प्रकाशमानं स्वरूपं श्रुतियुक्तिभ्यां निश्चित्य पुमान् कृतकृत्यो भवतीति द्वैताभासनिराकरणफलमुपसंहारव्याजेनाह—समं त्विति ।

सत्त्वासत्त्वाभ्यां विकल्पिताद्द्वयाद्द्वैतावभासात् सततं विमुक्तमिति संबन्धः । सततं समं विभातवत्प्रकाशमानमिति योजना । दीपवत्सहसैवाशेषस्य बन्धस्य निर्वाणं परिसमाप्तिमुपैति—निरीक्षणनिर्वाणयोर्न व्यवधानं किमप्यस्तीत्यर्थः ॥ २५ ॥

अवेद्यमेकं यदनन्यवेदिनां
कुतार्किकाणां च सुवेद्यमन्यथा ।
निरीक्ष्य चेत्थं त्वगुणग्रहोऽगुणं
न याति मोहं ग्रहदोषमुक्तितः ॥ २६ ॥

अतोऽन्यथा न ग्रहनाश इष्यते
विमोहबुद्धेर्ग्रह एव कारणम् ।
ग्रहोऽप्यहेतुस्त्वनलस्त्वनिन्धनो
यथा प्रशान्तिं परमां तथा व्रजेत् ॥ २७ ॥

उक्तलक्षणस्यात्मतत्त्वस्य निरीक्षणं किं विषयत्वेन, अविषयत्वेन वा? इति जिज्ञासायामविषयत्वेनैवेत्याह—अवेद्यमिति ।

सर्वसाक्षिप्रत्यगात्मनोऽन्यत्र भवत्यद्वयं ब्रह्मेति ये वेदिनस्तेषामनन्यवेदिनामवेद्यम्, अन्यथा—भेदेन विषयतया वेदिनां कुतार्किकाणां सुवेद्यं परिच्छिन्नतया सुज्ञेयम्—शास्त्रयुक्तिविचारप्रयासं विना स्वमत्यनुसारेण सुखबोधमित्यर्थः, गुणेषु सत्त्वादिषु सविकारेषु ग्रहोऽभिनिवेशो यस्य स गुणग्रहः, न गुणग्रहोऽगुणग्रहः पुमान्—देहाद्यभिमानहीन इति यावत्, अगुणं निर्विशेषमात्मतत्त्वं, इत्थमवेद्यमित्याद्युक्तरूपं निरीक्ष्यालोच्य, चकारादपरोक्षतयानुभूय, मोहं न याति । तत्र हेतुमाह—ग्रहदोषमुक्तित इति । ग्रहरूपाद्दोषान्मुक्तितो मुक्तेः मोहहेत्वज्ञानतत्कार्याभावादित्यर्थः ॥ २६ ॥

कस्मादेवं महता प्रयत्नेनाविषयतया ब्रह्मात्मनो वेदनमिष्यते? तत्राह—अतोऽन्यथेति ।

अत उक्तविधादात्मज्ञानादन्यथाऽन्यस्माद्धेत्वन्तरात्, प्रकारान्तराद्वा न

विमथ्य वेदोदधितः समुद्धृतं
सुरैर्महाब्धेस्तु यथा महात्मभिः ॥
तथाऽमृतं ज्ञानमिदं हि यैः पुरा
नमो गुरुभ्यः परमीक्षितं च यैः ॥ २८ ॥

इति भेषजप्रकरणम् ।

## इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ सकलवेदोपनिषत्सारोपदेशसाहस्र्यां पद्यप्रबन्धः समाप्तः ॥

ग्रहनाशो मिथ्याज्ञानवृत्तिरिष्यते । "नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः । मास्तु तर्हि ग्रहनाश इत्यत आह—विमोहेति । ग्रहे सकारणे सति विमोहबुद्धेर्देहगेहादावहंममेत्याद्यभिनिवेशधियः सर्वानर्थबीजभूताया अनिवृत्तिः स्यादित्यनिर्मोक्षप्रसङ्ग इत्यर्थः । ननु भवतु ग्रहनाशान्मोहनाशः, ग्रहनाश एव कुतः ? ग्रहात्मग्रहानादिति चेत्, न—ज्ञानादज्ञानस्यैव निवृत्तिसंभवात्, ग्रहनिवृत्तिकारणमन्यद्देष्टव्यमित्याशङ्क्य, अज्ञानकार्यत्वाद्ग्रहस्य तन्निवृत्तौ स्वयमेव निवर्तत इति सदृष्टान्तमाह—ग्रहोऽपीति । अहेतुर्निरुपादानः उपादाननिवृत्तौ पुनः प्ररोहहेतुरभावात् परमा निरतिशया शान्तिमुपशान्तिं मोक्षलक्षणां व्रजेदित्यर्थः ॥ २७ ॥

प्रकरणसमाप्तौ गुरुनमस्काररूपं मङ्गलमाचरति—विमथ्येति ।

यथा [1]सुरैर्देवैर्महात्मभिर्महाब्धेः क्षीरसागरादमृतं समुद्धृतं पुरा पूर्वं, तथा यैर्महात्मभिः गुरुभिर्वेदरूपादुदधितो विमथ्याऽऽलोड्येदं प्रकरणरूपेण

(१) श्वे. उ. ३. ८., ६. १५, तै. आ. ३. १३ ; 'नान्यः पन्था अयनाय विद्यते'—तै. आ. ३. १२.

